# PREFACE.

This edition of the Agni Puráṇa was originally undertaken by the late Paṇḍit Harachandra Vidyábhushaṇa whose thorough knowledge of the different branches of Sanskrit learning treated of in the work rendered him peculiarly fitted to do it justice. On his death, at the close of the year 1871, just after the publication of the third fasciculus, the work had to be left in abeyance, until about four months ago, when it was made over to the writer of this note. The Paṇḍit, like the generality of scholars of his country, was very averse to note down *variæ lectiones:* he thought such a course was calculated to injure the authenticity of the text, and preferred to rely on his own discretion in reconciling differences and discrepancies caused by the errors of transcribers, than to be bound by his manuscripts, and, by quoting differences of reading, leave it uncertain which was the correct text. At the earnest request of the present editor, he noted a few different readings only, such as he thought were really material, but would not on any account copy all. To persons believing in the inspired character of the work, and relying on it as a divine revelation, such a course was excusable. But the present editor could not adopt it, as he felt that he would be wanting in faith to the public if he allowed himself to become the arbiter of what really was the original reading of his text, except in the cases of obvious errors of spelling and grammar, and placed before them revisions without reference to his MSS.—revisions which would practically amount to tampering with the text. The last fasciculus has, therefore, been overloaded with footnotes to preserve the character of the different MSS. consulted, and to leave future scholars to judge for themselves. This has produced a dissimilarity, which, under the peculiar circumstance of the work being printed under the superintendence of two independent editors, could not be helped.

The MSS. consulted in preparing the text for the press include :—

I, क. Purchased at Benares for the Asiatic Society of Bengal. 386 folia, each 14×5½ inches, having eleven lines on each page. It has no date, but it is apparently a modern copy ; it is badly written in the Nágari character, and is very incorrect.

II. ख. From the Honorable Rájá Jotindramohan Tagore's Library. 330 folia, each 19½ × 7 inches, and bearing 10 lines on each page. It is neatly written in the *trivalli* form in the Bengali character. It has no date, but apparently it is a modern copy. It is complete and generally correct.

III. ग. From Rájá Komalkrishṇa Bahadur's Library. 395 folia, each 18×3 inches, bearing on each page from 6 to 8 lines of writing in the Bengali character; no date, apparently old, but corrupt.

IV. घ. From Rájá Rájendranáráyaṇa Báhádur's Library. 429 folia, each 19×3 inches of yellow paper mounted on foolscap; the whole bound in a volume. There are six lines of writing in the Bengali character on each page. This MS. bears date 1595 S'aka, and is complete, but incorrect.

V. ङ. From the Library of the Sanskrit College of Calcutta. 377 folia, each 14×9½ inches ; bound in a volume, written in a bold hand, but modern and incorrect.

VI. च. From ditto. a corrupt MS.

VII. छ. From Bábu Subaldás Mallika's Library, Calcutta. 278 folia, each 18×6½ inches, having on each page 11 lines of writing in the Bengali character. No date, probably about a hundred years old, carefully revised and generally correct.

VIII. ज. From Bábu Pramadádása Mitra of Benares. 189 folia, each 13×6½ inches, and having on each page eighteen lines of writing in the Nágari character. No date ; apparently somewhat older than the last ; generally correct, but not revised, and full of lacunæ about the latter part.

IX. झ. From Mr. Lallubhái Motilál of Baroda, obtained through Dr. G. Buhler of Bombay. 372 folia, each 12½ x 5½ inches, having on each page ten lines of neat writing in the Nágari character ; unrevised and incorrect.

The last three MSS were obtained after the first three fasciculi of the work had been published.

An abstract of the contents of the work will be annexed to the last volume.

MANIKTOLLAH }
25*th.* *Decr* 1873. }

R. M.

# अथाग्निपुराणानुक्रमणिका।



ओं नमो भगवते वासुदेवाय।

॥॥

# अग्निपुराणम्।

अथ प्रथमोऽध्यायः।

ग्रन्थ प्रस्तावना।

श्रियं(१) सरस्वतीं गौरीं गणेशं स्कन्दमीश्वरम्।
ब्रह्माणं वह्निमिन्द्रादीन्वासुदेवं नमाम्यहम्॥ १ ॥
नैमिषे हरिमीजाना ऋषयः शौनकादयः।
तीर्थयात्राप्रसङ्गेन स्वागतं सूतमब्रुवन्॥ २ ॥
ऋषय ऊचुः। सूत त्वं पूजितोऽस्माभिः सारात्सारं वदस्व नः।
येन विज्ञानमात्रेण(२) सर्व्वज्ञत्वं प्रजायते॥ ३ ॥
सूत उवाच। सारात्सारो हि भगवान् विष्णुः सर्गादिकृद्विभुः।
ब्रह्माहमस्मि तं ज्ञात्वा सर्व्वज्ञत्वं प्रजायते॥ ४ ॥
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्(३)।
द्वे विद्ये वेदितव्ये हि इति चाथर्वणी श्रुतिः॥ ५ ॥
अहं शुकश्च पैलाद्या गत्वा वदरिकाश्रमम्।
व्यासं नत्वा पृष्टवन्तः सोऽस्मान् सारमथाब्रवीत्(४)॥
व्यास उवाच। शुकाद्यैः शृणु सूत त्वं वशिष्ठो मां यथाऽब्र०
ब्रह्मसारं हि पृच्छन्तं मुनिभिश्च परात्परम्॥ ७ ॥

१ लक्ष्मीमिति घ चिह्नितपुस्तकपाठः।
२ विज्ञातमात्रेण इति घ,चिह्नितपुस्तकपाठः।
३ अपरञ्च परञ्च यदिति ख, चिह्नितपुस्तकपाठः।
४ यदब्रवीदिति ख, घ, चिह्नितपुस्तकद्वयपाठः।

वसिष्ठ उवाच । द्वैविध्यं ब्रह्म(१)वक्ष्यामि शृणु व्यासाखिलानुगम्(२) ।
यथाऽग्निर्मां पुरा प्राह मुनिभिर्दैवतैः सह ॥ ८ ॥
पुराणं परमाग्नेयं ब्रह्मविद्याक्षरं परम् ।
ऋग्वेदाद्यपरं ब्रह्म सर्वदेवसुखावहम्(३) ॥ ९ ॥
अग्निनोक्तं पुराणं यदाग्नेयं ब्रह्मसम्मितम्(४) ।
भुक्तिमुक्तिप्रदं दिव्यं(५) पठतां शृण्वतां नृणाम् ॥ १० ॥
कालाग्निरूपिणं विष्णुं ज्योतिर्ब्रह्म परात्परम् ।
मुनिभिः पृष्टवान् देवं पूजितं ज्ञानकर्मभिः ॥ ११ ॥
सिष्ठ उवाच । संसारसागरोत्तारनावं ब्रह्मेश्वरं वद ।
विद्यासारं यद्विदित्वा(६) सर्वज्ञो जायते नरः ॥ १२ ॥
वाच । विष्णुः कालाग्निरुद्रोऽहं(७)विद्यासारं वदामि ते ।
विद्यासारं पुराणं(८) यत्सर्वं सर्वस्य कारणम् ॥ १३ ॥
सर्गस्य प्रतिसर्गस्य वंशमन्वन्तरस्य च ।
ानुचरितादेश्च, मत्स्यकूर्मादिरूपधृक् ॥ १४ ॥
विद्ये भगवान् विष्णुः परा चैवापरा च ह ।
जुःसामाथर्वाख्या वेदाङ्गानि च षड् द्विज(९) ॥ १५ ॥

---

दिको
इति घ, चिह्नितपुस्तकपाठः ।
ति ख, चिह्नितपुस्तकपाठः ।
ति ख, चिह्नितपुस्तकपाठः ।
घ, चिह्नितपुस्तकद्वयपाठः ।
तपुस्तकपाठः ।
चिह्नितपुस्तकपाठः ।
, चिह्नितपुस्तकपाठः ।
घ, चिह्नितपुस्तकद्वयपाठः ।
पुस्तकपाठः ।

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषाकृतिः ।
छन्दोऽभिधानं मीमांसा धर्म्मशास्त्रं पुराणकम् ॥ १६ ॥
न्यायवैद्यकगान्धर्वं धनुर्वेदोऽर्थशास्त्रकम् ।
अपरेयं परा विद्या यया ब्रह्माभिगम्यते(१) ॥ १७ ॥
यत्तदद्दश्यमग्राह्यमगोत्रचरणं ध्रुवम् (२) ।
विष्णुनोक्तं यथा मह्यं देवेभ्यो ब्रह्मणा पुरा ।
तथा ते कथयिष्यामि हेतुं मत्स्यादिरूपिणम् ॥ १८ ॥

इत्यादिमहापुराणे आग्नेये प्रश्नो नाम
प्रथमोऽध्यायः ॥ १ ॥

## अथ द्वितीयोऽध्यायः ।

### मत्स्यावतारवर्णनं ।

वशिष्ठ उवाच । मत्स्यादिरूपिणं विष्णुं ब्रूहि सर्गादिकारणम् ।
पुराणं ब्रह्म चाग्नेयं यथा विष्णोः पुरा श्रुतम् ॥ १ ॥
अग्निरुवाच । मत्स्यावतारं वक्ष्येऽहं वसिष्ठ शृणु वै हरेः ।
अवतारक्रिया दुष्टनष्टेर सत्पालनाय हि ॥ २ ॥
आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः ।
समुद्रोपप्लुतास्तत्र लोका भूरादिका मुने ॥ ३ ॥
मनुर्वैवस्वतस्तेपे तपो वै भुक्तिमुक्तये ।
एकदा कृतमालायां कुर्वतो जलतर्पणम् ॥ ४ ॥
तस्याञ्जल्युदके मत्स्यः स्वल्प एकोऽभ्यपद्यत ।
क्षेप्तुकामं जले प्राह न मां क्षिप नरोत्तम(१) ॥ ५ ॥

---

१ ब्रह्माधिगम्यते इति ख, ग, घ, चिह्नितपुस्तकत्रयपाठः ।

२ अगोत्रचरणं परमिति ग, चिह्नितपुस्तकपाठः ।

३ न मां क्षिप नृपोत्तम इति ख, ग, घ, चिह्नितपुस्तकत्रयपाठः ।

ग्राहादिभ्यो भयं मेऽद्य(१) तच्छ्रुत्वा कलशेऽक्षिपत् ।
स तु वृद्धः पुनर्मत्स्यः प्राह तं देहि मे बृहत् ॥ ६ ॥
स्थानमेतद्वचः श्रुत्वा राजाऽथोदञ्चनेऽक्षिपत् ।
तत्र वृद्धोऽब्रवीद्भूपं पृथु देहि पदं मनो ॥ ७ ॥
सरोवरे पुनः क्षिप्तो ववृधे तत्प्रमाणवान् ।
ऊचे देहि बृहत् स्थानं(२) प्राक्षिपच्चाम्बुधौ ततः(३) ॥ ८ ॥
लक्षयोजनविस्तीर्णः क्षणमात्रेण सोऽभवत् ।
मत्स्यं तमद्भुतं दृष्ट्वा विस्मितः प्राब्रवीन्मनुः ॥ ९ ॥
को भवान्ननु वै विष्णु(४) र्नारायण नमो ऽस्तु ते ।
मायया मोहयसि मां किमर्थं त्वं जनार्दन ॥ १० ॥
मनुनोक्तोऽब्रवीन्मत्स्यो मनुं वै पालने रतम् ।
अवतीर्णो भवायास्य जगतो दुष्टनष्टये ॥ ११ ॥
सप्तमे दिवसे त्वब्धिः प्लावयिष्यति वै जगत् ।
उपस्थितायां नावि त्वं बीजादीनि विधाय च ॥ १२ ॥
सप्तर्षिभिः परिवृतो निशां ब्राह्मीं चरिष्यसि ।
उपस्थितस्य मे शृङ्गे निबध्नीहि महाहिना ॥ १३ ॥
इत्युक्त्वान्तर्दधे मत्स्यो(५) मनुः कालप्रतीक्षकः(६) ।
स्थितः समुद्र उद्वेले नावमारुरुहे तदा ॥ १४ ॥
एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः ।

१ मेऽत्र इति ख, चिह्नितपुस्तकपाठः ।
२ पुनः स्थानमिति ख, चिह्नितपुस्तकपाठः ।
३ अम्बुधौ मनुरिति ख, घ, चिह्नितपुस्तकद्वयपाठः ।
४ ननु विष्णुस्त्वमिति ख, ग, घ, चिह्नितपुस्तकत्रयपाठः ।
५ इत्युक्त्वान्तर्हितो मत्स्य इति घ, चिह्नितपुस्तकपाठः ।
६ इत्युक्त्वा देवमत्स्याख्या बृहत्कारणसङ्गत इति ग, चिह्नितपुस्तकपाठः ।

नावमब्बन्ध तच्छृङ्गे(१) मत्स्याख्यं च पुराणकम् ॥ १५ ॥
शुश्राव मत्स्यात्पापघ्नं संस्तुवन् स्तुतिभिश्च तं(२)।
ब्रह्मवेदप्रहर्त्तारं हयग्रीवञ्च दानवम् ॥ १६ ॥
अवधीत्, वेदमन्त्राद्यान् पालयामास केशवः।
प्राप्ते कल्पेऽथ वाराहे कूर्म्मरूपोऽभवद्धरिः ॥ १७ ॥

इत्यादिमहापुराणे आग्नेये मत्स्यावतारो नाम
द्वितीयोऽध्यायः ॥ २ ॥

## अथ तृतीयोऽध्यायः।

### कूर्म्मावतारवर्णनं।

अग्निरुवाच। वक्ष्ये कूर्म्मावतारञ्च श्रुत्वा पापप्रणाशनम्(३)।
पुरा देवासुरे युद्धे दैत्यैर्देवाः पराजिताः ॥ १ ॥
दुर्व्वाससश्च शापेन निश्रीकाश्चाभवंस्तदा।
स्तुत्वा क्षीराब्धिगं(४) विष्णुमूचुः पालय चासुरात् ॥ २ ॥
ब्रह्मादिकान् हरिः प्राह सन्धिं कुर्वन्तु चासुरैः(५)
क्षीराब्धिमथनार्थं हि अमृतार्थं श्रियेऽसुराः ॥ ३ ॥
अरयोऽपि हि सन्धेयाः सति कार्य्यार्थगौरवे।
युष्मानमृतभाजो हि कारयामि(६) न दानवान् ॥ ४ ॥

---

१ नावं बध्वा तस्य शृङ्गे इति ख, घ, चिह्नितपुस्तकद्वयपाठः।
२ स्तुतिभिर्मनुरिति ग, चिह्नितपुस्तकपाठः।
३ संश्रुतं पापनाशनमिति ख, ग, घ चिह्नितपुस्तकत्रयपाठः।
४ सुरा क्षीराब्धिगमिति ग, घ, चिह्नितपुस्तकद्वयपाठः।
५ सन्धिं कुरुत चासुररिति ग, चिह्नितपुस्तकपाठः।
६ भाजो हि करिष्यामि इति ख, चिह्नितपुस्तकपाठः।

मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु(१) वासुकिम् ।
क्षीराब्धिं मत्सहायेन निर्मथध्वमतन्द्रिताः ॥ ५ ॥
विष्णूक्तां संविदं कृत्वा दैत्यैः क्षीराब्धिमागताः ।
ततो मथितुमारब्धाः यतः पुच्छन्ततः सुराः ॥ ६ ॥
फणिनिःश्वाससन्तप्ता(२) हरिणाप्यायिताः सुराः ।
मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत् ॥ ७ ॥
कूर्मरूपं समास्थाय दध्रे विष्णुश्च मन्दरम् ।
क्षीराब्धेर्मथ्यमानाच्च विषं हालाहलं ह्यभूत् ॥ ८ ॥
हरेण धारितं कण्ठे नीलकण्ठस्ततोऽभवत्(३) ।
ततोऽभूद्वारुणी देवी पारिजातस्तु कौस्तुभः ॥ ९ ॥
गावश्चाप्सरसो दिव्या लक्ष्मीर्देवी हरिङ्गता ।
पश्यन्तः सर्वदेवास्तां स्तुवन्तः सश्रियोऽभवन् ॥ १० ॥
ततो धन्वन्तरिर्विष्णुरायुर्वेदप्रवर्त्तकः(४) ।
बिभ्रत् कमण्डलुम्पूर्णममृतेन समुत्थितः ॥ ११ ॥
अमृतं तत्कराद्दैत्याः सुरेभ्योऽर्द्धं प्रदाय च ।
गृहीत्वा जग्मुर्जम्भाद्याऽविष्णुः स्त्रीरूपधृक् ततः ॥ १२ ॥
तां दृष्ट्वा रूपसम्पन्नां दैत्याः प्रोचुर्विमोहिताः ।
भव भार्याऽमृतं गृह्य पाययास्मान् वरानने ॥ १३ ॥
तथेत्युक्त्वा हरिस्तेभ्यो गृहीत्वाऽपाययत्सुरान् ।
चन्द्ररूपधरो राहुः पिबंश्चार्केन्दुनार्पितः(५) ॥ १४ ॥

---

१ रज्जुं कृत्वा तु इति ख, चिह्नितपुस्तकपाठः ।
२ निःश्वाससंस्नाना इति ख, घ, चिह्नितपुस्तकद्वयपाठः ।
३ ततो हर इति ग, घ, चिह्नितपुस्तकद्वयपाठः ।
४ प्रदर्शक इति ख, ग, चिह्नितपुस्तकद्वयपाठः ।
५ चार्कन्दुसूचित इति ख चिह्नितपुस्तकपाठः ।

हरिणाप्यरिणा छिन्नं(१) स राहुस्तच्छिरः पृथक् ।
कृपयाऽमरतां नीतं वरदं हरिमब्रवीत् ॥ १५ ॥
राहुर्मत्तस्तु चन्द्रार्कौ प्राप्स्येते ग्रहणं ग्रहः ।
तस्मिन् काले च यद्दानं दास्यन्ति, स्यात्तदक्षयम्(२) ॥ १६ ॥
तथेत्याहाथ तं विष्णुस्ततः सर्व्वैः सहामरैः ।
स्त्रीरूपं सम्परित्यज्य हरेणोक्तः प्रदर्शय ॥ १७ ॥
दर्शयामास रुद्राय स्त्रीरूपं भगवान् हरिः ।
मायया मोहितः शम्भुः गौरीं त्यक्त्वा स्त्रियङ्गतः ॥ १८ ॥
नग्न उन्मत्तरूपोऽभूत् स्त्रियः केशानधारयत्(३) ।
अगादिमुच्य केशान् स्त्री अन्वधावच्च ताङ्गताम् ॥ १९ ॥
स्खलितं तस्य वीर्य्यं कौ यत्र यत्र हरस्य हि ।
तत्र तत्राभवत् क्षेत्रं लिङ्गानां कनकस्य च(४) ॥ २० ॥
मायेयमिति तां ज्ञात्वा स्वरूपस्थोऽभवद्धरः ।
शिवमाह हरी रुद्र जिता माया त्वया हि मे ॥ २१ ॥
न जेतुमेनां शक्तो मे त्वदृतेऽन्यः पुमान् भुवि ।
अप्राप्याथामृतं दैत्या देवैर्युद्धे निपातिताः ।
त्रिदिवस्थाः सुराश्चासन् यः पठेत् त्रिदिवं व्रजेत् ॥ २२ ॥

इत्यादिमहापुराणे आग्नेये कूर्म्मावतारो नाम
तृतीयोऽध्यायः ॥ ३ ॥

---

१ हरिणा चासिना छिन्नमिति ग, चिह्नितपुस्तकपाठः ।

२ भवेयं ये तदा दानं दास्यन्ते स्यात्तदक्षयमिति ख, चिह्नितपुस्तकपाठः ।

३ मायया मोहितो रुद्रस्तरसा तां जगाम ह । मोहिनीं प्राप्य मतिमान् स्त्रियः केशानधारयदिति ग, चिह्नितपुस्तकपाठः ।

४ तत्र तत्र महातीर्थं क्षेत्राणामुत्तमोत्तममिति ग, चिह्नितपुस्तकपाठः ।

# अथ चतुर्थोऽध्यायः।

## वराहाद्यवतारवर्णनं।

अग्निरुवाच। अवतारं वराहस्य वक्ष्येऽहं पापनाशनम्।
हिरण्याक्षोऽसुरेशोऽभूत्(१) देवान् जित्वा(२)दिवि स्थितः॥ १॥
देवैर्गत्वा स्तुतो विष्णुर्यज्ञरूपो वराहकः।
अभूत्, तं दानवं हत्वा दैत्यैः साकञ्च कण्टकम्(३)॥ २॥
धर्मदेवादिरक्षाकृत् ततः सोऽन्तर्दधे हरिः।
हिरण्याक्षस्य वै भ्राता हिरण्यकशिपुस्तथा(४)॥ ३॥
जितदेवयज्ञभागः सर्वदेवाधिकारकृत्।
नारसिंहवपुः कृत्वा तं जघान सुरैः सह॥ ४॥
स्वपदस्थान् सुरांश्चक्रे नारसिंहः सुरैः स्तुतः।
देवासुरे पुरा युद्धे बलिप्रभृतिभिः सुराः॥ ५॥
जिताः स्वर्गात्परिभ्रष्टा हरिं वै(५) शरणं गताः।
सुराणामभयं दत्वा अदित्या कश्यपेन च॥ ६॥
स्तुतोऽसौ वामनो भूत्वा ह्यदित्यां स क्रतुं ययौ।
बलेः श्रीयजमानस्य, राजद्वारेऽगृणात् श्रुतिं॥ ७॥
वेदान् पठन्तं तं श्रुत्वा वामनं वरदोऽब्रवीत्।
निवारितोऽपि शुक्रेण बलिर्ब्रूहि यदिच्छसि॥ ८॥
तत्तेऽहं सम्प्रदास्यामि, वामनो बलिमब्रवीत्।

१ सुरेन्द्रोभूदिति घ, चिह्नितपुस्तकपाठः।

२ सुरान् जित्वेति ख, चिह्नितपुस्तकपाठः।

३ सार्द्धन्तु कण्टकमिति ख, घ, चिह्नितपुस्तकद्वयपाठः।

४ हिरण्यकशिपुस्तदेति घ, चिह्नितपुस्तकपाठः।

५ हरिन्ते इति ख, ग, घ, चिह्नितपुस्तकत्रयपाठः।

पदत्रयं हि गुर्वर्थं[1] देहि दास्ये तमब्रवीत् ॥ ९ ॥
तोये तु पतिते हस्ते वामनोऽभूदवामनः ।
भूर्लोकं स भुवर्लोकं स्वर्लोकञ्च पदत्रयम् ॥ १० ॥
चक्रे बलिञ्च सुतलं तच्छक्राय ददौ हरिः ।
शक्रो देवैर्हरिं स्तुत्वा भुवनेशः सुखी त्वभूत् ॥ ११ ॥
वक्ष्ये परशुरामस्य चावतारं शृणु द्विज ।
उद्धतान् क्षत्रियान् मत्वा भूभारहरणाय सः ॥ १२ ॥
अवतीर्णो हरिः शान्त्यै देवविप्रादिपालकः ।
जमदग्ने रेणुकायां भार्गवः शस्त्रपारगः ॥ १३ ॥
दत्तात्रेयप्रसादेन कार्त्तवीर्यो नृपस्त्वभूत् ।
सहस्रबाहुः सर्वोर्वीपतिः स मृगयां गतः ॥ १४ ॥
श्रान्तो[2] निमन्त्रितोऽरण्ये मुनिना जमदग्निना ।
कामधेनुप्रभावेण भोजितः सबलो नृपः ॥ १५ ॥
अप्रार्थयत् कामधेनुं[3] यदा स न ददौ तदा ।
हृतवानथ रामेण शिरश्छित्त्वा निपातितः ॥ १६ ॥
युद्धे परशुना राजा धेनुः स्वाश्रममाययौ[4] ।
कार्त्तवीर्यस्य पुत्रैस्तु जमदग्निर्निपातितः ॥ १७ ॥
रामे वनं गते वैरादथ रामः समागतः ।
पितरं निहतं दृष्ट्वा पितृनाशाभिमर्षितः ॥ १८ ॥
त्रिःसप्तकृत्वः पृथिवीं निःक्षत्रामकरोद्विभुः ।
कुरुक्षेत्रे पञ्च कुण्डान् कृत्वा सन्तर्प्य वै पितॄन् ॥ १९ ॥

---

१ मे गुर्वर्थमिति ख. चिह्नितपुस्तकपाठः ।
२ भ्रान्त इति ख, चिह्नितपुस्तकपाठः ।
३ अप्रार्थयद्धोमधेनुमिति ख, ग, चिह्नितपुस्तकद्वयपाठः ।
४ सधेनुः स्वाश्रमं ययौ इति ख, घ, ङ चिह्नितपुस्तकत्रयपाठः ।

काश्यपाय महीं दत्वा महेन्द्रे पर्वते स्थितः ।
कूर्मस्य च वराहस्य नृसिंहस्य च वामनं ।
अवतारं च रामस्य श्रुत्वा याति दिवं नरः ॥ २० ॥

इत्यादिमहापुराणे आग्नेये वराहनृसिंहाद्यवतारो नाम
चतुर्थोऽध्यायः ।

---

## अथ पञ्चमोऽध्यायः ।

### श्रीरामावतारवर्णनम् ।

अग्निरुवाच । रामायणमहं वक्ष्ये नारदेनोदितं पुरा ।
वाल्मीकये यथा तद्वत् पठितं भुक्तिमुक्तिदम् ॥ १ ॥
नारद उवाच । विष्णुनाभ्यब्जजो ब्रह्मा मरीचिर्ब्रह्मणः सुतः ।
मरीचेः कश्यपस्तस्मात् सूर्यो वैवस्वतो मनुः ॥ २ ॥
ततस्तस्मात्तथेक्ष्वाकुस्तस्य वंशे ककुत्स्थकः ।
ककुत्स्थस्य रघुस्तस्मादजो दशरथस्ततः ॥ ३ ॥
रावणादेर्बधार्थाय चतुर्द्धाभूत् स्वयं हरिः ।
राज्ञो दशरथाद्रामः कौशल्यायां बभूव ह ॥ ४ ॥
कैकेय्यां भरतः पुत्रः सुमित्रायाञ्च लक्ष्मणः ।
शत्रुघ्न ऋष्यशृङ्गेण तासु सन्दत्तपायसात् ॥ ५ ॥
प्राशिताद्यज्ञसंसिद्धाद्रामाद्याश्च समाः पितुः ।
यज्ञविघ्नविनाशाय विश्वामित्रार्थितो नृपः ॥ ६ ॥
रामं सम्प्रेषयामास लक्ष्मणं मुनिना सह ।

रामो गतोऽस्त्रशस्त्राणि शिक्षितस्ताडकान्तकृत्(१) ॥ ७ ॥
मारीचं मानवास्त्रेण मोहितं दूरतोऽनयत् ।
सुबाहुं यज्ञहन्तारं सबलञ्चावधीत् बली ॥ ८ ॥
सिद्धाश्रमनिवासी च विश्वामित्रादिभिः सह ।
गतः क्रतुं मैथिलस्य द्रष्टुञ्चापं सहानुजः ॥ ९ ॥
शतानन्दनिमित्तेन विश्वामित्रप्रभावतः ।
रामाय कथितो राज्ञा समुनिः पूजितः क्रतौ ॥ १० ॥
धनुरापूरयामास लीलया स बभञ्ज तत्(२) ।
वीर्यशुल्काञ्च जनकः सीतां कन्यान्त्वयोनिजाम् ॥ ११ ॥
ददौ रामाय रामोऽपि पित्रादौ हि समागते ।
उपयेमे जानकीन्तामुर्मिलां लक्ष्मणस्तथा(३) ॥ १२ ॥
श्रुतकीर्तिं माण्डवीञ्च कुशध्वजसुते तथा ।
जनकस्यानुजस्यैते शत्रुघ्नभरतावुभौ ॥ १३ ॥
कन्ये द्वे उपयेमाते जनकेन सुपूजितः ।
रामोऽगात्सवशिष्ठाद्यैर्जामदग्न्यं विजित्य च ॥
अयोध्यां भरतोऽप्यागात्(४) सशत्रुघ्नो युधाजितः ॥ १४ ॥

इत्यादिमहापुराणे आग्नेये रामायणे बालकाण्डवर्णनं नाम पञ्चमोऽध्यायः ।

---

१ ताड़कापहृदिति ख, ग, ङ, चिह्नितपुस्तकत्रयपाठः ।
२ बभञ्ज तद्दृढ धनुरिति ग, चिह्नितपुस्तकपाठः ।
३ तदा इति ख, घ, ङ, चिह्नितपुस्तकत्रयपाठः ।
४ भरतोथागात् इति ख, ग, घ, चिह्नितपुस्तकत्रयपाठः ।

# अथ षष्ठोऽध्यायः ।

## श्रीरामावतारवर्णनं ।

नारद उवाच । भरतेऽथ गते रामः पित्रादीनभ्यपूजयत् ।
राजा दशरथो राममुवाच शृणु राघव ॥ १ ॥
गुणानुरागाद्राज्ये त्वं प्रजाभिरभिषेचितः ।
मनसाऽहं प्रभाते ते यौवराज्यं ददामि ह ॥ २ ॥
रात्रौ त्वं सीतया सार्धं संयतः सुव्रतो भव ।
राज्ञश्च मन्त्रिणश्चाष्टौ सवसिष्ठास्तथाब्रुवन् ॥ ३ ॥
दृष्टिर्जयन्तो विजयः सिद्धार्थो राष्ट्रवर्धनः(१) ।
अशोको धर्मपालश्च सुमन्त्रः सवसिष्ठकः(२) ॥ ४ ॥
पित्रादिवचनं श्रुत्वा तथेत्युक्त्वा स राघवः ।
स्थितो देवार्चनं कृत्वा कौशल्यायै निवेद्य तत् ॥ ५ ॥
राजोवाच वसिष्ठादीन् रामराज्याभिषेचने ।
सम्भारान् सम्भवन्तु स्म इत्युक्त्वा कैकयीङ्गतः ॥ ६ ॥
अयोध्यालङ्कृतिं दृष्ट्वा ज्ञात्वा रामाभिषेचनं ।
भविष्यतीत्याचचक्षे कैकेयीं मन्थरा सखी(३) ॥ ७ ॥
पादौ गृहीत्वा रामेण कर्षिता सापराधतः ।
तेन वैरेण सा रामवनवासञ्च काङ्क्षति ॥ ८ ॥
कैकयि त्वं समुत्तिष्ठ रामराज्याभिषेचनं ।
मरणं तव पुत्रस्य मम ते नात्र संशयः ॥ ९ ॥

---

१ राज्यवर्द्धन इति ख, ग, घ, चिह्नितपुस्तकत्रयपाठः ।

२ सुमन्त्रश्च वशिष्ठक इति ख,ग,घ, ङ, चिह्नितपुस्तकचतुष्टयपाठः ।

३ मन्थरामती इति ख, ङ, चिह्नितपुस्तकद्वयपाठः मन्थरा सतीमिति ग, चिह्नितपुस्तकपाठः ।

कुब्जयोक्तञ्च तच्छ्रुत्वा एकमाभरणं ददौ ।
उवाच मे यथा रामस्तथा मे भरतः सुतः ॥ १० ॥
उपायन्तु न पश्यामि भरतो येन राज्यभाक् ।
कैकेयीमब्रवीत् क्रुद्धा हारं त्यक्त्वाऽथ मन्थरा ॥ ११ ॥
बालिशे रक्ष भरतमात्मानं माञ्च राघवात् ।
भविता राघवो राजा राघवस्य ततः सुतः ॥ १२ ॥
राजवंशस्तु कैकेयि भरतात् परिहास्यते ।
देवासुरे पुरा युद्धे शम्बरेण हताः सुराः ॥ १३ ॥
रात्रौ भर्त्ता गतस्तत्र रक्षितो विद्यया त्वया ।
वरद्वयन्तदा प्रादाद्याचेदानीं नृपञ्च तत् ॥ १४ ॥
रामस्य च वनेवासं नव वर्षाणि पञ्च च ।
यौवराज्यञ्च भरते तदिदानीं प्रदास्यति ॥ १५ ॥
प्रोत्साहिता कुब्जया सा अनर्थे चार्थदर्शिनी ।
उवाच सदुपायं मे कच्चित्तं(१) कारयिष्यति ॥ १६ ॥
क्रोधागारं प्रविश्याऽथ पतिता भुवि मूर्छिता ।
द्विजादीनर्चयित्वाऽथ राजा दशरथस्तदा ॥ १७ ॥
ददर्श कैकयीं रुष्टामुवाच कथमीदृशी ।
रोगार्त्ता किं भयोद्विग्ना किमिच्छसि करोमि तत् ॥ १८ ॥
येन रामेण हि विना न जीवामि मुहूर्त्तकम् ।
शपामि तेन कुर्यां वै वाञ्छितं तव सुन्दरि ॥ १९ ॥
सत्यं ब्रूहीति सोवाच नृपं मह्यं ददासि चेत् ।
वरद्वयं पूर्वदत्तं सत्यात् त्वं देहि मे नृप ॥ २० ॥
चतुर्द्दशसमाः रामो वने वसतु संयतः ।

१ कथितमिति ख, ङ चिह्नितपुस्तकद्वयपाठः ।

सम्भारैरेभिरद्यैव भरतोऽत्राभिषेच्यताम् ॥ २१ ॥
विषं पीत्वा मरिष्यामि दास्यसि त्वं न चेन्नृप ।
तच्छ्रुत्वा मूर्च्छितो भूमौ वज्राहत इवापतत् ॥ २२ ॥
मुहूर्त्ताच्चेतनां प्राप्य कैकेयीमिदमब्रवीत् ।
किं कृतं तव रामेण मया वा पापनिश्चये ॥ २३ ॥
यन्मामेवं ब्रवीषि त्वं सर्वलोकाप्रियङ्करि ।
केवलं त्वत्प्रियं कृत्वा भविष्यामि सुनिन्दितः ॥ २४ ॥
या त्वं भार्या(१) कालरात्री भरतो नेदृशः सुतः ।
प्रशाधि विधवा राज्यं मृते मयि गते सुते ॥ २५ ॥
सत्यपाशनिबद्धस्तु राममाहूय चाब्रवीत् ।
कैकय्या वञ्चितो राम राज्यं कुरु निगृह्य मां ॥ २६ ॥
त्वया वने तु वस्तव्यं कैकेयीभरतो नृपः ।
पितरञ्चैव कैकेयीं नमस्कृत्य प्रदक्षिणं ॥ २७ ॥
कृत्वा नत्वा च कौशल्यां समाश्वास्य सलक्ष्मणः ।
सीतया भार्यया सार्द्धं सरथः ससुमन्त्रकः ॥ २८ ॥
दत्वा दानानि विप्रेभ्यो दीनानाथेभ्य एव सः ।
मातृभिश्चैव विप्राद्यैः शोकार्त्तैर्निर्गतः पुरात् ॥ २९ ॥
उषित्वा तमसातीरे रात्रौ पौरान् विहाय च ।
प्रभाते तमपश्यन्तोऽयोध्यां ते पुनरागताः ॥ ३० ॥
रुदन् राजापि कौशल्यागृहमागात् सुदुःखितः ।
पौरा जना स्त्रियः सर्वा रुरुदू राजयोषितः ॥ ३१ ॥
रामो रथस्थश्चीराढ्यः शृङ्गवेरपुरं ययौ ।
गुहेन पूजितस्तत्र इङ्गुदीमूलमाश्रितः(२) ॥ ३२ ॥

१ न त्वं भार्य्या इति ग, घ, ङ, चिह्नितपुस्तकत्रयपाठः ।
२ मश्रित इति ग घ, चिह्नितपुस्तकद्वयपाठः ।

लक्ष्मणः स गुहो रामो यक्तुर्ज्जागरं स्थितौ ।
सुमन्त्रं सरथं त्यक्त्वा प्रातर्नावाथ जाह्नवीं ॥२३॥
रामलक्ष्मणसीताश्च तीर्णा आपुः प्रयागकम् ।
भरद्वाजं नमस्कृत्य चित्रकूटं गिरिं ययुः ॥ २४ ॥
वास्तुपूजान्ततः कृत्वा स्थिता मन्दाकिनीतटे ।
सीतायै दर्शयामास चित्रकूटञ्च राघवः ॥ २५ ॥
नखैर्विदारयन्तन्तां काकन्तच्चक्षुराक्षिपत् ।
ऐषिकास्त्रेण शरणं प्राप्तो देवान् विहायसः ॥ २६ ॥
रामे वनं गते राजा षष्ठेऽह्नि निशि चाब्रवीत् ।
कौशल्यां स कथां पौर्वां(१) यदज्ञानाद्धतः पुरा ॥ २७ ॥
कौमारे शरयूतीरे यज्ञदत्तकुमारकः ।
शब्दभेदाच्च कुम्भेन शब्दं कुर्वंश्च तत्पिता ॥ २८ ॥
शशाप विलपन्मात्रा शोकं कृत्वा रुदन्मुहुः ।
पुत्रं विना मरिष्यावस्त्वं च शोकान्मरिष्यसि ॥ २९ ॥
पुत्रं विना स्मरन् शोकात् कौशल्ये मरणं मम ।
कथामुक्त्वाऽथ हा राममुक्त्वा राजा दिवङ्गतः ॥ ४० ॥
सुप्तं मत्वाऽथ कौशल्या सुप्ता शोकार्त्तमेव सा ।
सुप्रभाते गायनाश्च सूतमागधवन्दिनः ॥ ४१ ॥
प्रबोधका बोधयन्ति न च बुध्यत्यसौ मृतः(२) ।
कौशल्या तं मृतं ज्ञात्वा हा हतास्मीति चाब्रवीत्(३) ॥ ४२ ॥
नरा नार्योऽथ रुरुदुरानीतो भरतस्तदा ।
वशिष्ठाद्यैः सशत्रुघ्नः शीघ्रं राजगृहात्पुरीम् ॥ ४३ ॥

---

१ पूर्वामिति ग, ङ, चिह्नितपुस्तकद्वयपाठः ।
२ नृप इति ङ, चिह्नितपुस्तकपाठः ।
३ पापसदिति ङ, चिह्नितपुस्तकपाठः ।

दृष्ट्वा सशोकां कैकेयीं निन्दयामास दुःखितः ।
अकीर्त्तिः पातिता मूर्द्ध्नि कौशल्यां स प्रशस्य च ॥ ४४ ॥
पितरन्तैलद्रोणिस्थं संस्कृत्य सरयूतटे ।
वशिष्ठाद्यैर्जनैरुक्तो राज्यं कुर्विति सोऽब्रवीत् ॥ ४५ ॥
व्रजामि राममानेतुं रामो राजा मतो बली(१) ।
शृङ्गवेरं प्रयागञ्च भरद्वाजेन भोजितः ॥ ४६ ॥
नमस्कृत्य भरद्वाजं रामं लक्ष्मणमागतः ।
पिता स्वर्गं गतो राम अयोध्यायां नृपो भव ॥ ४७ ॥
अहं वनं प्रयास्यामि त्वदादेशप्रतीक्षकः ।
रामः श्रुत्वा जलं दत्वा गृहीत्वा पादुके व्रज ॥ ४८ ॥
राज्यायाहन्नयास्यामि(२) सत्याच्चीरजटाधरः ।
रामोक्तो भरतश्चायान्नन्दिग्रामे स्थितो बली ॥
त्यक्त्वाऽयोध्यां पादुके ते पूज्य राज्यमपालयत् ॥ ४९ ॥

इत्यादिमहापुराणे आग्नेये रामायणेऽयोध्याकाण्डवर्णनं नाम षष्ठोऽध्यायः ॥

---

## अथ सप्तमोऽध्यायः ।

### रामायणवर्णनं ।

नारद उवाच । रामो वशिष्ठं मातॄंश्च नत्वाऽत्रिञ्च प्रणम्य सः ।
अनसूयाञ्च तत्पत्नीं शरभङ्गं सुतीक्ष्णकम् ॥ १ ॥

---

१ यतो बली इति ख, ग, चिह्नितपुस्तकद्वयपाठः गतो बली इति ख, ङ, चिह्नित पुस्तकद्वयपाठः ।

२ नाहं राज्यं प्रयास्यामि इति ख, चिह्नितपुस्तकपाठः राज्य नाहं प्रयास्यामीति ङ, चिह्नितपुस्तकपाठः ।

अगस्त्यभ्रातरं नत्वा अगस्त्यन्तत्प्रसादतः ।
धनुःखड्गञ्च सम्प्राप्य दण्डकारण्यमागतः ॥ २ ॥
जनस्थाने पञ्चवट्यां स्थितो गोदावरीतटे ।
तत्र सूर्पणखायाता भक्षितुं तान् भयङ्करी ॥ ३ ॥
रामं सुरूपं दृष्ट्वा सा कामिनी वाक्यमब्रवीत् ।
कस्त्वं कस्मात्समायातो भर्त्ता मे भव चार्थितः ॥ ४ ॥
एतौ च भक्षयिष्यामि इत्युक्त्वा तं समुद्यता ।
तस्या नासाञ्च कर्णौ च रामोक्तो लक्ष्मणोऽच्छिनत् ॥ ५ ॥
रक्तं क्षरन्ती प्रययौ खरं भ्रातरमब्रवीत् ।
मरिष्यामि विनासाऽहं खर जीवामि वै तदा ॥ ६ ॥
रामस्य भार्य्या सीताऽसौ तस्यासील्लक्ष्मणोऽनुजः ।
तेषां यद्रुधिरं(१) सोष्णं पाययिष्यसि मां यदि ॥ ७ ॥
खरस्तथेति तामुक्त्वा चतुर्द्दशसहस्रकैः ।
रक्षसां दूषणेनागाद्योद्धुं(२) त्रिशिरसा सह ॥ ८ ॥
रामं रामोऽपि युयुधे शरैर्विव्याध राक्षसान् ।
हस्त्यश्वरथपादातं बलं निन्ये यमक्षयं ॥ ९ ॥
त्रिशीर्षाणं खरं रौद्रं युध्यन्तञ्चैव दूषणम् ।
ययौ सूर्पणखा लङ्कां रावणाग्रेऽपतद् भुवि ॥ १० ॥
अब्रवीद्रावणं क्रुद्धा न त्वं राजा न रक्षकः ।
खरादिहन्तृ रामस्य सीतां भार्य्यां हरस्व च ॥ ११ ॥
रामलक्ष्मणरक्तस्य पानाज्जीवामि नान्यथा ।
तथेत्याह च तच्छ्रुत्वा मारीचं प्राह वै व्रज ॥ १२ ॥
स्वर्णचित्रमृगो भूत्वा रामलक्ष्मणकर्षकः ।

१. हृद्रुधिरमिति ख, ग, ङ, चिह्नितपुस्तकत्रयपाठः ।
२ रक्षसां सहसा प्रायायोद्धुमिति ग, चिह्नितपुस्तकपाठः ।

सीतायै त्वां हरिष्यामि अन्यथा मरणं तव ॥ १३ ॥
मारीचो रावणं प्राह रामो मृत्युर्धनुर्धरः(१) ।
रावणादपि मर्त्तव्यं मर्त्तव्यं राघवादपि ॥ १४ ॥
अवश्यं यदि मर्त्तव्यं वरं रामो न रावणः ।
इति मत्वा मृगो भूत्वा सीतायै व्यचरन्मुहुः ॥ १५ ॥
सीतया प्रेरितो(२) रामः शरेणाथावधीच्च तं ।
म्रियमाणो मृगः प्राह हा सीते लक्ष्मणेति च ॥ १६ ॥
सौमित्रिः सीतयोक्तोऽथ विरुद्धं राममागतः ।
रावणोऽप्यहरत् सीतां हत्वा गृध्रं जटायुषं ॥ १७ ॥
जटायुषा स भिन्नाङ्गो(३) अङ्केनादाय जानकीम् ।
गतो लङ्कामशोकाख्ये धारयामास चाब्रवीत् ॥ १८ ॥
भव भार्य्या ममाग्र्या त्वं राक्षस्यो रक्ष्यतामियम् ।
रामो हत्वा तु मारीचं दृष्ट्वा लक्ष्मणमब्रवीत् ॥ १९ ॥
मायामृगोऽसौ सौमित्रे यथा त्वमिह चागतः ।
तथा सीता हृता नूनं नापश्यत् स गतोऽथ ताम् ॥ २० ॥
शुशोच विललापार्त्तो मान्त्यक्त्वा क्व गतासि मे ।
लक्ष्मणाश्वासितो रामो मार्गयामास(४) जानकीम् ॥ २१ ॥
दृष्ट्वा जटायुस्तं प्राह रावणो हृतवांश्च ताम् ।
मृतोऽथ संस्कृतस्तेन कबन्धञ्चावधीत्ततः ॥
शापमुक्तोऽब्रवीद्रामं स त्वं सुग्रीवमाव्रज ॥ २२ ॥

इत्यादिमहापुराणे आग्नेये रामायणे आरण्यककाण्डवर्णनं नाम सप्तमोऽध्यायः ।

---

१ मृत्युर्न सहरमिति ख, ग, चिह्नितपुस्तकद्वयपाठः ।
२ प्रेषित इति ख, चिह्नितपुस्तकपाठः ।
३ विरथ इति ख, ग, ङ,चिह्नितपुस्तकत्रयपाठः ।
४ आक्रयामास इति ङ, चिह्नितपुस्तकपाठः ।

# अथ अष्टमोऽध्यायः ।

## श्रीरामावतारकथनम् ।

नारद उवाच । रामः पम्पासरो गत्वा शोचन् स शबरीं ततः(१) ।
हनूमता स सुग्रीवं(२) नीतो मित्रञ्चकार ह ॥ १ ॥
सप्त तालान् विनिर्भिद्य शरेणैकेन पश्यतः ।
पादेन दुन्दुभेः कायञ्चिक्षेप दशयोजनं ॥ २ ॥
तद्रिपुं बालिनं हत्वा भ्रातरं वैरकारिणम् ।
किष्किन्धां कपिराज्यञ्च रुमान्तारां समर्पयत् ॥ ३ ॥
ऋष्यमूके हरीशाय किष्किन्धेशोऽब्रवीत्स च (३) ।
सीतां त्वं प्राप्स्यसे यद्वत्(४)तथा राम करोमि ते ॥ ४ ॥
तच्छ्रुत्वा माल्यवत्पृष्ठे चातुर्मास्यं चकार सः ।
किष्किन्धायाञ्च सुग्रीवो यदा नायाति दर्शनं ॥ ५ ॥
तदाऽब्रवीत्तं रामोक्तं लक्ष्मणो व्रज राघवम् ।
न स सङ्कुचितः पन्था येन बाली हतो गतः ॥ ६ ॥
समये तिष्ठ सुग्रीव मा बालिपथमन्वगाः ।
सुग्रीव आह संसक्तो(५) गतं कालं न बुद्धवान् ॥ ७ ॥
इत्युक्त्वा स गतो रामं नत्वोवाच हरीश्वरः ।
आनीता वानराः सर्वे सीतायाश्च गवेषणे ॥ ८ ॥

---

१ गौरवाच्छबरीनतः इति ङ, चिह्नितपुस्तकपाठः । शबरीं नत इति ख, ग, चिह्नितपुस्तकपाठः ।

२ हनूमता वानरेन्द्रमिति ङ, चिह्नितपुस्तकपाठः ।

३ अब्रवीत्तत इति ग, चिह्नितपुस्तकपाठः ।

४ प्राप्स्यसि यथा इति ख, चिह्नितपुस्तकपाठः ।

५ सुग्रीवमाह सङ्क्रुद्ध इति ख, ग, चिह्नितपुस्तकद्वयपाठः । सुग्रीव ऋद्धिसंपन्न इति ङ, चिह्नितपुस्तकपाठः ।

त्वन्मतात् प्रेषयिष्यामि विचिन्वन्तु च जानकीम् ।
पूर्वादौ मासमायान्तु मासादूर्ध्वं निहन्मि तान् ॥ ९ ॥
इत्युक्ता वानराः पूर्वपश्चिमोत्तरमार्गगाः ।
जग्मू रामं ससुग्रीवमपश्यन्तस्तु जानकीम् ॥ १० ॥
रामाङ्गुलीयं सङ्गृह्य हनूमान् वानरैः सह ।
दक्षिणे मार्गयामास सुप्रभाया गुहान्तिके ॥ ११ ॥
मासादूर्ध्वञ्च विन्यस्ता अपश्यन्तस्तु जानकीम् ।
ऊचुर्वृथा मरिष्यामो जटायुर्धन्य एव सः ॥ १२ ॥
सीतार्थे योऽत्यजत् प्राणान्रावणेन हतो रणे ।
तच्छ्रुत्वा प्राह सम्पातिर्विहाय कपिभक्षणं ॥ १३ ॥
भ्राताऽसौ मे जटायुर्वै मयोड्डीनोऽर्कमण्डलम् ।
अर्कतापाद्रक्षितोऽगात् दग्धपक्षोऽहमभ्रगः ॥ १४ ॥
रामवार्त्ताश्रवात् पक्षौ जातौ भूयोऽथ जानकीम् ।
पश्याम्यशोकवनिकागतां लङ्कागतां किल ॥ १५ ॥
शतयोजनविस्तीर्णे लवणाब्धौ त्रिकूटके ।
ज्ञात्वा रामं ससुग्रीवं वानराः कथयन्तु वै ॥ १६ ॥

इत्यादिमहापुराणे आग्नेये रामायणे किष्किन्धाकाण्डवर्णनं नाम अष्टमोऽध्यायः ।

---

## अथ नवमोऽध्यायः ।

श्रीरामावतारकथनं ।

नारद उवाच । सम्पातिवचनं श्रुत्वा हनुमानङ्गदादयः ।
अब्धिं दृष्ट्वाऽब्रुवंस्तेऽब्धिं लङ्घयेत् को नु जीवयेत् ॥ १ ॥

कपीनां जीवनार्थाय रामकार्य्यप्रसिद्धये ।
शतयोजनविस्तीर्णं पुप्लुवेऽब्धिं स मारुतिः ॥ २ ॥
दृष्ट्वोत्थितञ्च मैनाकं सिंहिकां विनिपात्य च ।
लङ्कां दृष्ट्वा राक्षसानां गृहाणि वनितागृहे ॥ ३ ॥
दशग्रीवस्य कुम्भस्य कुम्भकर्णस्य रक्षसः ।
विभीषणस्येन्द्रजितो गृहेऽन्येषां च रक्षसां ॥ ४ ॥
नापश्यत् पानभूम्यादौ सीतां चिन्तापरायणः ।
अशोकवनिकां गत्वा दृष्टवाञ्छिंशपातले ॥ ५ ॥
राक्षसीरक्षितां सीतां भव भार्येति वादिनं ।
रावणं शिंशपास्थोऽथ नेति सीतान्तु वादिनीं ॥ ६ ॥
भव भार्या रावणस्य राक्षसीर्वादिनीः कपिः ।
गते तु रावणे प्राह राजा दशरथोऽभवत् ॥ ७ ॥
रामोऽस्य(१) लक्ष्मणः पुत्रौ वनवासङ्गतौ वरौ ।
रामपत्नी जानकी त्वं रावणेन हृता बलात् ॥ ८ ॥
रामः सुग्रीवमित्रस्त्वां मार्गयन् प्रेषयच्च माम्(२) ।
साभिज्ञानञ्चाङ्गुलीयं रामदत्तं गृहाण वै ॥ ९ ॥
सीताऽङ्गुलीयं जग्राह साऽपश्यन्मारुतिन्तरौ ।
भूयोऽग्रे चोपविष्टं तमुवाच यदि जीवति ॥ १० ॥
रामः कथं न नयति शङ्कितामब्रवीत् कपिः ।
रामः सीते न जानीते ज्ञात्वा त्वां स नयिष्यति ॥ ११ ॥
रावणं राक्षसं हत्वा सबलं देवि मा शुच ।
साभिज्ञानं देहि मेत्वं मणिं सीताऽददत्कपौ ॥ १२ ॥
उवाच मां यथा रामो नयेच्छीघ्रं तथा कुरु ।

१ रामश्च इति ख, चिह्नितपुस्तकपाठः ।
२ त्वां मार्गयन प्रेषयच्चमामिति घ, चिह्नितपुस्तकपाठ ।

काकाक्षिपातनकथाम्प्रतियाहि हि शोकह ॥ १३ ॥
मणिं कथां गृहीत्वाह हनूमान्नेष्यते पतिः।
अथवा तेत्वरा काचित् पृष्ठमारुह मे शुभे ॥ १४ ॥
अद्य त्वां दर्शयिष्यामि ससुग्रीवञ्च राघवम्।
सीताऽब्रवीद्धनूमन्तं नयतां मां हि राघवः ॥ १५ ॥
हनूमान् स दशग्रीवदर्शनोपायमाकरोत्।
वनं बभञ्ज तत्पालान् हत्वा दन्तनखादिभिः ॥ १६ ॥
हत्वातु किङ्करान् सर्वान् सप्त मन्त्रिसुतानपि।
पुत्रमक्षं कुमारञ्च शक्रजिच्च बबन्ध तम् ॥ १७ ॥
नागपाशेन पिङ्गाक्षं दर्शयामास रावणम्।
उवाच रावणः कस्त्वं मारुतिः प्राह रावणम् ॥ १८ ॥
रामदूतो राघवाय सीतां देहि मरिष्यसि।
रामबाणैर्हतः सार्द्धं लङ्कास्थै राक्षसैर्ध्रुवम् ॥ १९ ॥
रावणो हन्तुमुद्युक्तो विभीषणनिवारितः।
दीपयामास लाङ्गूलं दीप्तपुच्छः स मारुतिः ॥ २० ॥
दग्ध्वा लङ्कां राक्षसांश्च दृष्ट्वा सीतां प्रणम्य ताम्।
समुद्रपारमागम्य दृष्टा सीतेति चाब्रवीत् ॥ २१ ॥
अङ्गदादीनङ्गदाद्यैः पीत्वा मधुवने मधु।
जित्वा दधिमुखादींश्च दृष्ट्वा रामञ्च तेऽब्रुवन् ॥ २२ ॥
दृष्टा सीतेति रामोऽपि हृष्टः पप्रच्छ मारुतिम्।
कथं दृष्टा त्वया सीता किमुवाच च माम्प्रति ॥ २३ ॥
सीताकथामृतेनैव सिञ्च मां कामवह्निगम्।
हनूमानब्रवीद्रामं लङ्घयित्वाऽब्धिमागतः ॥ २४ ॥
सीतां दृष्ट्वा पुरीं दग्ध्वा सीतामणिं गृहाण वै।
हत्वा त्वं रावणं सीतां प्राप्स्यसे राम मा शुच ॥ २५ ॥
गृहीत्वा तं मणिं रामो रुरोद विरहातुरः।

मणिं दृष्ट्वा जानकी मे दृष्टा सीता नयस्व माम्॥ २६॥
तया विना न जीवामि सुग्रीवाद्यैः प्रबोधितः।
समुद्रतीरं गतवान् तत्र रामं विभीषणः॥ २७॥
गतस्तिरस्कृतो भ्रात्रा रावणेन दुरात्मना।
रामाय देहि सीतां त्वं मित्युक्तेनासहायवान्॥ २८॥
रामो विभीषणं मित्रं लङ्कैश्वर्येऽभ्यषेचयत्।
समुद्रं प्रार्थयन्मार्गं यदा नायात्तदा शरैः॥ २९॥
भेदयामास रामश्च उवाचाब्धिः समागतः।
नलेन सेतुं बध्वाब्धौ लङ्कां व्रज गभीरकः॥ ३०॥
अहं त्वया कृतः पूर्वं रामोऽपि नलसेतुना।
कृतेन तरुशैलाद्यैर्गतः पारं महोदधेः॥
वानरैः स सुवेलस्थः सह लङ्कां ददर्श वै॥ ३१॥

इत्यादिमहापुराणे आग्नेये रामायणे सुन्दरकाण्डवर्णनं नाम नवमोऽध्यायः।

---

## अथ दशमोऽध्यायः।

### श्रीरामावतारवर्णनं।

नारद उवाच। रामोक्तश्चाङ्गदो गत्वा रावणं प्राह जानकी।
दीयतां राघवायाशु अन्यथा त्वं मरिष्यसि॥ १॥
रावणो हन्तुमुद्युक्तः सङ्ग्रामोद्धतराक्षसः।
रामायाह दशग्रीवो युद्धमेकं तु मन्यते॥ २॥
रामो युद्धाय तच्छ्रुत्वा लङ्कां सकपिराययौ।
वानरो हनूमान् मैन्दो द्विविदो जाम्बवान्नलः॥ ३॥
नीलस्तारोऽङ्गदो धूम्रः सुषेणः केशरी गयः।

पनसो विनतो रम्भः शरभः क्रथनो बली ॥ ४ ॥
गवाक्षो दधिवक्त्रश्च गवयो गन्धमादनः।
एते चान्ये च सुग्रीव एतैर्युक्तो ह्यसंख्यकैः ॥ ५ ॥
रक्षसां वानराणाञ्च युद्धं सङ्कुलमाबभौ।
राक्षसा वानरान् जघ्नुः शरशक्तिगदादिभिः ॥ ६ ॥
वानरा राक्षसान् जघ्नुर्नखदन्तशिलादिभिः।
हस्त्यश्वरथपादातं राक्षसानां बलं हतं ॥ ७ ॥
हनूमान् गिरिशृङ्गेण धूम्राक्षमवधीद्रिपुम्।
अकम्पनं प्रहस्तञ्च युध्यन्तं नील आवधीत् ॥ ८ ॥
इन्द्रजिच्छरबन्धाच्च विमुक्तौ रामलक्ष्मणौ।
तार्क्ष्यसन्दर्शनाद्बाणैर्जघ्नतू राक्षसं बलम् ॥ ९ ॥
रामः शरैर्जर्जरितं रावणञ्चाकरोद्रणे।
रावणः कुम्भकर्णञ्च बोधयामास दुःखितः ॥ १० ॥
कुम्भकर्णः प्रबुद्धोऽथ पीत्वा घटसहस्रकम्।
मद्यस्य महिषादीनां भक्षयित्वाह रावणम् ॥ ११ ॥
सीताया हरणं पापं कृतन्त्वं हि गुरुर्यतः।
अतो गच्छामि युद्धाय रामं हन्मि सवानरम् ॥ १२ ॥
इत्युक्त्वा वानरान् सर्वान् कुम्भकर्णो ममर्द्द ह।
गृहीतस्तेन सुग्रीवः कर्णनासं चकर्त्त सः ॥ १३ ॥
कर्णनासाविहीनोऽसौ भक्षयामास वानरान्।
रामोऽथ कुम्भकर्णस्य बाहू चिच्छेद शायकैः ॥ १४ ॥
ततः पादौ ततश्छित्वा शिरो भूमौ व्यपातयत्।
अथ कुम्भो निकुम्भश्च मकराक्षश्च राक्षसः ॥ १५ ॥
महोदरो महापार्श्वो मत्त उन्मत्तराक्षसः।
प्रघसो भासकर्णश्च विरूपाक्षश्च संयुगे ॥ १६ ॥
देवान्तको नरान्तश्च त्रिशिराश्चातिकायकः।

रामेण लक्ष्मणेनैते वानरैः सविभीषणैः ॥ १७ ॥
युध्यमानास्तया ह्यन्ये राक्षसा भुवि पातिताः ।
इन्द्रजिन्मायया युध्यन् रामादीन् सम्बबन्ध ह ॥ १८ ॥
वरदत्तैर्नागवाणैः(१) ओषध्या तौ विशल्यकौ ।
विशल्ययाव्रणौ कृत्वा मारुत्यानीतपर्वते ॥ १९ ॥
हनूमान् धारयामास तत्रागं यत्र संस्थितः ।
निकुम्भिलायां होमादि कुर्वन्तं तं हि लक्ष्मणः ॥ २० ॥
शरैरिन्द्रजितं वीरं युद्धे तं तु व्यशातयत् ।
रावणः शोकसन्तप्तः सीतां हन्तुं समुद्यतः ॥ २१ ॥
अविन्ध्यवारितो(२) राजा रथस्थः सबलो ययौ ।
इन्द्रोक्तो मातली रामं रथस्थं प्रचकार तम् ॥ २२ ॥
रामरावणयोर्युद्धं रामरावणयोरिव ।
रावणो वानरान् हन्ति मारुत्याद्यांश्च रावणम् ॥ २३ ॥
रामः शस्त्रैस्तमस्त्रैश्च ववर्ष जलदो यथा ।
तस्य ध्वजं स चिच्छेद रथमश्वांश्च सारथिम् ॥ २४ ॥
धनुर्बाहुञ्छिरांस्येव उत्तिष्ठन्ति शिरांसि हि ।
पैतामहेन हृदयं भित्वा रामेण रावणः ॥ २५ ॥
भूतले पातितः सर्वे राक्षसै रुरुदुः स्त्रियः ।
आश्वास्य तांश्च संस्कृत्य रामाज्ञप्तो विभीषणः ॥ २६ ॥
हनूमतानयद्रामः सीतां शुद्धां गृहीतवान् ।
रामो वह्नौ प्रविष्टान्तां शुद्धामिन्द्रादिभिः स्तुतः ॥ २७ ॥
ब्रह्मणा दशरथेन त्वं विष्णू राक्षसमर्द्दनः ।
इन्द्रोर्चितोऽमृतवृष्ट्या जीवयामास वानरान् ॥ २८ ॥

---

१ नागपाशैरिति ख, चिह्नितपुस्तकपाठः ।

२ महूविवारितइति ख, चिह्नितपुस्तकपाठः ।

रामेण पूजिता जग्मुर्युद्धं दृष्ट्वा दिवञ्च ते ।
रामो विभीषणायादाल्लङ्कामभ्यर्च्च्य वानरान् ॥ २९ ॥
ससीतः पुष्पके स्थित्वा गतमार्गेण वै गतः(१) ।
दर्शयन् वनदुर्गाणि सीतायै हृष्टमानसः ॥ ३० ॥
भरद्वाजं नमस्कृत्य नन्दिग्रामं समागतः ।
भरतेन नतश्चागादयोध्यान्तत्र संस्थितः ॥ ३१ ॥
वशिष्ठादीन्नमस्कृत्य कौशल्याञ्चैव कैकयीम् ।
सुमित्रां प्राप्तराज्योऽथ द्विजादीन् सोऽभ्यपूजयत् ॥ ३२ ॥
वासुदेवं स्वमात्मानमश्वमेधैरथायजत् ।
सर्वदानानि स ददौ पालयामास सः प्रजाः ॥ ३३ ॥
पुत्रवद्धर्म्मकामादीन् दुष्टनिग्रहणे रतः ।
सर्वधर्म्मपरो लोकः सर्वशस्या च मेदिनी ।
नाकालमरणञ्चासीद्रामे राज्यं प्रशासति ॥ ३४ ॥

इत्यादिमहापुराणे आग्नेये रामायणे युद्धकाण्डवर्णनं नाम दशमोऽध्यायः ।

---

## अथ एकादशोऽध्यायः ।

### श्रीरामावतारकथनं ।

नारद उवाच । राज्यस्थं राघवं जग्मुरगस्त्याद्याः सुपूजिताः ।
धन्यस्त्वं विजयी यस्मादिन्द्रजिद्विनिपातितः ॥ १ ॥
ब्रह्मात्मजः पुलस्त्योभूत् विश्रवास्तस्य नैकषी ।
पुष्पोत्कटाभूत् प्रथमा तत्पुत्रोभूद्धनेश्वरः ॥ २ ॥
नैकष्यां रावणो जज्ञे विंशद्बाहुर्दशाननः ।

---

१ स्वर्गमार्गेण वेगेन इति ख, चिह्नितपुस्तकपाठः ।

तपसा ब्रह्मदत्तेन वरेण जितदैवतः ॥ ३ ॥
कुम्भकर्णः सनिद्रोऽभूद्धर्मिष्ठोऽभूद्विभीषणः ।
स्वसा शूर्पणखा तेषां रावणान्मेघनादकः ॥ ४ ॥
इन्द्रं जित्वेन्द्रजिच्चाभूद्रावणादधिको बली ।
हतस्त्वया लक्ष्मणेन देवादेः क्षेममिच्छता ॥ ५ ॥
इत्युक्त्वा ते गता विप्रा अगस्त्याद्या नमस्कृताः ।
देवप्रार्थितरामोक्तः शत्रुघ्नो लवणार्दनः ॥ ६ ॥
अभूत् पूर्मथुरा काचित् रामोक्तो भरतोऽवधीत् ।
कोटित्रयञ्च शैलूषपुत्राणां निशितैः शरैः ॥ ७ ॥
शैलूषं दुष्टगन्धर्वं सिन्धुतीरनिवासिनम् ।
तक्षञ्च पुष्करं पुत्रं स्थापयित्वाथ देशयोः ॥ ८ ॥
भरतोगात्सशत्रुघ्नो राघवं पूजयन् स्थितः ।
रामो दुष्टान्निहत्याजौ शिष्टान् सम्पाल्य मानवः ॥ ९ ॥
पुत्रौ कुशलवौ जातौ वाल्मीकेराश्रमे वरौ ।
लोकापवादात्त्यक्तायां ज्ञातौ सुचरितश्रवात् ॥ १० ॥
राज्येऽभिषिच्य ब्रह्माहमस्मीति ध्यानतत्परः ।
दशवर्षसहस्राणि दशवर्षशतानि च ॥ ११ ॥
राज्यं कृत्वा क्रतून् कृत्वा स्वर्गं देवार्च्चितो ययौ ।
सपौरः सानुजः सीतापुत्रो जनपदान्वितः ॥ १२ ॥
अग्निरुवाच । वाल्मीकिर्नारदाच्छ्रुत्वा रामायणमकारयत् ।
सविस्तरं यदेतच्च शृणुयात्स दिवं व्रजेत् ॥ १३ ॥

इत्यादिमहापुराणे आग्नेये रामायणे उत्तरकाण्डवर्णनं नाम एकादशोऽध्यायः ।

# अथ द्वादशोऽध्यायः ।

## श्रीहरिवंशवर्णनं ।

अग्निरुवाच । हरिवंशम्प्रवक्ष्यामि विष्णुनाभ्यम्बुजादजः(१) ।
ब्रह्मणोत्रिस्ततः सोमः सोमाज्जातः पुरूरवाः ॥ १ ॥
तस्मादायुरभूत्तस्मान्नहुषोऽतो ययातिकः ।
यदुश्च तुर्वसुस्तस्माद्देवयानी व्यजायत ॥ २ ॥
द्रुह्युश्चानुश्च पूरुश्च शर्म्मिष्ठा वार्षपर्व्वणी ।
यदोः कुले यादवाश्च वसुदेवस्तदुत्तमः ॥ ३ ॥
भुवो भारावतारार्थं देवक्यां वसुदेवतः ।
हिरण्यकशिपोः पुत्राः षड्गर्भा योगनिद्रया ॥ ४ ॥
विष्णुप्रयुक्तया नीता देवकीजठरं पुरा ।
अभूच्च सप्तमो गर्भो देवक्या जठराद्बलः ॥ ५ ॥
सङ्क्रामितोऽभूद्रोहिण्यां रौहिणेयस्ततो हरिः ।
कृष्णाष्टम्याञ्च नभसि अर्द्धरात्रे चतुर्भुजः ॥ ६ ॥
देवक्या वसुदेवेन स्तुतो बालो द्विबाहुकः ।
वसुदेवः कंसभयाद्यशोदाशयनेऽनयत् ॥ ७ ॥
यशोदाबालिकां गृह्य देवकीशयनेऽनयत् ।
कंसो बालध्वनिं श्रुत्वा ताञ्चिक्षेप शिलातले ॥ ८ ॥
वारितोऽपि स देवक्या मृत्युर्गर्भाष्टमो मम ।
श्रुत्वाऽशरीरिणीं वाचं मत्तो गर्भास्तु मारिताः ॥ ९ ॥
समर्पितास्तु देवक्या विवाहसमयेरिताः ।
सा क्षिप्ता बालिका कंसमाकाशस्थाब्रवीदिदम् ॥ १० ॥
किं मया क्षिप्तया कंस जातो यस्त्वां वधिष्यति ।

---

१ विष्णुनाभ्यब्जजादज इति ख, चिह्नितपुस्तकपाठः ।

सर्वस्वभूतो देवानां भूभारहरणाय सः ॥ ११ ॥
इत्युक्ता सा च शुम्भादीन् हत्वेन्द्रेण च संस्तुता।
आर्या दुर्गा वेदगर्भा अम्बिका भद्रकाल्यपि ॥ १२ ॥
भद्रा क्षेम्या क्षेमकरी नैकबाहुर्नमामि ताम्।
त्रिसन्ध्यं यः पठेन्नाम सर्वान् कामानवाप्नुयात् ॥ १३ ॥
कंसोऽपि पूतनादींश्च प्रेषयद्बालनाशने।
यशोदापतिनन्दाय वसुदेवेन चार्पितौ ॥ १४ ॥
रक्षणाय च कंसादेर्भीतेनैव हि गोकुले।
रामकृष्णौ चेरतुस्तौ गोभिर्गोपालकैः सह ॥ १५ ॥
सर्वस्य जगतः पालौ गोपालौ तौ बभूवतुः।
कृष्णश्चोलूखले बद्धो दाम्ना व्यग्रयशोदया ॥ १६ ॥
यमलार्जुनमध्येऽगाद् भग्नौ च यमलार्जुनौ।
परिवृत्तश्च शकटः पादक्षेपात् स्तनार्थिना ॥ १७ ॥
पूतना स्तनपानेन सा हता हन्तुमुद्यता।
वृन्दावनगतः कृष्णः कालियं यमुनाह्रदात् ॥ १८ ॥
जित्वा निःसार्य चाब्धिस्थञ्चकार बलसंस्तुतः।
क्षेमं तालवनं चक्रे हत्वा धेनुकगर्द्दभं ॥ १९ ॥
अरिष्टवृषभं हत्वा केशिनं हयरूपिणम्।
शक्रोत्सवं परित्यज्य कारितो गोत्रयज्ञकः ॥ २० ॥
पर्वतं धारयित्वा च शक्राद्वृष्टिर्निवारिता।
नमस्कृतो महेन्द्रेण गोविन्दोऽथार्जुनोऽर्पितः ॥ २१ ॥
इन्द्रोत्सवस्तु तुष्टेन भूयः कृष्णेन कारितः।
रथस्थो मथुराञ्चागात् कंसोक्ताक्रूरसंस्तुतः। २२ ॥
गोपीभिरनुरक्ताभिः क्रीडिताभिर्निरीक्षितः।

रजकं चाप्रयच्छन्तं(१) हत्वा वस्त्राणि चाग्रहीत् ॥ २३ ॥
सह रामेण मालाभृन्मालाकारे वरन्ददौ ।
दत्तानुलेपनां कुब्जामृजुं चक्रेऽहनद् गजं ॥ २४ ॥
मत्तं कुवलयापीडं द्वारि रङ्गं प्रविश्य च ।
कंसादीनां पश्यतां च मञ्चस्थानां नियुद्धकं ॥ २५ ॥
चक्रे चाणूरमल्लेन मुष्टिकेन बलोऽकरोत् ।
चाणूरमुष्टिकौ ताभ्यां हतौ मल्लौ तथापरे ॥ २६ ॥
मथुराधिपतिं कंसं हत्वा तत्पितरं हरिः ।
चक्रे यादवराजानमस्तिप्राप्ती च कंसगे ॥ २७ ॥
जरासन्धस्य ते पुत्र्यौ जरासन्धस्तदीरितः ।
चक्रे स मथुरारोधं यादवैर्युयुधे शरैः ॥ २८ ॥
रामकृष्णौ च मथुरां त्यक्त्वा गोमन्तमागतौ ।
जरासन्धं विजित्याजौ पौण्ड्रकं वासुदेवकं ॥ २९ ॥
पुरीं च द्वारकां कृत्वा न्यवसद् यादवैर्वृतः ।
भौमं तु नरकं हत्वा तेनानीतास्च कन्यकाः ॥ ३० ॥
देवगन्धर्वयक्षाणां ता उवाह जनार्द्दनः ।
षोडशस्त्रीसहस्राणि रुक्मिण्याद्यास्तयाष्ट च ॥ ३१ ॥
सत्यभामासमायुक्तो गरुडे नरकार्दनः ।
मणिशैलं सरत्नञ्च इन्द्रं जित्वा हरिर्द्दिवि ॥ ३२ ॥
पारिजातं समानीय सत्यभामागृहेऽकरोत् ।
सान्दीपनेश्च शस्त्रास्त्रं ज्ञात्वा तद्बालकं ददौ ॥ ३२ ॥
जित्वा पञ्चजनं दैत्यं यमेन च सुपूजितः ।

---

१ रजकञ्च प्रजल्पन्तमिति ख, चिह्नितपुस्तकपाठः ।

अबधीत् कालयवनं मुचुकुन्देन पूजितः ॥ ३४
वसुदेवं देवकीञ्च भक्तविप्रांश्च सोऽर्चयत् ।
रेवत्यां बलभद्राच्च यज्ञाते निशठोन्मुकौ ॥ ३५ ॥
कृष्णात् शाम्बो जाम्बवत्यामन्यास्वन्येऽभवन् सुताः ।
प्रद्युम्नोऽभूच्च रुक्मिण्यां षष्ठेऽह्नि स हृतो बलात् ॥ ३६ ॥
शम्बरेणाम्बुधौ क्षिप्तो मत्स्यो जग्राह धीवरः ।
तं मत्स्यं शम्बरायादान्मायावत्यै च शम्बरः ॥ ३७ ॥
मायावती मत्स्यमध्ये दृष्ट्वा स्वं पतिमादरात् ।
पपोष सा तं चोवाच रतिस्तेऽहं पतिर्मम ॥ ३८ ॥
कामस्त्वं शम्भुनानङ्गः कृतोऽहं शम्बरेण च ।
हृता न तस्य पत्नी त्वं मायाज्ञः शम्बरं जहि ॥ ३९ ॥
तच्छ्रुत्वा शम्बरं हत्वा प्रद्युम्नः सह भार्यया ।
मायावत्या ययौ कृष्णं कृष्णो हृष्टोऽथ रुक्मिणी ॥ ४० ॥
प्रद्युम्नादनिरुद्धोऽभूदुषापतिरुदारधीः ।
बाणो बलिसुतस्तस्य सुतोषा शोणितं पुरं ॥ ४१ ॥
तपसा शिवपुत्रोऽभूत् मायूरध्वजपातितः ।
युद्धं प्राप्स्यसि बाण त्वं बाणं तुष्टः शिवोऽभ्यधात् ॥ ४२ ॥
शिवेन क्रीडतीं गौरीं दृष्ट्वोषा सस्पृहा पतौ ।
तामाह गौरी भर्त्ता ते निशि सुप्तेति दर्शनात् ॥ ४३ ॥
वैशाखमासद्वादश्यां पुंसो भर्त्ता भविष्यति ।
गौर्य्युक्ता(१) हर्षिता चोषा गृहे सुप्ता ददर्श तं ॥ ४४ ॥
आत्मना सङ्गतं ज्ञात्वा तत्सख्या चित्रलेखया ।
लिखिताद्वै चित्रपटादनिरुद्धं समानयत् ॥ ४५ ॥

---

१ तच्छ्रुत्वा इति ग, चिह्नितपुस्तकपाठः ।

कृष्णपौत्रं द्वारकातो दुहिता बाणमन्त्रिणः ।
कुम्भाण्डस्यानिरुद्धोगाद्रराम ह्युषया सह ॥ ४६ ॥
बाणध्वजस्य सम्पाते रक्षिभिः स निवेदितः ।
अनिरुद्धस्य बाणेन युद्धमासीत्सुदारुणम् ॥ ४७ ॥
श्रुत्वा तु नारदात् कृष्णः प्रद्युम्नबलभद्रवान् ।
गरुडस्थोथ जित्वाग्नीन् ज्वरं माहेश्वरन्तथा ॥ ४८ ॥
हरिशङ्करयोर्युद्धं बभूवाथ शराशरि ।
नन्दिविनायकस्कन्दमुखास्तार्क्ष्यादिभिर्जिताः ॥ ४९ ॥
जृम्भिते शङ्करे नष्टे जृम्भणास्त्रेण विष्णुना ।
छिन्नं सहस्रं बाहूनां रुद्रेणाभयमर्थितम् ॥ ५० ॥
विष्णुना जीवितो बाणो द्विबाहुः प्राब्रवीच्छिवम् ।
त्वया यदभयं दत्तं बाणस्यास्य मया च तत् ॥ ५१ ॥
आवयोर्नास्ति भेदो वै भेदी नरकमाप्नुयात् ।
शिवाद्यैः पूजितो विष्णुः सोनिरुद्ध उषादियुक् ॥ ५२ ॥
द्वारकान्तु गतो रेमे उग्रसेनादियादवैः ।
अनिरुद्धात्मजो वज्रो मार्कण्डेयात्तु सर्ववित् ॥ ५३ ॥
बलभद्रः प्रलम्बघ्नो यमुनाकर्षणो(१)ऽभवत् ।
द्विविदस्य कपेर्भेत्ता कौरवोन्मादनाशनः ॥ ५४ ॥
हरी रेमेनेकमूर्त्त्या रुक्मिण्यादिभिरीश्वरः ।
पुत्रानुत्पादयामास त्वसंख्यातान् स यादवान् ।
हरिवंशं पठेत् यः स प्राप्तकामो हरिं व्रजेत् ॥ ५५ ॥

इत्यादिमहापुराणे आग्नेये हरिवंशवर्णनं नाम द्वादशोऽध्यायः ।

---

१ कर्षकइति ख, चिह्नितपुस्तकपाठः ।

# अथ त्रयोदशोऽध्यायः ।

## कुरुपाण्डवोत्पत्त्यादिकथनं ।

अग्निरुवाच । भारतं सम्प्रवक्ष्यामि कृष्णमाहात्म्यलक्षणम् ।
भूभारमहरद्विष्णुर्निमित्तीकृत्य पाण्डवान् ॥ १ ॥
विष्णुनाभ्यब्जजो ब्रह्मा ब्रह्मपुत्रोऽत्रिरत्रितः ।
सोमः सोमाद्बुधस्तस्मादैल आसीत् पुरूरवाः ॥ २ ॥
तस्मादायुस्ततो राजा नहुषोऽतो ययातिकः ।
ततः पुरुस्तस्य वंशे भरतोऽथ नृपः कुरुः ॥ ३ ॥
तद्वंशे शान्तनुस्तस्माद्भीष्मो गङ्गासुतोऽनुजौ ।
चित्राङ्गदो विचित्रश्च सत्यवत्याश्च शान्तनोः ॥ ४ ॥
स्वर्गं गते शान्तनौ च भीष्मो भार्य्याविवर्ज्जितः ।
अपालयत् भातृराज्यं बालश्चित्राङ्गदो हतः ॥ ५ ॥
चित्राङ्गदेन द्वे कन्ये काशिराजस्य चाम्बिका ।
अम्बालिका च भीष्मेण आनीते विजितारिणा ॥ ६ ॥
भार्ये विचित्रवीर्य्यस्य यक्ष्मणा स दिवङ्गतः ।
सत्यवत्या ह्यनुमताद्म्बिकायां नृपोऽभवत् ॥ ७ ॥
धृतराष्ट्रोऽम्बालिकायां पाण्डुश्च व्यासतः सुतः ।
गान्धार्य्यां धृतराष्ट्राच्च दुर्य्योधनमुखं शतम् ॥ ८ ॥
शतशृङ्गाश्रमपदे भार्य्यायोगाद् यतो मृतिः ।
ऋषिशापात्ततो धर्म्मात् कुन्त्यां पाण्डोर्य्युधिष्ठिरः ॥ ९ ॥
वाताद्भीमोऽर्ज्जुनः शक्रान्माद्रयामश्विकुमारतः ।
नकुलः सहदेवश्च पाण्डुर्म्माद्रीयुतो मृतः ॥ १० ॥
कर्णः कुन्त्यां हि कन्यायां जातो दुर्य्योधनाश्रितः ।
कुरुपाण्डवयोर्वैरन्दैवयोगाद्बभूव ह ॥ ११ ॥

दुर्योधनो जतुगृहे पाण्डवानदहत् कुधीः ।
दग्धागाराद्विनिष्क्रान्ता मातृषष्ठास्तु पाण्डवाः ॥ १२ ॥
ततस्तु एकचक्रायां ब्राह्मणस्य निवेशने ।
मुनिवेशाः स्थिताः सर्वे निहत्य वकराक्षसम् ॥ १३ ॥
ययुः पाञ्चालविषयं द्रौपद्यास्ते स्वयम्बरे ।
सम्प्राप्ता बाहुवेधेन(१) द्रौपदी पञ्चपाण्डवैः(२) ॥ १४ ॥
अर्द्धराज्यं ततः प्राप्ता ज्ञाता दुर्योधनादिभिः ।
गाण्डीवञ्च धनुर्दिव्यं पावकाद्रथमुत्तमम् ॥ १५ ॥
सारथिञ्चार्जुनः सङ्ख्ये कृष्णमक्षय्यशायकान् ।
ब्रह्मास्त्रादींस्तथा द्रोणात्सर्वे शस्त्रविशारदाः ॥ १६ ॥
कृष्णेन सोऽर्जुनो वह्निं खाण्डवे समतर्पयत् ।
इन्द्रवृष्टिं वारयंश्च शरवर्षेण पाण्डवः ॥ १७ ॥
जिता दिशः पाण्डवैश्च राज्यञ्चक्रे युधिष्ठिरः ।
बहुस्वर्णं(३) राजसूयं न सेहे तं सुयोधनः ॥ १८ ॥
भ्रात्रा दुःशासनेनोक्तः कर्णेन प्राप्तभूतिना ।
द्यूतकार्ये शकुनिना द्यूतेन स युधिष्ठिरम् ॥ १९ ॥
अजयत्तस्य राज्यञ्च सभास्थो माययाहसत् ।
जितो युधिष्ठिरो भ्रातृयुक्तश्चारण्यकं ययौ ॥ २० ॥
वने द्वादशवर्षाणि प्रतिज्ञातानि सोऽनयत् ।
अष्टाशीतिसहस्राणि भोजयन् पूर्ववद् द्विजान् ॥ २१ ॥
सधौम्यो द्रौपदीषष्ठस्ततः प्रायाद्विराटकम् ।
कङ्को द्विजो ह्यविज्ञातो(४) राजा भीमोथ सूपकृत् ॥ २२ ॥

---

१ बाहुभेदेन इति ग, चिह्नितपुस्तकपाठः ।
२ द्रौपदीं पञ्च पाण्डवा इति ख, ग, ङ, चिह्नितपुस्तकत्रयपाठः ।
३ वसुपूर्णमिति ख, चिह्नितपुस्तकपाठः रत्नपूर्णमिति घ, चिह्नितपुस्तकपाठः ।
४ कङ्को द्विजो ह्यभूच्छ्रेष्ठ इति ख, चिह्नितपुस्तकपाठः ।

बृहन्नलार्जुनो भार्य्या सैरिन्ध्री यमजौ तथा।
अन्यनाम्ना भीमसेनः कीचकञ्चावधीन्निशि॥ २३॥
द्रौपदीं हर्त्तुकामं तं अर्जुनश्चाजयत् कुरून्।
कुर्वतो गोग्रहादींश्च तैर्ज्ञाताः पाण्डवा अथ॥ २४॥
सुभद्रा कृष्णभगिनी अर्जुनात्समजीजनत्।
अभिमन्युन्ददौ तस्मै विराटश्चोत्तरां सुताम्॥ २५॥
सप्ताक्षौहिणीशश्च आसीद्धर्मराजो रणाय सः।
कृष्णो दूतोऽब्रवीद् गत्वा दुर्य्योधनममर्षणम्॥ २६॥
एकादशाक्षौहिणीशं नृपं दुर्य्योधनं तदा।
युधिष्ठिरायार्द्धराज्यं देहि ग्रामांश्च पञ्च वा॥ २७॥
युध्यस्व वा वचः श्रुत्वा कृष्णमाह सुयोधनः।
भूसूच्यग्रं न दास्यामि योत्स्ये सङ्ग्रहणोद्यतः॥ २८॥
विश्वरूपन्दर्शयित्वा अधृष्यं विदुरार्चितः(१)।
प्रागाद्युधिष्ठिरं प्राह योधयैनं सुयोधनम्॥ २९॥

इत्यादिमहापुराणे आग्नेये आदिपर्वादिवर्णनं नाम
त्रयोदशोऽध्यायः।

---

## अथ चतुर्दशोऽध्यायः।

### कुरुपाण्डवसङ्ग्रामवर्णनं।

अग्निरुवाच। यौधिष्ठिरी दौर्य्योधनी कुरुक्षेत्रं ययौ चमूः।
भीष्मद्रोणादिकान् दृष्ट्वा नायुध्यत गुरूनिति॥ १॥
पार्थं ह्युवाच भगवानशोच्या भीष्ममुख्यकाः।
शरीराणि विनाशीनि न शरीरी विनश्यति॥ २॥

---

१ विदुरान्वित इति ख, चिह्नितपुस्तकपाठः।

अयमात्मा परं ब्रह्म अहं ब्रह्मास्मि विद्धि तम् ।
सिद्ध्यसिद्ध्योः समो योगी राजधर्मं प्रपालय ॥ ३ ॥
कृष्णोक्तोऽथार्जुनोऽयुध्यद्रथस्थो वाद्यशब्दवान् ।
भीष्मः सेनापतिरभूदादौ दौर्योधने बले ॥ ४ ॥
पाण्डवानां शिखण्डी च तयोर्युद्धं बभूव ह ।
धार्त्तराष्ट्राः पाण्डवांश्च जघ्नुर्युद्धे सभीष्मकाः ॥ ५ ॥
धार्त्तराष्ट्रान् शिखण्ड्याद्याः पाण्डवा जघ्नुराहवे ।
देवासुरसमं युद्धं कुरुपाण्डवसेनयोः ॥ ६ ॥
बभूव खःस्थदेवानां पश्यतां प्रीतिवर्द्धनम् ।
भीष्मोऽस्त्रैः पाण्डवं सैन्यं दशाहोभिर्न्यपातयत् ॥ ७ ॥
दशमे ह्यर्जुनो बाणैर्भीष्मं वीरं ववर्ष ह ।
शिखण्डी द्रुपदोक्तोऽस्त्रैर्ववर्ष जलदो यथा ॥ ८ ॥
हस्त्यश्वरथपादातमन्योन्यास्त्रनिपातितम्(१) ।
भीष्मः स्वच्छन्दमृत्युश्च युद्धमार्गं प्रदर्श्य च ॥ ९ ॥
वसूक्तो वसुलोकाय शरशय्यागतः स्थितः ।
उत्तरायणमीक्षंश्च ध्यायन् विष्णुं स्तुवन् स्थितः ॥ १० ॥
दुर्योधने तु शोकार्त्ते द्रोणः सेनापतिस्त्वभूत् ।
पाण्डवे हर्षिते सैन्ये धृष्टद्युम्नश्चमूपतिः ॥ ११ ॥
तयोर्युद्धं बभूवोग्रं यमराष्ट्रविवर्धनम् ।
विराटद्रुपदाद्याश्च निमग्ना द्रोणसागरे ॥ १२ ॥
दौर्योधनी महासेना हस्त्यश्वरथपत्तिनी ।
धृष्टद्युम्नाधिपतिता द्रोणः काल इवाबभौ ॥ १३ ॥
हतोऽश्वत्थामा चेत्युक्ते द्रोणः शस्त्राणि चात्यजत् ।
धृष्टद्युम्नशराक्रान्तः पतितः स महीतले ॥ १४ ॥

---

१ अन्योन्यास्त्रनिपीड़ितमिति ख, घ, चिह्नितपुस्तकद्वयपाठः ।

पञ्चमेऽहनि दुर्द्धर्षः सर्वक्षत्रं प्रमथ्य च ।
दुर्य्योधने तु शोकार्त्ते कर्णः सेनापतिस्त्वभूत् ॥ १५ ॥
अर्जुनः पाण्डवानाञ्च तयोर्युद्धं बभूव ह ।
शस्त्राशस्त्रि महारौद्रं देवासुररणोपमम् ॥ १६ ॥
कर्णार्जुनाख्ये सङ्ग्रामे कर्णोऽरीनवधीच्छरैः ।
द्वितीयेऽहनि कर्णस्तु अर्जुनेन निपातितः ॥ १७ ॥
शल्यो दिनार्द्धं युयुधे ह्यवधीत्तं युधिष्ठिरः ।
युयुधे भीमसेनेन हतसैन्यः सुयोधनः ॥ १८ ॥
बहून् हत्वा नरादींश्च भीमसेनमथाब्रवीत् ।
गदया प्रहरन्तं तु भीमस्तन्तु व्यपातयत् ॥ १९ ॥
गदयान्यानुजांस्तस्य तस्मिन्नष्टादशेऽहनि ।
रात्रौ सुषुप्तञ्च बलं पाण्डवानां न्यपातयत् ॥ २० ॥
अक्षौहिणीप्रमाणन्तु अश्वत्थामा महाबलः ।
द्रौपदेयान् सपाञ्चालान् धृष्टद्युम्नञ्च सोऽवधीत् ॥ २१ ॥
पुत्रहीनां द्रौपदीं तां रुदन्तीमर्जुनस्ततः ।
शिरोमणिं तु जग्राह ऐषिकास्त्रेण तस्य च ॥ २२ ॥
अश्वत्थामास्त्रनिर्द्दग्धं जीवयामास वै हरिः ।
उत्तरायास्ततो गर्भं स परीक्षिदभून्नृपः ॥ २३ ॥
कृतवर्म्मा कृपो द्रौणिस्त्रयो मुक्तास्ततो रणात् ।
पाण्डवाः सात्यकिः कृष्णः सप्त मुक्ता न चापरे ॥ २४ ॥
स्त्रियश्चार्त्ताः समाश्वास्य भीमाद्यैः स युधिष्ठिरः ।
संस्कृत्य प्रहतान् वीरान् दत्तोदकधनादिकः ॥ २५ ॥
भीष्माच्छान्तनवाच्छ्रुत्वा धर्म्मान् सर्वांश्च शान्तिदान् ।
राजधर्म्मान्मोक्षधर्म्मान्दानधर्म्मान् नृपोऽभवत् ॥ २६ ॥
अश्वमेधे ददौ दानं ब्राह्मणेभ्योऽरिमर्द्दनः ।

श्रुत्वार्जुनान्मौषलेयं(१) यादवानाञ्च सङ्क्षयम् ।
राज्ये परीक्षितं स्थाप्य सानुजः स्वर्गमाप्तवान्(२) ॥ २७ ॥

इत्यादिमहापुराणे आग्नेये महाभारतवर्णनं नाम चतुर्दशोऽध्यायः ।

---

## अथ पञ्चदशोऽध्यायः ।

### पाण्डवचरितवर्णनम् ।

अग्निरुवाच । युधिष्ठिरे तु राज्यस्थे आश्रमादाश्रमान्तरम् ।
धृतराष्ट्रो वनमगाद् गान्धारी च पृथा द्विज ॥ १ ॥
विदुरस्त्वग्निना दग्धो वनजेन दिवङ्गतः ।
एवं विष्णुर्भुवो भारमहरद्दानवादिकम् ॥ २ ॥
धर्म्मायाधर्म्मनाशाय निमित्तीकृत्य पाण्डवान् ।
स विप्रशापव्याजेन मुषलेनाहरत् कुलम् ॥ ३ ॥
यादवानां भारकरं वज्रं राज्येऽभ्यषेचयत् ।
देवादेशात् प्रभासे स देहं त्यक्त्वा स्वयं हरिः ॥ ४ ॥
इन्द्रलोके ब्रह्मलोके पूज्यते स्वर्गवासिभिः ।
बलभद्रोऽनन्तमूर्त्तिः पातालस्वर्गमीयिवान् ॥ ५ ॥
अविनाशी हरिर्देवो ध्यानिभिर्ध्येय एव सः ।
विना तं द्वारकास्थानं प्लावयामास सागरः ॥ ६ ॥
संस्कृत्य यादवान् पार्थो दत्तोदकधनादिकः ।
स्त्रियोऽष्टावक्रशापेन भार्य्या विष्णोश्च याः स्थिताः ॥ ७ ॥
पुनस्तच्छापतो नीता गोपालैर्लगुडायुधैः ।
अर्जुनं हि तिरस्कृत्य पार्थः शोकञ्चकार ह ॥ ८ ॥
व्यासेनाश्वासितो मेने बलं मे कृष्णसन्निधौ ।

---

१ मौषलेनेति ख, चिह्नितपुस्तकपाठः ।
२ स्वर्गमाप्नुयादिति ख, ग, चिह्नितपुस्तकद्वयपाठः ।

हस्तिनापुरमागत्य पार्थः सर्वं न्यवेदयत् ॥ ८ ॥
युधिष्ठिराय स भ्रात्रे पालकाय नृणान्तदा ।
तद्वनस्थानि चास्त्राणि स रथस्ते च वाजिनः ॥ १० ॥
विना कृष्णेन तन्नष्टं दानञ्चाश्रोत्रिये यथा ।
तच्छ्रुत्वा धर्मराजस्तु राज्ये स्थाप्य परीक्षितम् ॥ ११ ॥
प्रस्थानं प्रस्थितो धीमान् द्रौपद्या भ्रातृभिः सह ।
संसारानित्यतां ज्ञात्वा जपन्नष्टशतं हरेः ॥ १२ ॥
महापथे तु पतिता द्रौपदी सहदेवकः ।
नकुलः फाल्गुनो भीमो राजा शोकपरायणः ॥ १३ ॥
इन्द्रानीतरथारूढः सानुजः स्वर्गमाप्तवान् ।
दृष्ट्वा दुर्योधनादींश्च वासुदेवं च हर्षितः ।
एतत्ते भारतं प्रोक्तं यः पठेत्स दिवं व्रजेत् ॥ १४ ॥

इत्यादिमहापुराणे आग्नेये महाभारतवर्णनं नाम
पञ्चदशोऽध्यायः ।

---

## अथ षोड़शोऽध्यायः ।

### बुद्धाद्यवतारकथनम् ।

अग्निरुवाच । वक्ष्ये बुद्धावतारञ्च पठतः शृण्वतोऽर्थदम् ।
पुरा देवासुरे युद्धे दैत्यैर्देवाः पराजिताः ॥ १ ॥
रक्ष रक्षेति शरणं वदन्तो जग्मुरीश्वरम् ।
मायामोहस्वरूपोऽसौ शुद्धोदनसुतोऽभवत् ॥ २ ॥
मोहयामास दैत्यांस्तांस्त्याजिता वेदधर्मकम् ।
ते च बौद्धा बभूवुर्हि तेभ्योऽन्ये वेदवर्जिताः ॥ ३ ॥
आर्हतः सोऽभवत् पश्चादार्हतानकरोत् परान् ।
एवं पाषण्डिनो जाता वेदधर्मादिवर्जिताः ॥ ४ ॥

नरकार्हं कर्म चक्रुर्ग्रहीष्यन्त्यधमादपि ।
सर्वे कलियुगान्ते तु भविष्यन्ति च सङ्कराः ॥ ५ ॥
दस्यवः शीलहीनाश्च वेदो वाजसनेयकः ।
दश पञ्च च शाखा वै प्रमाणेन भविष्यति ॥ ६ ॥
धर्म्मकञ्चुकसंवीता अधर्मरुचयस्तथा ।
मानुषान् भक्षयिष्यन्ति म्लेच्छाः पार्थिवरूपिणः ॥ ७ ॥
कल्की विष्णुयशःपुत्रो याज्ञवल्क्यपुरोहितः ।
उत्सादयिष्यति म्लेच्छान् गृहीतास्त्रः कृतायुधः ॥ ८ ॥
स्थापयिष्यति मर्यादां चातुर्वर्ण्ये यथोचिताम् ।
आश्रमेषु च सर्वेषु प्रजाः सद्धर्म्मवर्त्मनि ॥ ९ ॥
कल्किरूपं परित्यज्य हरिः स्वर्गं गमिष्यति ।
ततः कृतयुगन्नाम पुरावत् सम्भविष्यति ॥ १० ॥
वर्णाश्रमाश्च धर्मेषु स्वेषु स्थास्यन्ति सत्तम ।
एवं सर्वेषु कल्पेषु सर्वमन्वन्तरेषु च ॥ ११ ॥
अवतारा असङ्ख्याता अतीतानागतादयः ।
विष्णोर्दशावताराख्यान् यः पठेत् शृणुयान्नरः ॥ १२ ॥
सोवाप्तकामो विमलः सकुलः स्वर्गमाप्नुयात् ।
धर्म्माधर्म्मव्यवस्थानमेवं वै कुरुते हरिः ।
अवतीर्णश्च स गतः सर्गादेः कारणं हरिः ॥ १३ ॥

इत्यादिमहापुराणे आग्नेये बुद्धकल्क्यवतारवर्णनं नाम षोडशोऽध्यायः ।

---

## अथ सप्तदशोऽध्यायः ।

### सृष्टिविषयकवर्णनम् ।

अग्निरुवाच । जगत्सर्गादिकां क्रीडां विष्णोर्वक्ष्येधुना शृणु ।
स्वर्गादिकृत् स सर्गादिः सृष्ट्यादिः सगुणोगुणः ॥ १ ॥

ब्रह्माव्यक्तं सदाग्रेऽभूत् न खं रात्रिदिनादिकं।
प्रकृतिं पुरुषं विष्णुः(१) प्रविश्याक्षोभयत्ततः॥ २॥
सर्गकाले महत्तत्त्वमहङ्कारस्ततोऽभवत्।
वैकारिकस्तैजसश्च भूतादिश्चैव तामसः॥ ३॥
अहङ्काराच्छब्दमात्रमाकाशमभवत्ततः।
स्पर्शमात्रोऽनिलस्तस्माद्रूपमात्रोऽनलस्ततः॥ ४॥
रसमात्रा आप इतो गन्धमात्रा मही स्मृता(२)।
अहङ्कारात्तामसात्तु तैजसानीन्द्रियाणि च॥ ५॥
वैकारिका दश देवा मन एकादशेन्द्रियम्।
ततः स्वयम्भूर्भगवान्(३) सिसृक्षुर्विविधाः प्रजाः॥ ६॥
अप एव ससर्जादौ तासु वीर्यमवासृजत्(४)।
आपो नारा इति प्रोक्ता आपो वै नरसूनवः॥ ७॥
अयनन्तस्य ताः पूर्वं तेन नारायणः स्मृतः।
हिरण्यवर्णमभवत्(५) तदण्डमुदकेशयम्॥ ८॥
तस्मिन् जज्ञे स्वयं ब्रह्मा स्वयम्भूरिति नः श्रुतम्।
हिरण्यगर्भो(६) भगवानुषित्वा परिवत्सरम्॥ ९॥
तदण्डमकरोत् द्वैधन्दिवं भुवमथापि च।
तयोः शकलयोर्मध्ये आकाशमसृजत् प्रभुः॥ १०॥
अप्सु पारिप्लवां पृथ्वीं दिशश्च दशधा दधे।
तत्र कालं मनो वाचं कामं क्रोधमथो रतिम्॥ ११॥

१ विष्णुमिति ख, चिह्नितपुस्तकपाठः।

२ गन्धमात्रा धरित्र्यभूदिति ख, ग, घ, चिह्नितपुस्तकत्रयपाठः।

३ ततः स्वयम्भूर्भगवानित्यारभ्य सृष्टिमिच्छन् प्रजापतिरित्यन्तपाठस्तु महाभारतीय-हरिवंशपर्व्वणः उद्धृत इति अध्यवसीयते उभयत्र क्रमेण पाठसाम्यात्।

४ तासु वीजमथासृजदिति ख, चिह्नितपुस्तकपाठः।

५ हिरण्यगर्भमभवदिति ख, चिह्नितपुस्तकपाठः।

६ हिरण्यवर्ण इति ग, चिह्नितपुस्तकपाठः।

ससर्ज सृष्टिन्तद्रूपां स्रष्टुमिच्छन् प्रजापतिः ।
विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च ॥ १२ ॥
वयांसि च ससर्जादौ पर्जन्यञ्चाथ वक्त्रतः ।
ऋचो यजूंषि सामानि निर्ममे यज्ञसिद्धये ॥ १३ ॥
साध्यास्तैरयजन्देवान् भूतमुच्चावचं भुजात्(१) ।
सनत्कुमारं रुद्रञ्च ससर्ज्ज क्रोधसम्भवम् ॥ १४ ॥
मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् ।
वशिष्ठं मानसाः सप्त ब्रह्माण इति निश्चिताः(२) ॥ १५ ॥
सप्तैते जनयन्ति स्म प्रजा रुद्राश्च सत्तम ।
द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत् ॥
अर्द्धेन नारी तस्यां स ब्रह्मा वै चासृजत् प्रजाः ॥ १६ ॥

इत्यादिमहापुराणे आग्नेये जगत्सर्गवर्णनं नाम
सप्तदशोऽध्यायः ।

---

## अथ अष्टादशोऽध्यायः ।

### स्वायम्भुववंशवर्णनम् ।

अग्निरुवाच । प्रियव्रतोत्तानपादौ मनोः स्वायम्भुवात् सुतौ ।
अजीजनत्स तां कन्यां शतरूपां तपोन्वितताम्(३) ॥ १ ॥

---

१ भूतमुच्चावचं मुखादिति ख, घ, चिह्नितपुस्तकद्वयपाठः साध्यांस्तैरयजन् देवान् भूतमुच्चावचं प्रजा इति ङ, चिह्नितपुस्तकपाठः ।

२ निश्चितर्मिति ख, चिह्नितपुस्तकपाठः ।

३ अजीजनत् सुतां कन्यां सद्रूपाञ्च तपोन्वितामिति ग, चिह्नितपुस्तकपाठः । अजीजनत सुतां कन्यां शतरूपां तपोन्वितामिति ङ, चिह्नितपुस्तकपाठः ।

काम्यां(१) कर्द्दमभार्यातः सम्राट् कुक्षिर्विराट् प्रभुः ।
सुरुच्यामुत्तमो जज्ञे पुत्र उत्तानपादतः ॥ २ ॥
सुनीत्यान्तु ध्रुवः पुत्रस्तपस्तेपे स कीर्त्तये ।
ध्रुवो वर्षसहस्राणि त्रीणि दिव्यानि हे मुने ॥ ३ ॥
तस्मै प्रीतो हरिः प्रादान्मुन्यग्रे स्थानकं स्थिरम्(२) ।
श्लोकं पपाठ ह्युशना वृद्धिं दृष्ट्वा स तस्य च ॥ ४ ॥
अहोऽस्य तपसो वीर्यमहो श्रुतमहोऽद्भुतम् ।
यमद्य(३) पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः ॥ ५ ॥
तस्मात् श्लिष्टिञ्च(४) भव्यञ्च ध्रुवाच्छम्भुर्व्यजायत ।
श्लिष्टेराधत्त(५)सुच्छाया पञ्च पुत्रानकल्मषान् ॥ ६ ॥
रिपुं रिपुञ्जयं विप्रं वृकलं वृकतेजसम् ।
रिपोराधत्त वृहती चाक्षुषं सर्व्वतेजसम् ॥ ७ ॥
अजीजनत् पुष्करिण्यां वीरिण्यां चाक्षुषो मनुम् ।
मनोरजायन्त दश नड्वलायां सुतोत्तमाः ॥ ८ ॥
ऊरुः(६) पुरुः शतद्युम्नस्तपस्वी सत्यवाक्कविः ।
अग्निष्टुरतिरात्रश्च सुद्युम्नश्चाभिमन्युकः ॥ ९ ॥
ऊरोरजनयत् पुत्रान् षडाग्नेयी महाप्रभान् ।
अङ्गं सुमनसं स्वातिं क्रतुमङ्गिरसङ्गयम् ॥ १० ॥
अङ्गात् सुनीथापत्यं वै वेणमेकं व्यजायत ।

---

१ काम्या इति ग, ङ, चिह्नितपुस्तकद्वयपाठः ।
२ स्थानमुत्तममिति ङ, चिह्नितपुस्तकपाठः ।
३ यदत्र इति ङ, चिह्नितपुस्तकपाठः ।
४ तस्मात् श्लिष्टिञ्च इति ग, घ, चिह्नितपुस्तकद्वयपाठः ।
५ श्लिष्टे राधत्त इति ख, घ, चिह्नितपुस्तकद्वयपाठः ।
६ उरुरिति ख, ग, ङ, चिह्नितपुस्तकत्रयपाठः ।

अरक्षकः पापरतः स हतो मुनिभिः कुशैः ॥ ११ ॥
प्रजार्थमृषयोऽथास्य ममन्थुर्दक्षिणं करम् ।
वेणस्य मथिते पाणौ सम्बभूव पृथुर्नृपः ॥ १२ ॥
तं दृष्ट्वा मुनयः प्राहुरेष वै मुदिताः प्रजाः ।
करिष्यति महातेजा यशश्च प्राप्स्यते महत् ॥ १३ ॥
स धन्वी कवची जातस्तेजसा निर्दहन्निव ।
पृथुर्वैण्यः प्रजाः सर्वा ररक्ष क्षेत्रपूर्वजः ॥ १४ ॥
राजसूयाभिषिक्तानामाद्यः(१) स पृथिवीपतिः ।
तस्माच्चैव समुत्पन्नौ निपुणौ सूतमागधौ ॥ १५ ॥
तत्स्तोत्रञ्चक्रतुर्वीरौ राजाभूज्जनरञ्जनात् ।
दुग्धा गौस्तेन शस्यार्थं प्रजानां जीवनाय च ॥ १६ ॥
सह देवैर्मुनिगणैर्गन्धर्वैः साप्सरोगणैः ।
पितृभिर्दानवैः सर्पैर्वीरुद्भिः पर्वतैर्जनैः ॥ १७ ॥
तेषु तेषु च पात्रेषु दुह्यमाना वसुन्धरा ।
प्रादाद्यथेप्सितं क्षीरन्तेन प्राणानधारयत् ॥ १८ ॥
पृथोः पुत्रौ तु धर्म्मज्ञौ जज्ञातेऽन्तर्द्धिपालिनौ ।
शिखण्डिनी हविर्द्धानमन्तर्द्धानात् व्यजायत ॥ १९ ॥
हविर्द्धानात् षडाग्नेयी धीषणाजनयत् सुतान् ।
प्राचीनवर्हिषं शुक्रं(२) गयं कृष्णं व्रजाजिनौ ॥ २० ॥
प्राचीनाग्राः कुशास्तस्य पृथिव्यां यजतो यतः ।
प्राचीनवर्हिर्भगवान् महानासीत्प्रजापतिः ॥ २१ ॥
सवर्णाऽधत्त(३)सामुद्री दश प्राचीनवर्हिषः ।

१ राजसूयाभिषिक्तानामाद्य इति ख चिह्नितपुस्तकपाठः ।
२ शुक्लमिति ग, चिह्नितपुस्तकपाठः ।

सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः ॥ २२ ॥
अपृथग्धर्म्मचरणास्तेतप्यन्त महत्तपः ।
दशवर्षसहस्राणि समुद्रसलिलेशयाः ॥ २३ ॥
प्रजापतित्वं सम्प्राप्य तुष्टा विष्णोश्च निर्गताः ।
भूः खं व्याप्तं हि तरुभिस्तांस्तरूनदहंस्ते ॥ २४ ॥
मुखजाग्निमरुद्भ्यां च दृष्ट्वा चाथ द्रुमक्षयम् ।
उपगम्याब्रवीदेतान् राजा सोमः प्रजापतीन् ॥ २५ ॥
कोपं यच्छत दास्यन्ति कन्यां वो मारिषां वराम् ।
तपस्विनो मुनेः कण्डोः(१) प्रम्लोचायां ममैव च ॥ २६ ॥
भविष्यं जानता सृष्टा भार्या वोऽस्तु कुलङ्करी ।
अस्यामुत्पत्स्यते दक्षः प्रजाः संवर्द्धयिष्यति ॥ २७ ॥
प्रचेतसस्तां जगृहुर्दक्षोऽस्याञ्च ततोऽभवत् ।
अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदः ॥ २८ ॥
स सृष्ट्वा मनसा(२)दक्षः पश्चादसृजत स्त्रियः ।
ददौ स दश धर्म्माय कश्यपाय त्रयोदश ॥ २९ ॥
सप्तविंशति सोमाय चतस्रोऽरिष्टनेमिने ।
द्वे चैव बहुपुत्राय द्वे चैवाङ्गिरसे अदात्(३) ॥ ३० ॥
तासु देवाश्च नागाद्या मैथुनान्मनसा पुरा ।
धर्म्मसर्गम्प्रवक्ष्यामि दशपत्नीषु धर्मतः ॥ ३१ ॥
विश्वेदेवास्तु विश्वायाः साध्यान् साध्या व्यजायत ।
मरुत्वत्या मरुत्वन्तो वसोस्तु वसवोऽभवन् ॥ ३२ ॥
भानोस्तु भानवः पुत्रा मुहूर्त्तास्तु मुहूर्त्तजाः ।

१ कण्डोरिति ग, चिह्नितपुस्तकपाठः कर्णोरिति ङ, चिह्नितपुस्तकपाठः ।
२ स दृष्ट्वा मनसा इति ख, ग चिह्नितपुस्तकपाठः ।
३ द्वे चैव भाण्डवे तत इति ग चिह्नितपुस्तकपाठः ।

सम्बाया(१) धर्मतो घोषो नागवोथो(२) च यामिजा ॥ ३३ ॥
पृथिवीविषयं सर्वमरुन्धत्यां व्यजायत ।
सङ्कल्पायास्तु सङ्कल्पा इन्दोर्नक्षत्रतः सुताः ॥ ३४ ॥
आपो ध्रुवश्च सोमश्च धरश्चैवानिलोनलः(३) ।
प्रत्यूषश्च प्रभासश्च वसवोष्टौ च नामतः ॥ ३५ ॥
आपस्य पुत्रा वेतण्डः श्रमः शान्तो मुनिस्तथा ।
ध्रुवस्य कालो लोकान्तो वर्चाः सोमस्य वै सुतः ॥ ३६ ॥
धरस्य पुत्रो द्रविणो(४) हुतहव्यवहस्तथा ।
मनोहरायाः शिशिरः प्राणोथ रमणस्तथा(५) ॥ ३७ ॥
पुरोजवोनिलस्यासीदविज्ञातोऽनलस्य च ।
अग्निपुत्रः कुमारश्च शरस्तम्बे व्यजायत ॥ ३८ ॥
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः ।
कृत्तिकातः कार्त्तिकेयो यतिः सनत्कुमारकः(६) ॥ ३९ ॥
प्रत्यूषाद्देवलो जज्ञे विश्वकर्मा प्रभासतः ।
कर्त्ता शिल्पसहस्राणां त्रिदशानाञ्च वर्द्धकिः ॥ ४० ॥
मनुष्याश्चोपजीवन्ति शिल्पं वै भूषणादिकं ।
सुरभी(७) कश्यपाद्रुद्रानेकादश विजज्ञुषी ॥ ४१ ॥
महादेवप्रसादेन तपसा भाविता सती ।

१ लम्बाया इति ग. चिह्नितपुस्तकपाठः ।
२ नगवीथी इति ख. चिह्नितपुस्तकपाठः ।
३ धर्मश्चैवानिलोनल इति ख. ग, चिह्नितपुस्तकद्वयपाठः ।
४ धरिष इति ग. चिह्नितपुस्तकपाठः ।
५ मरणस्तथेति ग. चिह्नितपुस्तकपाठः ।
[illegible]त सनतकुमारत इति ग. चिह्नितपुस्तकपाठः ।
७ सुबती इति ग. चिह्नितपुस्तकपाठः ।

अजैकपादहिर्ब्रध्नस्त्वष्टा रुद्राश्च सत्तम(१) ॥ ४२ ॥
त्वष्टुश्चैवात्मजः श्रीमान्विश्वरूपो महायशाः ।
हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः ॥ ४३ ॥
वृषाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा ।
मृगव्याधश्च सर्पश्च कपाली दश चैकक: ।
रुद्राणां च शतं लक्षं यैर्व्याप्तं सचराचरं ॥ ४४ ॥

इत्यादिमहापुराणे आग्नेये जगत्सर्गवर्णनं नाम अष्टादशोऽध्यायः ।

## अथोनविंशतितमोऽध्यायः ।

### कश्यपवंशवर्णनम् ।

अग्निरुवाच । कश्यपस्य वदे सर्गमदित्यादिषु हे मुने ।
चाक्षुषे तुषिता देवास्तेऽदित्यां कश्यपात्मजः ॥ १ ॥
आसन् विष्णुश्च शक्रश्च त्वष्टा धाता तथार्य्यमा ।
पूषा विवस्वान् सविता मित्रोथ वरुणो भगः ॥ २ ॥
अंशुश्च द्वादशादित्या आसन् वैवस्वतेन्तरे ।
अरिष्टनेमिपत्नीनामपत्यानीह षोडश ॥ ३ ॥
बहुपुत्रस्य विदुषश्चतस्रो विद्युतः सुताः(२) ।
प्रत्यङ्गिरसजाः श्रेष्ठाः कृशाश्वस्य सुरायुधाः ॥ ४ ॥
उदयास्तमने सूर्य्ये तद्वदेते युगे युगे ।
हिरण्यकशिपुर्दित्यां हिरण्याक्षश्च कश्यपात् ॥ ५ ॥

१ सप्तम इति ख, ङ, चिह्नितपुस्तकपाठः ।
२ स्मृता इति ग, चिह्नितपुस्तकपाठः ।

सिंहिका चाभवत् कन्या विप्रचित्तेः परिग्रहः ।
राहुप्रभृतयस्तस्यां सैंहिकेया इति श्रुताः ॥ ६ ॥
हिरण्यकशिपोः पुत्राश्चत्वारः प्रथितौजसः ।
अनुह्रादश्च ह्रादश्च प्रह्रादश्चातिवैष्णवः ॥ ७ ॥
संह्रादश्च चतुर्थोऽभूत् ह्रादपुत्रो ह्रदस्तथा ।
ह्रदस्य पुत्र आयुष्मान्(१) शिविर्वाष्कल एव च ॥ ८ ॥
विरोचनस्तु प्राह्रादिर्बलिर्जज्ञे विरोचनात् ।
बलेः पुत्रशतं त्वासीद्बाणज्येष्ठं(२) महामुने ॥ ९ ॥
पुराकल्पे हि बाणेन प्रसाद्योमापतिं वरः(३) ।
पार्श्वतो विहरिष्यामीत्येवं प्राप्तश्च ईश्वरात्(४) ॥ १० ॥
हिरण्याक्षसुताः पञ्च शम्बरः शकुनिस्त्विति(५) ।
द्विमूर्द्धा शङ्कुरार्यश्च(६) शतमासन् दनोः सुताः ॥ ११ ॥
स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु शची स्मृता ।
उपदानवी हयशिरा शर्म्मिष्ठा वार्षपर्वणी ॥ १२ ॥
पुलोमा कालका चैव वैश्वानरसुते उभे ।
कश्यपस्य तु भार्य्ये द्वे तयोः पुत्राश्च कोटयः ॥ १३ ॥
प्रह्रादस्य चतुष्कोट्यो निवातकवचाः कुले ।
ताम्रायाः षट् सुताः स्युश्च काकी श्येनी च भास्यपि ॥ १४ ॥
गृध्रिका शुचि सुग्रीवा(७) ताभ्यः काकादयोऽभवन् ।

१ प्रह्लादपुत्र आयुष्मानिति ग, ग, चिह्नितपुस्तकद्वयपाठः ।
२ बाणज्येष्ठमिति ख, ग, चिह्नितपुस्तकद्वयपाठः ।
३ प्रभुमिति ख, चिह्नितपुस्तकपाठः ।
४ इत्येव प्राप्तमीश्वरादिति ख, चिह्नितपुस्तकपाठः ।
५ शम्बरः शकुनिस्त्वितीति ख, चिह्नितपुस्तकपाठः शकुनिस्तथेति ङ, चिह्नितपुस्तकपाठः ।
६ द्विमूर्द्धा शम्बरायाश्च इति ख, चिह्नितपुस्तकपाठः ।
७ गृध्रिका च शुचिग्रीवी इति ख, चिह्नितपुस्तकपाठः गृध्रिकाशुचिसुग्रीवी इति ग, चिह्नितपुस्तकपाठः ।

अश्वाश्चोष्ट्राश्च ताम्राया अरुणो गरुडस्तथा ॥ १५ ॥
विनतायाः सुस्त्वस्तु सर्पाश्च सुरसाभवाः ।
काद्रवेयाः सुस्त्वस्तु शेषवासुकितक्षकाः ॥ १६ ॥
दंष्ट्रिणः क्रोधवशजा धरोत्थाः (१) पक्षिणो जले ।
सुरभ्यां गोमहिष्यादि इरोत्पन्नास्तृणादयः ॥ १७ ॥
खसायां यक्षरक्षांसि मुनेरप्सरसोभवन् ।
अरिष्टायान्तु गन्धर्वाः कश्यपाद्धि स्थिरस्थिरं (२) ॥ १८ ॥
एषां पुत्रादयोऽसङ्ख्या देवैर्वै दानवा जिताः(३) ।
दितिर्विनष्टपुत्रा वै तोषयामास कश्यपं ॥ १९ ॥
पुत्रमिन्द्रप्रहर्त्तारमिच्छती प्राप कश्यपात् ।
पादाप्रक्षालनात् सुप्ता तस्या गर्भं जघान ह ॥ २० ॥
छिद्रमन्विष्य चेन्द्रस्तु ते देवा मरुतोऽभवन् ।
शक्रस्यैकोनपञ्चाशत्सहाया दीप्ततेजसः ॥ २१ ॥
एतत् सर्वं हरिर्ब्रह्मा अभिषिच्य पृथुं नृपं ।
ददौ क्रमेण राज्यानि अन्येषामधिपो हरिः ॥ २२ ॥
द्विजौषधीनां चन्द्रञ्च अपान्तु वरुणो नृपः ।
राज्ञां वैश्रवणो राजा सूर्याणां विष्णुरीश्वरः ॥ २३ ॥
वसूनां पावको राजा मरुतां वासवः प्रभुः ।
प्रजापतीनां दक्षोथ प्रह्लादो दानवाधिपः ॥ २४ ॥
पितॄणां च यमो राजा भूतादीनां हरः(४) प्रभुः ।
हिमवांश्चैव शैलानां नदीनां सागरः प्रभुः ॥ २५ ॥

---

१ धरण्या इति ख, चिह्नितपुस्तकपाठः ।

२ कश्यपाद्धि परस्परमिति ख, चिह्नितपुस्तकपाठः ।

३ देवैर्दैत्याः पराजिता इति ख, चिह्नितपुस्तकपाठः ।

४ भूतानाञ्च हर इति ग, ङ, चिह्नितपुस्तकद्वयपाठः ।

गन्धर्वाणां चित्ररथो नागानामथ वासुकिः ।
सर्पाणां तक्षको राजा गरुडः पक्षिणामथ ॥ २६ ॥
ऐरावतो गजेन्द्राणां गोवृषोथ गवामपि ।
मृगाणामथ शार्दूलः प्लक्षो वनस्पतीश्वरः ॥ २७ ॥
उच्चैःश्रवास्तथाश्वानां सुधन्वा पूर्वपालकः ।
दक्षिणस्यां शङ्खपदः केतुमान् पालको जले ।
हिरण्यरोमकः सौम्ये प्रतिसर्गोयमीरितः ॥ २८ ॥

इत्यादिमहापुराणे आग्नेये प्रतिसर्गवर्णनं नाम
ऊनविंशतितमो अध्यायः ।

---

## अथ विंशतितमोऽध्यायः ।

### सर्गविषयकवर्णनं ।

अग्निरुवाच । प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः ।
तन्मात्राणां द्वितीयस्तु भूतसर्गो हि स स्मृतः ॥ १ ॥
वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः ।
इत्येष प्राकृतः सर्गः सम्भूतो बुद्धिपूर्वकः ॥ २ ॥
मुख्यः सर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ।
तिर्य्यक्स्रोतास्तु यः प्रोक्तस्तिर्य्यग्योन्यस्ततः स्मृतः ॥ ३ ॥
तथोर्द्ध्वस्रोतसां षष्ठो देवसर्गस्तु स स्मृतः ।
ततोर्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः ॥ ४ ॥
अष्टमोनुग्रहः सर्गः सात्विकस्तामसश्च यः ।
पञ्चैते वैकृताः सर्गाः प्राकृतास्त्रयः स्मृताः ॥ ५ ॥
प्राकृतो वैकृतश्चैव कौमारो नवमस्तथा ।

ब्रह्मतो नव सर्गास्तु जगतो मूलहेतवः ॥ ६ ॥
ख्यात्याद्या दक्षकन्यास्तु भृग्वाद्या उपयेमिरे।
नित्यो नैमित्तिकः सर्गस्त्रिधा प्रकथितो जनैः ॥ ७ ॥
प्राकृता दैनन्दिनी स्यादन्तरप्रलयादनु।
जायते यत्रानुदिनं नित्यसर्गो हि सम्मतः ॥ ८ ॥
देवौ धाताविधातारौ भृगोः ख्यातिरसूयत।
श्रियञ्च पत्नी विष्णोर्या स्तुता शक्रेण हृदये ॥ ९ ॥
धातुर्विधातुर्द्वौ पुत्रौ क्रमात् प्राणो मृकण्डुकः।
मार्कण्डेयो मृकण्डोश्च जज्ञे वेदशिरास्ततः ॥ १० ॥
पौर्णमासश्च सम्भूत्यां मरीचेरभवत् सुतः।
स्मृत्यामङ्गिरसः पुत्राः सिनीवाली कुहूस्तथा ॥ ११ ॥
राकाश्चानुमतिश्चात्रेरनसूयाप्यजीजनत्।
सोमं दुर्वाससं पुत्रं दत्तात्रेयञ्च योगिनम् ॥ १२ ॥
प्रीत्यां पुलस्त्यभार्यायां दत्तोलिस्तत्सुतोभवत्।
क्षमायां(१) पुलहाज्जाताः सहिष्णुः कर्मपादिकाः ॥ १३ ॥
सन्नत्याञ्च क्रतोरासन् बालिखिल्या महौजसः।
अङ्गुष्ठपर्वमात्रास्ते ये हि षष्टिसहस्रिणः ॥ १४ ॥
उर्ज्जायाञ्च वशिष्ठाच्च राजा गात्रोर्ध्वबाहुकः(२)।
सवनश्चालघुः शुक्रः (३) सुतपाः सप्त चर्षयः ॥ १५ ॥
पावकः पवमानोभूच्छुचिः स्वाहाग्निजोभवत्।

---

१ कुमार्य्यामिति ख, चिह्नितपुस्तकपाठः।

२ रजोगोत्रोर्द्धबाहुकं इति ख, चिह्नितपुस्तकपाठः राजा गात्रोर्द्धबाह्नक इति ग, चिह्नितपुस्तकपाठः, रजोगोत्रोर्द्धवाहक इति ङ, चिह्नितपुस्तकपाठः।

३ सवलश्चामघः शुक्र इति घ, चिह्नितपुस्तकपाठः।

अग्निष्वात्ता बर्हिषदोऽनग्नयः साग्नयो ह्यजात् (१) ॥ १६ ॥
पितृभ्यश्च स्वधायाश्च मेना वैधारिणी सुते(२) ।
हिंसाभार्या त्वधर्मस्य तयोर्जज्ञे तथानृतम् ॥ १७ ॥
कन्या च निर्कतिस्ताभ्यां भयन्नरकमेव च ।
माया च वेदना चैव मिथुनन्त्विदमेतयोः ॥ १८ ॥
तयोर्जज्ञेथ वै मायां मृत्युं भूतापहारिणम् ।
वेदना च सुतं चापि दुःखं जज्ञेथ रौरवात् ॥ १९ ॥
मृत्योर्व्याधिजराशोकतृष्णाक्रोधाश्च जज्ञिरे ।
ब्रह्मणश्च रुदन् जातो रोदनाद्रुद्रनामकः ॥ २० ॥
भवं शर्वमथेशानं तथा पशुपतिं द्विज ।
भीममुग्रं महादेवमुवाच स पितामहः ॥ २१ ॥
दक्षकोपाच्च तद्भार्या देहन्तत्याज सा सती ।
हिमवद्दुहिता भूत्वा पत्नी शम्भोरभूत् पुनः ॥ २२ ॥
ऋषिभ्यो नारदाद्युक्ताः पूजाः स्नानादिपूर्विकाः ।
स्वायम्भुवाद्यास्ताः कृत्वा विष्ण्वादेर्भुक्तिमुक्तिदाः ॥ २३ ॥

इत्यादिमहापुराणे आग्नेये जगत्सर्गवर्णनं नाम
विंशतितमोऽध्यायः ।

## अथ एकविंशोऽध्यायः ।

सामान्यपूजाकथनं ।

नारद उवाच । सामान्यपूजां विष्ण्वादेर्वक्ष्ये मन्त्रांश्च सर्वदान् ।
समस्तपरिवाराय अच्युताय नमो यजेत् ॥ १ ॥

---

१ साग्नयो ह्यगादिति ख, चिह्नितपुस्तकपाठः, अग्निपाला बर्हिषदो ह्याज्यपाः साग्नयो ह्यजादिति घ, चिह्नितपुस्तकपाठः ।

२ वैसारिणी सुते इति ख, चिह्नितपुस्तकपाठः ।

धात्रे विधात्रे गङ्गायै यमुनायै निधी तथा।
द्वारश्रियं वास्तुनरं शक्तिं कूर्म्ममनन्तकम् ॥ २ ॥
पृथिवीं धर्म्मकं ज्ञानं वैराग्यैश्वर्यमेव च।
अधर्मादीन् कन्दनालपद्मकेशरकर्णिकाः ॥ ३ ॥
ऋग्वेदाद्यं कृताद्यञ्च सत्वाद्यर्कादिमण्डलम्।
विमलोत्कर्षिणी ज्ञाना क्रिया योगा च ता यजेत् ॥ ४ ॥
प्रह्वीं सत्यां तथेशानानुग्रहासनमूर्त्तिकाम्(१)।
दुर्गां गिरङ्गणं(२) क्षेत्रं वासुदेवादिकं यजेत् ॥ ५ ॥
हृदयञ्च शिरः शूलं वर्म नेत्रमथास्त्रकम्।
शङ्खं चक्रं गदां पद्मं श्रीवत्सं कौस्तुभं यजेत् ॥ ६ ॥
वनमालां श्रियं पुष्टिं गरुडं गुरुमर्चयेत्।
इन्द्रमग्निं यमं रक्षो जलं वायुं धनेश्वरम् ॥ ७ ॥
ईशानन्तमजं चास्त्रं वाहनं कुमुदादिकम्।
विष्वक्सेनं मण्डलादौ सिद्धिः पूजादिना भवेत् ॥ ८ ॥
शिवपूजाथ सामान्या पूर्वं नन्दिनमर्चयेत्।
महाकालं यजेद्गङ्गां(३) यमुनाञ्च गणादिकम् ॥ ९ ॥
गिरं श्रियं(४) गुरुं वास्तुं शक्त्यादीन् धर्मकादिकम् (५)।
वामा ज्येष्ठा तथा रौद्री काली कलविकारिणी ॥ १० ॥
बलविकारिणी चापि बलप्रमथिनी क्रमात्।

---

१ प्रह्वी सन्ध्या तथेशानानुग्रहासनमूर्त्तिका इति ग, चिह्नितपुस्तकपाठः।

२ दुर्गां गिरिं गणमिति ख,चिह्नितपुस्तकपाठः दुर्गां शिवं गणमिति घ, चिह्नित-पुस्तकपाठः।

३ यजेत् दुर्गां इति ख, घ, चिह्नितपुस्तकद्वयपाठः।

४ गिरिं श्रियमिति ख, चिह्नितपुस्तकपाठः शिवं श्रियमिति घ, चिह्नितपुस्तकपाठः।

५ गौरीं श्रियं गुरुं वास्तु शक्त्यादिं धर्मकादिकमिति ङ, चिह्नितपुस्तकपाठः।

सर्व्वभूतदमनी च मदनोन्मादिनी शिवासनं ॥ ११ ॥
ह्रां हुं ह्रां शिवमूर्त्तये साङ्गवक्त्रं शिवं यजेत्।
ह्रां शिवाय ह्रामित्यादि ह्रामीशानादिवक्त्रकं ॥ १२ ॥
ह्रीं गौरीं गं गणः शक्रमुखाश्चण्डो हृदादिकाः।
क्रमात्सूर्य्यार्चने मन्त्रा दण्डी पूज्यश्च पिङ्गलः ॥ १३ ॥
उच्चैःश्रवाश्चारुणश्च प्रभूतं विमलं यजेत्।
साराध्योपरमसुखं(१) स्कन्दाद्यं मध्यतो यजेत् ॥ १४ ॥
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा।
अमोघा विद्युता चैव पूज्याथ सर्व्वतोमुखी ॥ १५ ॥
अर्क्कासनं हि हं खं ख सोल्कायेति च मूर्त्तिकाम्।
ह्रां ह्रीं स सूर्य्याय नम आं नमो हृदयाय च ॥ १६ ॥
अर्क्काय शिरसे तद्वदग्नीशासुरवायुगान्(२)।
भूर्भुवः स्वरे ज्वालिनि शिखा हुं कवचं स्मृतं ॥ १७ ॥
भां नेत्रं वस्त्रयार्क्कास्त्रं राज्ञी शक्तिश्च निष्क्षुभा(३)।
सोमोऽङ्गारकोथ बुधो जीवः शुक्रः शनिः क्रमात् ॥ १८ ॥
राहुः केतुस्तेजश्चण्डः सङ्क्षेपादथ पूजनं।
आसनं मूर्त्तये मूलं हृदाद्यं परिचारकः ॥ १९ ॥
विष्ण्वासनं विष्णुमूर्त्ते रों श्रों श्रीं श्रीधरो हरिः।
ह्रीं सर्व्वमूर्त्तिमन्त्रोयमिति त्रैलोक्यमोहनः ॥ २० ॥
ह्रीं हृषीकेशः क्लीं विष्णुः स्वरैर्दीर्घैर्हृदादिकं।
समस्तैः पञ्चमी पुजा सङ्ग्रामादौ जयादिदा ॥ २१ ॥

१ सावाराध्योपरं दुःखमिति ख, चिह्नितपुस्तकपाठः।

२ अग्निसाव्ययवायुगानिति ख, चिह्नितपुस्तकपाठः। अर्काय शिरसे तद्वदग्निजायायुगस्तदिति ङ, चिह्नितपुस्तकपाठः।

३ शक्तिश्च निर्गता इति ख, चिह्नितपुस्तकपाठः।

चक्रं गदां क्रमाच्छङ्खं मुषलं खड्गशार्ङ्गकम् ।
पाशाङ्कुशौ च श्रीवत्सं कौस्तुभं वनमालया ॥ २२ ॥
श्रीं श्रीर्महालक्ष्मीतार्क्ष्यौ गुरुरिन्द्रादयोऽर्चनम् ।
सरस्वत्यासनं मूर्त्तिरीं स्त्रीं देवी सरस्वती ॥ २३ ॥
हृदाद्या लक्ष्मीर्मेधा च कलातुष्टिश्च पुष्टिका ।
गौरी प्रभामती दुर्गा गणो गुरुश्च क्षेत्रपः ॥ २४ ॥
तथा गं गणपतये च स्त्रीं गौर्यै च श्रीं श्रियै ।
ह्रीं त्वरितायै ह्रीं सौ त्रिपुरा(१)चतुर्थ्यन्तनमोन्तकाः ॥ २५ ॥
प्रणवाद्याश्च नामाद्यमक्षरं विन्दुसंयुतं ।
ओं युतं वा सर्वमन्त्रपूजनाज्जपतः स्मृताः ॥ २६ ॥
होमात्तिलघृताद्यैश्च धर्मकामार्थमोक्षदाः ।
पूजामन्त्रान् पठेद्यस्तु भुक्तभोगो दिवं व्रजेत् ॥ २७ ॥

इत्यादिमहापुराणे आग्नेये वासुदेवादिपूजाकथनं नाम
एकविंशतितमोऽध्यायः ।

---

## अथ द्वाविंशोऽध्यायः ।

### स्नानविधिकथनं ।

नारद उवाच । वक्ष्ये स्नानं क्रियार्थं नृसिंहेन तु मृत्तिकां ।
गृहीत्वा तां द्विधा कृत्वा मनःस्नानमथैकया ॥ १ ॥
निमज्याचम्य विन्यस्य सिंहेन कृतरक्षकः(२) ।

---

१ ह्रीं त्वरितायै, ह्रीं ऐं क्लीं सौ त्रिपुरा इति ख, चिह्नितपुस्तकपाठः ।
२ कृतरक्षण इति घ, चिह्नितपुस्तकपाठः ।

विधिस्नानं ततः कुर्य्यात् प्राणायामपुरःसरं ॥ २ ॥
हृदि ध्यायन् हरिस्नानं(१) मन्त्रेणाष्टाक्षरेण हि ।
त्रिधा पाणितले मृत्स्नां दिग्बन्धं सिंहजप्ततः ॥ ३ ॥
वासुदेवप्रजप्तेन तीर्थं सङ्कल्प्य चालभेत् ।
गात्रं वेदादिना मन्त्रैः सम्मार्ज्याराध्य मूर्त्तिना ॥ ४ ॥
कृत्वाघमर्षणं वस्त्रं परिधाय समाचरेत् ।
विन्यस्य मन्त्रैर्द्दिग्मार्ज्य पाणिस्थं जलमेव च ॥ ५ ॥
नारायणेन संयम्य वायुमाघ्राय चोत्सृजेत् ।
जलं ध्यायन् हरिं पश्चाद्दत्वार्घ्यं द्वादशाक्षरं ॥ ६ ॥
जप्तान्याम्कृतप्रस्तस्य योगपीठादितः क्रमात् ।
मन्त्रान् दिक्पालपर्यन्तानृषीन् पितृगणानपि ॥ ७ ॥
मनुष्यान् सर्वभूतानि स्थावरान्तान्यथावसेत् ।
न्यस्य चाङ्गानि संहृत्य मन्त्रान्यागगृहं व्रजेत् ॥
एवमन्यासु पूजासु मूलाद्यैः स्नानमाचरेत् ॥ ८ ॥

इत्यादिमहापुराणे आग्नेये स्नानविधिकथनं नाम द्वाविंशोऽध्यायः ।

---

## अथ त्रयोविंशोऽध्यायः ।

### पूजाविधिकथनं ।

नारद उवाच । वक्ष्ये पूजाविधिं विप्रा यत् कृत्वा सर्वमाप्नुयात् ।
प्रक्षालिताङ्घ्रिराचम्य वाग्यतः कृतरक्षकः ॥ १ ॥

---

१ ध्यायन् हरिं देवमिति च, चिह्नितपुस्तकपाठः ।

प्राङ्मुखः स्वस्तिकं बद्ध्वा पद्माद्यपरमेव च ।
यं बीजं नाभिमध्यस्थं धूम्रं चण्डानिलात्मकं ॥ २ ॥
विशोषयेदशेषन्तु(१) ध्यायेत् कायात्तु कल्मषं ।
क्षौं हृत्पङ्कजमध्यस्थं बीजं तेजोनिधिं स्मरन् ॥ ३ ॥
अधोर्द्ध्वतिर्य्यग्गाभिस्तु ज्वालाभिः कल्मषं दहेत् ।
शशाङ्काकृतिवद्ध्यायेदम्बरस्थं सुधाम्बुभिः ॥ ४ ॥
हृत्पद्मव्यापिभिर्देहं स्वकमाप्लावयेत्सुधीः(२) ।
सुषुम्नायोनिमार्गेण सर्वनाडीविसर्पिभिः ॥ ५ ॥
शोधयित्वा न्यसेत्तत्त्वं करशुद्धिरथास्त्रकं ।
व्यापकं हस्तयोरादौ दक्षिणाङ्गुष्ठतोऽङ्गकं ॥ ६ ॥
मूलं देहे द्वादशाङ्गं न्यसेन्मन्त्रैर्द्विषट्ककैः ।
हृदयं च शिरश्चैव शिखा वर्म्मास्त्रलोचने ॥ ७ ॥
उदरं च तथा पृष्ठं बाहूरुजानुपादकं ।
मुद्रां दत्त्वा स्मरेत् विष्णुं जप्त्वाष्टशतमर्च्चयेत् ॥ ८ ॥
वामे तु वर्द्धनीं न्यस्य पूजाद्रव्यं तु दक्षिणे ।
प्रक्षाल्यास्त्रेण चार्घ्येण गन्धपुष्पान्विते न्यसेत् ॥ ९ ॥
चैतन्यं सर्व्वगं ज्योतिरष्टजप्तेन वारिणा ।
फडन्तेन तु संसिच्य हस्ते ध्यात्वा हरिं यजे(३) ॥ १० ॥
धर्मं ज्ञानं च वैराग्यमैश्वर्य्यं वह्निदिङ्मुखाः ।
अधर्मादीनि गात्राणि पूर्वादौ योगपीठके ॥ ११ ॥
कूर्मं पीठे ह्यनन्तञ्च यमं(४)सूर्य्यादिमण्डलं ।

१ विशोषयेदशेषन्तु इति ङ, चिह्नितपुस्तकपाठः ।
२ स्वकामान्द्रावयेत् सुधीः इति ख, चिह्नितपुस्तकपाठः स्वकमाह्लादयेत सुधीरिति ङ, चिह्नितपुस्तकपाठः ।
३ स्थमं तेन तु संसिच्य हस्ते ध्यात्वा हरिं पठेदिति ङ, चिह्नितपुस्तकपाठः ।
४ पद्ममिति ख, ग, ङ, चिह्नितपुस्तकत्रयपाठः ।

विमलाद्याः केशरस्थानुग्रहा कर्णिकास्थिता ॥ १२ ॥
पूर्वं स्वहृदये ध्यात्वा आवाह्यार्च्चेच्च मण्डले ।
अर्घ्यं पाद्यं तथाचामं मधुपर्कं पुनश्च तत् ॥ १३ ॥
स्नानं वस्त्रोपवीतञ्च भूषणं गन्धपुष्पकं ।
धूपदीपनैवेद्यानि पुण्डरीकाक्षविद्यया ॥ १४ ॥
यजेदङ्गानि पूर्वादौ द्वारि पूर्वे परेण्डजं ।
दक्षे चक्रं गदां सौम्ये कोणे शङ्खं धनुर्न्यसेत् ॥ १५ ॥
देवस्य वामतो दक्षे चेषुधी खड्गमेव च ।
वामे चर्म्म श्रियं(१) दक्षे पुष्टिं वामेग्रतो न्यसेत् ॥ १६ ॥
वनमालाञ्च श्रीवत्सकौस्तुभौ दिक्पतीन्बहिः ।
स्वमन्त्रैः पूजयेत् सर्वान् विष्णुर्धावसानतः(२) ॥ १७ ॥
व्यस्तेन च समस्तेन अङ्गैर्वीजेन वै यजेत् ।
जप्त्वा प्रदक्षिणीकृत्य स्तुत्वार्घ्यञ्च समर्प्य च ॥ १८ ॥
हृदये विन्यसेद्ध्यात्वा अहं ब्रह्म हरिस्त्विति ।
आगच्छावाहने योज्यं क्षमस्वेति विसर्ज्जने ॥ १९ ॥
एवमष्टाक्षराद्यैश्च पूजां कृत्वा विमुक्तिभाक् ।
एकमूर्त्त्यर्चनं प्रोक्तं नवव्यूहार्चनं शृणु ॥ २० ॥
अङ्गुष्ठकद्वये न्यस्य वासुदेवं बलादिकान् ।
तर्ज्जन्यादौ शरीरेय शिरोललाटवक्त्रके ॥ २१ ॥
हृन्नाभिगुह्यजान्वङ्घ्रौ मध्ये पूर्वादिकं यजेत्(३) ।
एकपीठं नवव्यूहं नवपीठञ्च पूर्ववत् ॥ २२ ॥

---

१ वामे चर्म्म श्रियमिति ख, चिह्नितपुस्तकपाठः ।

२ अस्मत्सन्निधपुस्तकेषु विष्णुर्धावमानत इति विष्णावर्धा च मानतः इतिच पाठो वर्त्तते । अयन्तसमीचीन इव प्रतिभाति विष्णुमर्ध्यासनादिभिरिति तु युक्तः पाठः ।

३ मध्यगुल्फादित पिस्फच इति ङ, चिह्नितपुस्तकपाठः ।

नवाङ्गे नवमूर्त्त्या च नवव्यूहस्य पूर्ववत्।
इष्टं मध्ये ततः स्थाने वासुदेवस्य पूजयेत्॥ २३॥

इत्यादिमहापुराणे आग्नेये आदिमूर्त्त्यादिपूजाविधि
र्नाम त्रयोविंशोऽध्यायः॥

---

## अथ चतुर्विंशोऽध्यायः।

### कुण्डनिर्म्माणादिविधिः।

नारद उवाच। अग्निकार्य्यं प्रवक्ष्यामि येन स्यात्सर्वकामभाक्।
चतुरभ्यधिकं विंशमङ्गुलं चतुरस्रकं॥ १॥
सूत्रेण सूत्रयित्वा तु क्षेत्रं तावत् खनेत्समं।
खातस्य मेखला कार्य्या त्यक्त्वा चैवाङ्गुलद्वयं॥ २॥
सत्त्वादिसञ्ज्ञा(१) पूर्वाशा द्वादशाङ्गुलमुच्छ्रिता।
अष्टाङ्गुला द्व्यङ्गुलाथ चतुरङ्गुलविस्तृता॥ ३॥
योनिर्द्दशाङ्गुला रम्या षट्चतुर्द्व्यङ्गुलाग्रगा।
क्रमान्निम्ना तु कर्त्तव्या पश्चिमाशाव्यवस्थिता॥ ४॥
अश्वत्थपत्रसदृशी किञ्चित् कुण्डे निवेशिता।
तुर्य्याङ्गुलायता नालं पञ्चदशाङ्गुलायतं॥ ५॥
मूलन्तु त्र्यङ्गुलं(२) योन्या अग्रं तस्याः षडङ्गुलं।
लक्षणञ्चैकहस्तस्य द्विगुणं द्विकरादिषु॥ ६॥
एकत्रिमेखलं कुण्डं वर्त्तुलादि वदाम्यहं।

---

१ सत्त्वादिसञ्ज्ञा इति ख, चिह्नितपुस्तकपाठः।

२ मूलन्तु द्व्यङ्गुलमिति ग, चिह्नितपुस्तकपाठः।

कुण्डार्द्धे तु स्थितं सूत्रं कोणे यदतिरिच्यते ॥ ७ ॥
तदर्द्धं दिक्षु संस्थाप्य भ्रामितं वर्त्तुलं भवेत् ।
कुण्डार्द्धं कोणभागार्द्धं दिशश्चोत्तरतो वहिः ॥ ८ ॥
पूर्वपश्चिमतो यत्नाल्लाञ्छयित्वा तु मध्यतः ।
संस्थाप्य भ्रामितं कुण्डमर्द्धचन्द्रं भवेत् शुभं ॥ ९ ॥
पद्माकारे दलानि स्युर्मेखलानान्तु वर्त्तुले ।
बाहुदण्डप्रमाणन्तु होमार्थं कारयेत् स्रुचं ॥ १० ॥
सप्तपञ्चाङ्गुलं वापि चतुरस्रन्तु कारयेत् ।
त्रिभागेन भवेद्गर्त्तं मध्ये वृत्तं सुशोभनम् ॥ ११ ॥
तिर्य्यगूर्द्ध्वं समं खाताद्बहिरर्द्धन्तु शोधयेत् ।
अङ्गुलस्य चतुर्थांशं शेषार्द्धार्द्धं तथान्ततः ॥ १२ ॥
खातस्य मेखलां रम्यां शेषार्द्धेन तु कारयेत् ।
कण्ठं त्रिभागविस्तारं अङ्गुष्ठकसमायतं ॥ १३ ॥
सार्द्धमङ्गुष्ठकं वा स्यात्तदग्रे तु मुखं भवेत् ।
चतुरङ्गुलविस्तारं पञ्चाङ्गुलमथापि वा ॥ १४ ॥
त्रिवं द्व्यङ्गुलकं तत् स्यान्मध्यन्तस्य सुशोभनम् ।
आयामस्तत्समस्तस्य मध्यनिम्नः सुशोभनः ॥ १५ ॥
सुषिरं कण्ठदेशे स्याद्विशेद् यावत् कनीयसी ।
शेषकुण्डन्तु कर्त्तव्यं यथारुचि विचित्रितं ॥ १६ ॥
स्रुवन्तु हस्तमात्रं स्याद्दण्डकेन समन्वितं(१) ।
वटुकं द्व्यङ्गुलं(२) वृत्तं कर्त्तव्यन्तु सुशोभनं ॥ १७ ॥

---

१ कुण्डकेन समन्वितमिति ख, चिह्नितपुस्तकपाठः ।

२ कण्टकं द्व्यङ्गुलमिति ग, चिह्नितपुस्तकपाठः, चन्द्राभं द्व्यङ्गुलमिति ङ, चिह्नितपुस्तकपाठः ।

गोपदन्तु यथा मग्नमल्पपङ्के तथा भवेत्।
उपलिप्य लिखेद्रेखामङ्गुलां वज्रनासिकां(१) ॥ १८ ॥
सौम्याग्रा प्रथमा तस्यां रेखे पूर्वमुखे तयोः।
मध्ये तिस्रस्तया कुर्य्याद्दक्षिणादिक्रमेण तु ॥ १९ ॥
एवमुल्लिख्य चाभ्युक्ष्य प्रणवेन तु मन्त्रवित्।
विष्टरं कल्पयेत्तेन तस्मिन् शक्तिन्तु वैष्णवीं ॥ २० ॥
अलं कृत्वा मूर्त्तिमतीं क्षिपेदग्निं हरिं स्मरन्।
प्रादेशमात्राः समिधो दत्वा परिसमुह्य तं ॥ २१ ॥
दर्भैस्त्रिधा परिस्तीर्य पूर्वादौ तत्र पात्रकं।
आसादयेदिध्मवह्नी भूमौ च स्रुक्स्रुवद्वयं ॥ २२ ॥
आज्यस्थाली चरुस्थाली कुशाज्यञ्च प्रणीतया।
प्रोक्षयित्वा प्रोक्षणीञ्च गृहीत्वापूर्य्य वारिणा ॥ २३
पवित्रान्तर्हिते हस्ते परिस्राव्य च तज्जलं।
प्राङ्नीत्वा प्रोक्षणीपात्रं ज्योतिरग्रे निधाय च ॥ २४ ॥
तदद्भिस्त्रिश्च सम्प्रोक्ष्य इध्मं विन्यस्य चाग्रतः।
प्रणीतायां सपुष्पायां विष्णुं ध्यात्वोत्तरेण च ॥ २५ ॥
आज्यस्थालीमथाज्येन सम्पूर्याग्रे निधाय च।
सम्प्लवोत्पवनाभ्यान्तु कुर्य्यादाज्यस्य संस्कृतिं ॥ २६ ॥
अखण्डिताग्रौ निर्गर्भौ कुशौ प्रादेशमात्रकौ।
ताभ्यामुत्तानपाणिभ्यामङ्गुष्ठानामिकेन तु ॥ २७ ॥
आज्यं तयोस्तु सङ्गृह्य द्विर्नीत्वा त्रिरवाङ्क्षिपेत्(२)।
स्रुक्स्रुवौ चापि सङ्गृह्य ताभ्यां प्रक्षिप्य वारिणा ॥ २८ ॥

१ रुद्रनासिकामिति ख, चिह्नितपुस्तकपाठः वक्रनासिकामिति ङ, चिह्नि-
पुस्तकपाठः।

२ आद्य तयोस्तु सम्पूर्ण नीत वारान्मुक्तं सर्पदिति ङ चिह्नितपुस्तकपाठः।

प्रताप्य दर्भैः सम्मृज्य पुनः प्रक्षाल्य चैव हि।
निरुप्य स्थापयित्वा(१) तु प्रणवेनैव साधकः॥ २९॥
प्रणवादिनमोन्तेन पश्चाद्धोमं समाचरेत्।
गर्भाधानादिकर्म्माणि यावदंशव्यवस्थया॥ ३०॥
नामान्तं व्रतबन्धान्तं समावर्त्तावसानकम्।
अधिकारावसानं वा कुर्य्यादङ्गानुसारतः॥ ३१॥
प्रणवेनोपचारन्तु कुर्यात्सर्वत्र साधकः।
अङ्गैर्होमस्तु कर्त्तव्यो यथावित्तानुसारतः॥ ३२॥
गर्भाधानन्तु प्रथमं ततः पुंसवनं स्मृतम्।
सीमन्तोन्नयनं जातकर्म्म नामान्नप्राशनम्॥ ३३॥
चूडाकृतिं व्रतबन्धं वेदव्रतान्यशेषतः(२)।
समावर्त्तनं पत्न्या च योगश्चाधाधिकारकः(३)॥ ३४॥
हृदादिक्रमतो ध्यात्वा एकैकं कर्म पूज्य च।
अष्टावष्टौ तु जुहुयात् प्रतिकर्म्माहुतीः पुनः॥ ३५॥
पूर्णाहुतिं ततो दद्यात् स्रुचा मूलेन साधकः।
वौषडन्तेन मन्त्रेण प्लुतं सुस्वरमुच्चरन्॥ ३६॥
विष्णोर्वह्निन्तु संस्कृत्य श्रपयेद्वैष्णवञ्चरुम्।
आराध्य स्थण्डिले विष्णुं मन्त्रान् संस्मृत्य संश्रपेत्(४)॥ ३७॥
आसनादिक्रमेणैव साङ्गावरणमुत्तमम्।
गन्धपुष्पैः समभ्यर्च्य ध्यात्वा देवं सुरोत्तमम्॥ ३८॥
आधायेध्ममथाघारावाज्यावग्नीशसंस्थितौ।

१ नियुज्य स्थापयित्वेति ख. चिह्नितपुस्तकपाठः।
२ देवव्रतान्यशेषत इति ख. चिह्नितपुस्तकपाठः।
३ योगश्चाथाधिकारत इति ख. चिह्नितपुस्तकपाठः।
४ मन्त्रान् मन्त्राणां श्रपेत इति ख. घ. चिह्नितपुस्तकद्वयपाठः।

वायव्यनैर्ऋताशादिप्रवृत्तौ तु यथाक्रमम् ॥ ३९ ॥
आज्यभागौ ततो हुत्वा चक्षुषी दक्षिणोत्तरे ।
मध्येथ जुहुयात्सर्वमन्त्रानर्चाक्रमेण तु ॥ ४० ॥
आज्येन तर्पयेन्मूर्त्तीर्द्दशांशेनाङ्गहोमकम् ।
शतं सहस्रं वाज्याद्यैः समिद्भिर्वा तिलैः सह(१) ॥ ४१ ॥
समाप्याचान्तु होमान्तां शुचीन् शिष्यानुपोषितान् ।
आहूयाग्रे निवेश्याथ ह्यस्त्रेण प्रोक्षयेत् पशून् ॥ ४२ ॥
शिष्यानात्मनि संयोज्य अविद्याकर्मबन्धनैः ।
लिङ्गानुवृत्तश्चैतन्यं सह लिङ्गेन पाशितम्(२) ॥ ४३ ॥
ध्यानमार्गेण सम्प्रोक्ष्य वायुवीजेन शोधयेत् ।
ततो दहनवीजेन सृष्टिं ब्रह्माण्डसञ्ज्ञिकाम् ॥ ४४ ॥
निर्द्दग्धां सकलां ध्यायेद्भस्मकूटनिभस्थिताम् ।
प्लावयेद्वारिणा भस्म संसारं वाम्मयं स्मरेत्(३) ॥ ४५ ॥
तत्र शक्तिं न्यसेत् पश्चात् पार्थिवीं वीजसञ्ज्ञिकाम् ।
तन्मात्राभिः समस्ताभिः संवृतं पार्थिवं शुभम् ॥ ४६ ॥
अण्डन्तदुद्भवन्ध्यायेत्तदाधारन्तदात्मकम् ।
तन्मध्ये चिन्तयेन्मूर्त्तिं पौरुषीं प्रणवात्मिकाम् ॥ ४७ ॥
लिङ्गं सङ्क्रामयेत् पश्चादात्मस्थं पूर्वसंस्कृतम्(४) ।
विभक्तेन्द्रियसंस्थानं क्रमाद् वृद्धं विचिन्तयेत् ॥ ४८ ॥
ततोऽण्डमब्दमेकं तु स्थित्वा द्विशकलीकृतम् ।

---

१ समिद्भिर्वा तिलैस्तथा इति घ, चिह्नितपुस्तकपाठः ।
२ सह लिङ्गेन दर्शितमिति ङ, चिह्नितपुस्तकपाठः ।
३ संसारश्चाचयं स्मरेदिति ख, चिह्नितपुस्तकपाठः ।
४ स्थण्डिले पूर्व्वसंस्कृतमिति ख, चिह्नितपुस्तकपाठः ।

द्यावापृथिव्यौ शकले तयोर्मध्ये प्रजापतिम् ॥ ४९ ॥
जातं ध्यात्वा पुनः प्रोक्ष्य प्रणवेन तु संस्थितम् ।
मन्त्रात्मकतनुं कृत्वा यथान्यासं पुरोदितम् ॥ ५० ॥
विष्णुहस्तं ततो मूर्द्ध्नि दत्वा ध्यात्वा तु वैष्णवम् ।
एवमेकं बहून् वापि जनित्वा ध्यानयोगतः ॥ ५१ ॥
करौ सङ्गृह्य मूलेन नेत्रे बद्ध्वा तु वाससा ।
नेत्रमन्त्रेण मन्त्री तान् सदनेनाहतेन तु ॥ ५२ ॥
कृतपूजो गुरुः सम्यक् देवदेवस्य तत्त्ववान् ।
शिष्यान् पुष्पाञ्जलिभृतः प्राङ्मुखानुपवेशयेत् ॥ ५३ ॥
अर्चयेयुश्च तेप्येवमसूता गुरुणा हरिम् ।
क्षिप्त्वा पुष्पाञ्जलिं तत्र पुष्पादिभिरनन्तरम् ॥ ५४ ॥
अमन्त्रमर्चनं कृत्वा(१) गुरोः पादार्चनन्ततः ।
विधाय दक्षिणां दद्यात् सर्वस्वं चार्द्धमेव वा ॥ ५५ ॥
गुरुः संशिक्षयेच्छिष्यान् तैः पूज्यो नामभिर्हरिः ।
विष्वक्सेनं यजेद्दीशं शङ्खचक्रगदाधरम् ॥ ५६ ॥
तर्जयन्तञ्च तर्ज्जन्या मण्डलस्थं विसर्जयेत् ॥ ५७ ॥
विष्णुनिर्म्माल्यमखिलं विष्वक्सेनाय चार्पयेत् ।
प्रणीताभिस्तथात्मानमभिषिच्य च कुण्डगं ॥ ५८ ॥
वह्निमात्मनि संयोज्य विष्वक्सेनं विसर्जयेत् ।
बुभुक्षुः सर्वमाप्नोति मुमुक्षुर्लीयते हरौ ॥ ५९ ॥

इत्यादिमहापुराणे आग्नेये अग्निकार्य्यादिकथनं नाम
चतुर्विंशोऽध्यायः ।

---

१ । वासुदेवार्च्चनं कृत्वा इति ख, चिह्नितपुस्तकपाठः ।

# अथ पञ्चविंशोऽध्यायः ।

## वासुदेवादिमन्त्रनिरूपणं ।

नारद उवाच । वासुदेवादिमन्त्राणां पूज्यानां लक्षणं वदे ।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ १ ॥
नमो भगवते चादौ अ आ अं अः स्ववीजकाः(१) ।
ओङ्काराद्या नमोन्ताश्च नमो नारायणस्ततः ॥ २ ॥
ओं तत् सत् ब्रह्मणे चैव ओं नमो विष्णवे नमः ।
ओं चौं ओं नमो भगवते नरसिंहाय वै नमः ॥ ३ ॥
ओं भूर्नमो भगवते वराहाय नराधिपाः ।
जवारुणहरिद्राभा नीलश्यामललोहिताः ॥ ४ ॥
मेघाग्निमधुपिङ्गाभा वल्लभा नव नायकाः ।
अङ्गानि स्वरवीजानां स्वनामान्तैर्यथाक्रमम् ॥ ५ ॥
हृदयादीनि कल्पेत विभक्तैस्तत्त्ववेदिभिः ।
व्यञ्जनादीनि वीजानि तेषां लक्षणमन्यथा ॥ ६ ॥
दीर्घस्वरैस्तु भिन्नानि नमोन्तान्तस्थितानि तु ।
अङ्गानि ह्रस्वयुक्तानि उपाङ्गानीति वर्ण्यते ॥ ७ ॥
विभक्तनामवर्णान्तस्थितानि वीजमुत्तमं(२) ।
दीर्घैर्ह्रस्वैश्च संयुक्तं साङ्गोपाङ्गं स्वरैः क्रमात् (३) ॥ ८ ॥
व्यञ्जनानां क्रमो ह्येष हृदयादिप्रकल्पने ।
स्ववीजेन स्वनामान्तैर्विभक्तानयङ्गनामभिः (४) ॥ ९ ॥

---

१ द्वादशाक्षरवीजका इति ख, चिह्नितपुस्तकपाठः ।

२ स्थितवीजार्थमुत्तममिति ख, चिह्नितपुस्तकपाठः ।

३ दीर्घस्वरैश्च मयुक्तमङ्गोपाङ्गं स्वरैः क्रमादिति ख, चिह्नितपुस्तकपाठः ।

४ स्वरवीजेषु नामान्तैर्विभक्तान्यङ्गनामभिरिति ङ, चिह्नितपुस्तकपाठः ।

युक्तानि हृदयादीनि द्वादशान्तानि पञ्चशः(१)।
आरभ्य कल्पयित्वा तु जपेत् सिद्धमनुक्रमतः॥ १०॥
हृदयञ्च शिरश्चूडा कवचं नेत्रमस्त्रकं।
षडङ्गानि तु वीजानां मूलस्य द्वादशाङ्गकं॥ ११॥
हृच्छिरश्च शिखा वर्म्म चास्त्रनेत्रन्तथोदरं।
पृष्ठबाहूरुजानूंश्च जङ्घा पादौ क्रमान्न्यसेत्॥ १२॥
कं टं पं शं वैनतेयः खं ठं फं षं गदामनुः(२)।
गं डं बं सं पुष्टिमन्त्रो घं ढं भं हं श्रियै नमः॥ १३॥
वं शं मं क्षं(३) पाञ्चजन्यं छं तं पं(४) कौस्तुभाय च।
जं खं वं सुदर्शनाय श्रीवत्साय सं वं दं चं लं(५)॥ १४॥
ओं धं वं वनमालायै महानन्ताय वै नमः(६)।
निर्वीजपदमन्त्राणां पदैरङ्गानि कल्पयेत्॥ १५॥
जात्यन्तैर्नामसंयुक्तैर्हृदयादीनि पञ्चधा।
प्रणवं हृदयादीनि ततः प्रोक्तानि पञ्चधा॥ १६॥
प्रणवं हृदयं पूर्वं परायेति शिरः शिखा।
नाम्नात्मना तु(७) कवचं अस्त्रं नामान्तकं भवेत्॥ १७॥

---

१ द्वादशार्णानि पञ्चत इति ङ, चिह्नितपुस्तकपाठः।

२ महागदा इति ङ, चिह्नितपुस्तकपाठः।

३ ठ ण मं सं इति ङ, चिह्नितपुस्तकपाठः।

४ दं भं पमिति ख, चिह्नितपुस्तकपाठः।

५ श्रीवत्साय च पञ्चममिति ङ, चिह्नितपुस्तकपाठः श्रीवत्सो वं चं दं ठं लं इति ग, चिह्नितपुस्तकपाठः।

६ नमोऽनन्ताय वै नम इति ङ, चिह्नितपुस्तकपाठः।

७ नाम्नात्मनातु इति ख, ङ, चिह्नितपुस्तकद्वयपाठः।

ओं परात्मादिस्वनामात्मा(१) चतुर्थ्यन्तो नमोन्तकः।
एकव्यूहादिषड्विंशव्यूहान्तस्यात्मनो मनुः(२) ॥ १८ ॥
कनिष्ठादिकराग्रेषु प्रकृतिं देहकेऽर्चयेत्।
पराय पुरुषात्मा स्यात् प्रकृत्यात्मा द्विरूपकः ॥ १९ ॥
ओं परयाग्न्यात्मने चैव वाय्वर्कौ च द्विरूपकः।
अग्निं त्रिमूर्त्तौ(३) विन्यस्य व्यापकं करदेहयोः ॥ २० ॥
वाय्वर्कौ करशाखासु सव्येतरकरद्वये।
हृदि मूर्त्तौ तनावेष त्रिव्यूहे तुर्य्यरूपके ॥ २१ ॥
ऋग्वेदं व्यापकं हस्ते अङ्गुलीषु यजुर्न्यसेत्।
तलद्वयेथर्वरूपं शिरोहृच्चरणान्तकः ॥ २२ ॥
आकाशं व्यापकं न्यस्य करे देहे तु पूर्ववत्।
अङ्गुलीषु च वाय्वादि शिरोहृद्गुह्यपादके ॥ २३ ॥
वायुर्ज्योतिर्जलं पृथ्वी पञ्चव्यूहः समीरितः।
मनः श्रोत्रन्त्वग्दृग्जिह्वा घ्राणं षड्व्यूह ईरितः ॥ २४ ॥
व्यापकं मानसं न्यस्य ततोङ्गुष्ठादितः क्रमात्।
मूर्द्धास्यहृद्गुह्यपत्सु कथितः करणात्मकः ॥ २५ ॥
आदिमूर्त्तिस्तु सर्वत्र व्यापको जीवसञ्ज्ञितः।
भूर्भुवः स्वर्महर्ज्जनस्तपः सत्यञ्च सप्तधा ॥ २६ ॥
करे देहे न्यसेदाद्यमङ्गुष्ठादिक्रमेण तु।
तलसंस्थः सप्तमश्च(४) लोकेशो देहके क्रमात् ॥ २७ ॥

१ ओं परात्मादित्यनामात्मा इति घ, चिह्नितपुस्तकपाठः।
२ एवं व्यूहादि षड्विंशं व्यूहात्मस्यात्मनो मनुरिति ख, चिह्नितपुस्तकपाठः।
३ अग्निं द्विमूर्त्तौ इति ख, चिह्नितपुस्तकपाठः।
४ तलस्थः सप्तमश्चैव इति ङ, चिह्नितपुस्तकपाठः।

देहे शिरोललाटास्यहृद्गुह्याङ्घ्रिषु संस्थितः ।
अग्निष्टोमस्तथोक्थस्तु षोडशी वाजपेयकः ॥ २८ ॥
अतिरात्राप्तोर्यामश्च(१) यज्ञात्मा सप्तरूपकः ।
धीरहं मनः शब्दश्च स्पर्शरूपरसास्ततः(२) ॥ २९ ॥
गन्धो बुद्धिर्व्यापकं तु करे देहे न्यसेत् क्रमात् ।
न्यसेदन्त्यौ च(३) तलयोः के ललाटे मुखे हृदि ॥ ३० ॥
नाभौ गुह्ये च पादे च अष्टव्यूहः पुमान् स्मृतः(४) ।
जीवो बुद्धिरहङ्कारो मनः शब्दो गुणोनिलः ॥ ३१ ॥
रूपं रसो नवात्मायं जीव अङ्गुष्ठकद्वये ।
तर्जन्यादिक्रमाच्छेषं यावद्वामप्रदेशिनीं ॥ ३२ ॥
देहे शिरोललाटास्यहृन्नाभिगुह्यजानुषु ।
पादयोश्च दशात्मायं इन्द्रो व्यापी समास्थितः ॥ ३३ ॥
अङ्गुष्ठकद्वये वह्निस्तर्जन्यादौ परेषु च ।
शिरोललाटवक्त्रेषु हृन्नाभिगुह्यजानुषु ॥ ३४ ॥
पादयोरेकादशात्मा मनः श्रोत्रं त्वगेव च ।
चक्षुर्जिह्वा तथा घ्राणं वाक्पाण्यङ्घ्रिश्च पायुकः ॥ ३५ ॥
उपस्थं मानसो व्यापी श्रोत्रमङ्गुष्ठकद्वये ।
तर्जन्यादिक्रमादष्टौ अतिरिक्तं तलद्वये ॥ ३६ ॥
उत्तमाङ्गललाटास्यहृन्नाभावथ गुह्यके ।
उरुयुग्मे तथा जङ्घे गुल्फपादेषु च क्रमात् ॥ ३७ ॥

१ अतिरात्राप्तयामश्च इति ख, चिह्नितपुस्तकपाठः ।
२ रसात्मया इति ख, चिह्नितपुस्तकपाठः ।
३ न्यसेदन्ते च इति ख, चिह्नितपुस्तकपाठः । न्यसेदन्तौ च इति ङ चिह्नितपुस्तकपाठः ।
४ क्रमात् स्मृतइति ङ, चिह्नितपुस्तकपाठः ।

विष्णुर्म्मधुहरश्चैव त्रिविक्रमकवामनौ।
श्रीधरोथ हृषीकेशः पद्मनाभस्तथैव च ॥ ३८ ॥
दामोदरः केशवश्च नारायणस्ततः परः।
माधवश्चाथ गोविन्दो विष्णुं वै व्यापकं न्यसेत् ॥ ३९ ॥
अङ्गुष्ठादौ तले द्वौ च पादे जानुनि वै कटौ।
शिरःशिखरकश्चाश्च जानुपादादिषु न्यसेत् ॥ ४० ॥
द्वादशात्मा पञ्चविंशः षड्विंशव्यूहक स्तथा।
पुरुषो धीरहङ्कारो मनश्चित्तञ्च शब्दकः ॥ ४१ ॥
तथा स्पर्शो रसो रूपं गन्धः श्रोत्रं त्वचस्तथा।
चक्षुर्जिह्वा नासिका च वाक्पाण्यङ्घ्रिश्च पायवः ॥ ४२ ॥
उपस्थो भूर्जलन्तेजो वायुराकाशमेव च।
पुरुषं व्यापकं न्यस्य अङ्गुष्ठादौ दश न्यसेत् ॥ ४३ ॥
शेषान् हस्ततले न्यस्य शिरस्यथ ललाटके।
मुखहृन्नाभिगुह्योरुजान्वङ्घ्रौ करणोद्गतौ ॥ ४४ ॥
पादे जान्वोरुपस्थे च हृदये मूर्द्ध्नि च क्रमात्।
परञ्च पुरुषात्मादौ षड्विंशे पूर्ववत्परं ॥ ४५ ॥
सञ्चिन्त्य मण्डलैके तु प्रकृतिं पूजयेद्बुधः।
पूर्वयाम्याप्यसौम्येषु हृदयादीनि पूजयेत् ॥ ४६ ॥
अस्त्रमग्न्यादिकोणेषु(१) वैनतेयादि पूर्ववत्।
दिक्पालांश्च विधिस्त्वन्यः(२) त्रिव्यूहेशश्च मध्यतः ॥ ४७ ॥
पूर्वादिदिग्बलावासोराज्यादिभिरलङ्कृतः।
कर्णिकायां नाभसश्च मानसः कर्णिकास्थितः ॥ ४८ ॥

---

१ अस्त्रमग्न्यादिपत्रेषु इति ख, ङ, चिह्नितपुस्तकद्वयपाठः।

२ दिक्पालांश्च विधिस्तस्य इति ग, घ, चिह्नितपुस्तकपाठः दिक्पालादौ विधिस्तुल्य इति ङ, चिह्नितपुस्तकपाठः।

विश्वरूपं सर्वसिद्ध्यै(१) यजेद्राज्यजयाय च।
सर्वयूहैः समायुक्तमङ्गैरपि च पञ्चभिः॥ ४८॥
गरुडाद्यैस्तथेन्द्राद्यैः सर्वान् कामानवाप्नुयात्।
विश्वक्सेनं यजेन्नाम्ना वै वीजं व्योमसंस्थितं(२)॥ ५०॥
इत्यादिमहापुराणे आग्नेये मन्त्रप्रदर्शनं नाम पञ्चविंशोऽध्यायः।

## अथ षड्विंशोऽध्यायः।

### मुद्रालक्षणकथनं।

नारद उवाच। मुद्राणां लक्षणं वक्ष्ये सान्निध्यादिप्रकारकं।
अञ्जलिः प्रथमा मुद्रा वन्दनी हृदयानुगा॥ १॥
ऊर्द्धाङ्गुष्ठो वाममुष्टिर्दक्षिणाङ्गुष्ठबन्धनं।
सव्यस्य तस्य चाङ्गुष्ठो यस्य चोर्द्ध्वं प्रकीर्त्तितः(३)॥ २॥
तिस्रः साधरणा व्यूहे अथासाधरणा इमाः।
कनिष्ठादिविमोकेन अष्टौ मुद्रा यथाक्रमं॥ ३॥
अष्टानां पूर्व्ववीजानां क्रमशस्त्ववधारयेत्।
अङ्गुष्ठेन कनिष्ठान्तं नामयित्वाङ्गुलित्रयं॥ ४॥
ऊर्द्ध्वं कृत्वा सम्मुखञ्च वीजाय नवमाय वै।
वामहस्तमथोत्तानं कृत्वार्द्धं नामयेच्छनैः॥ ५॥

१ सर्व्वसिद्धौ इति ख, ङ, चिह्नितपुस्तकद्वयपाठः।
२ वैराजं नागमद्भुतमिति ख, चिह्नितपुस्तकपाठः। वौ वीजं चाद्भुमद्भुतमिति ङ, चिह्नितपुस्तकपाठः।
३ यः सव्येऽर्द्धे प्रकीर्त्तित इति ख, चिह्नितपुस्तकपाठः।

वराहस्य स्मृता मुद्रा अङ्गानाञ्च क्रमादिमाः ।
एकैकां मोचयेद्बद्धा वाममुष्टौ तथाङ्गुलीं ॥ ६ ॥
आकुञ्चयेत् पूर्वमुद्रां दक्षिणेप्येवमेव च ।
उर्द्ध्वाङ्गुष्ठौ वाममुष्टिर्मुद्रासिद्धिस्ततो भवेत् ॥ ७ ॥

इत्यादिमहापुराणे आग्नेये मुद्राप्रदर्शनं नाम
षड्विंशोऽध्यायः ।

---

## अथ सप्तविंशोऽध्यायः ।

### दीक्षाविधिकथनं ।

नारद उवाच । वक्ष्ये दीक्षां सर्वदाञ्च मण्डलेऽब्जे हरिं यजेत् ।
दशम्यामुपसंहृत्य यागद्रव्यं समस्तकं ॥ १ ॥
विन्यस्य नारसिंहेन सम्मन्त्र्य शतवारकं ।
सर्षपांस्तु फडन्तेन(१) रक्षोघ्नान् सर्व्वतः क्षिपेत् ॥ २ ॥
शक्तिं सर्वात्मिकां तत्र न्यसेत् प्रासादरूपिणीं ।
सर्व्वौषधिं समाहृत्य विकिरानभिमन्त्रयेत् ॥ ३ ॥
शतवारं शुभे पात्रे वासुदेवेन साधकः ।
संसाध्य पञ्चगव्यन्तु पञ्चभिर्मूलमूर्त्तिभिः ॥ ४ ॥
नारायणान्तैः सम्प्रोक्ष्य कुशाग्रेस्तेन तां भुवं(२) ।
विकिरान्वासुदेवेन क्षिपेदुत्तानपाणिना ॥ ५ ॥
त्रिधा पूर्वमुखस्तिष्ठन् ध्यायेत् विष्णुं तथा हृदि ।
वर्द्धन्या सहिते कुम्भे साङ्गं विष्णुं प्रपूजयेत् ॥ ६ ॥

---

१ सर्षपांस्तुहृदयेन इति ङ. चिह्नितपुस्तकपाठः ।
२ कुशाग्रेणैव तां भुवमिति ङ. चिह्नितपुस्तकपाठः ।

शतवारं मन्त्रयित्वा त्वस्त्रेणैव च वर्द्धनीं।
अच्छिन्नधारया सिञ्चन् ईशानान्तं नयेच्च तं ॥ ७ ॥
कलसं पृष्ठतो नीत्वा स्थापयेद्विकिरोपरि।
संहृत्य विकिरान् दर्भैः कुम्भेशं कर्क्करीं यजेत् ॥ ८ ॥
सवस्त्रं पञ्चरत्नाढ्यं स्थण्डिले पूजयेद्धरिं।
अग्नावपि समभ्यर्च्य मन्त्रान् सञ्जप्य पूर्ववत् ॥ ९ ॥
प्रक्षाल्य पुण्डरीकेन विलिप्यान्तः सुगन्धिना।
उखामाज्येन(१) सम्पूर्य्य गोक्षीरेण तु साधकः ॥ १० ॥
आलोक्य वासुदेवेन(२) ततः सङ्कर्षणेन च।
तण्डुलानाज्यसंसृष्टान् क्षिपेत् क्षीरे सुसंस्कृते ॥ ११ ॥
प्रद्युम्नेन समालोड्य दर्व्या सङ्घट्टयेच्छनैः।
पक्वमुत्तारयेत् पश्चादनिरुद्धेन देशिकः ॥ १२ ॥
प्रक्षाल्यालिप्य तत् कुर्य्यादूर्द्ध्वपुण्ड्रं तु भस्मना।
नारायणेन पार्श्वेषु चरुमेवं सुसंस्कृतं ॥ १३ ॥
भागमेकं तु देवाय कलशाय द्वितीयकं।
तृतीयेन तु भागेन प्रदद्यादाहुतित्रयं ॥ १४ ॥
शिष्यैः सह चतुर्थं तु गुरुरद्यादिशुद्धये(३)।
नारायणेन सम्मन्त्र्य सप्तधा क्षीरवृक्षजम् ॥ १५ ॥
दन्तकाष्ठं भक्षयित्वा त्यक्त्वा ज्ञात्वास्य पातकं।
ऐन्द्राग्युत्तरकेशानीमुखं पतितमुत्तमं ॥ १६ ॥
शुभं सिंहशतं कृत्वा(४) आचम्याथ प्रविश्य च।

१ उखायामाज्येनेति ख, चिह्नितपुस्तकपाठः।
२ आलोक्य वासुदेवेन इति ख. चिह्नितपुस्तकपाठः।
३ विशुद्धये इति ङ. चिह्नितपुस्तकपाठः।
४ शुभं सिद्धमिति ज्ञात्वा इति ङ, चिह्नितपुस्तकपाठः।

पूजागारं न्यसेन्मन्त्री प्राच्यां विष्णुं प्रदक्षिणं ॥ १७ ॥
संसारार्णवमग्नानां पशूनां पाशमुक्तये ।
त्वमेव शरणं देव सदा त्वं भक्तवत्सल ॥ १८ ॥
देवदेवानुजानीहि प्राकृतैः पाशबन्धनैः ।
पाशितान्मोचयिष्यामि त्वत्प्रसादात् पशूनिमान् ॥ १९ ॥
इति विज्ञाप्य देवेशं सम्प्रविश्य पशूंस्ततः।
धारणाभिस्तु संशोध्य पूर्व्ववज्ज्वलनादिना ॥ २० ॥
संस्कृत्य मूर्त्त्या संयोज्य(१) नेत्रे बद्धा प्रदर्शयेत् ।
पुष्पपूर्णाञ्जलींस्तत्र क्षिपेत्तन्नाम योजयेत् ॥ २१ ॥
अमन्त्रमर्च्चनं तत्र पूर्व्ववत् कारयेत् क्रमात् ।
यस्यां मूर्त्तौ पतेत् पुष्पं तस्य तन्नाम निर्द्दिशेत् ॥ २२ ॥
शिखान्तसम्मितं सूत्रं पादाङ्गुष्ठादि षड्गुणं ।
कन्यासु कर्त्तितं रक्तं(२) पुनस्त्रिगुणीकृतम् ॥ २३ ॥
यस्यां संलीयते विश्वं यतो विश्वं प्रसूयते ।
प्रकृतिं प्रक्रियाभेदैः संस्थितां तत्र चिन्तयेत् ॥ २४ ॥
तेन प्राकृतिकान् पाशान् ग्रथित्वा तत्त्वसङ्ख्यया(३) ।
कृत्वा शरावे तत् सूत्रं कुण्डपार्श्वे निधाय तु(४) ॥ २५ ॥
ततस्तत्त्वानि सर्वाणि ध्यात्वा शिष्यतनौ न्यसेत् ।
सृष्टिक्रमात् प्रकृत्यादिपृथिव्यन्तानि देशिकः ॥ २६ ॥
तत्रैकधा पञ्चधा स्याद्दशद्वादशधापि वा(५) ।

---

१ मूर्त्त्या सम्प्रोच्य इति ङ, चिह्नितपुस्तकपाठः ।
२ सूत्रमिति ङ, चिह्नितपुस्तकपाठः ।
३ तत्र सङ्ख्यया इति ख, ग, घ, चिह्नितपुस्तकत्रयपाठः ।
४ निधीयते इति घ, ङ, चिह्नितपुस्तकद्वयपाठः ।
५ तत्रार्च्चा पञ्चधा यास्यादर्द्धद्वादशधा पिवेति ख, चिह्नितपुस्तकपाठः । तत्रात्मा पञ्चधा वा स्यात् दशद्वादशधापिवेति घ, ङ, चिह्नितपुस्तकद्वयपाठः ।

ज्ञातव्यः सर्व्वभेदेन ग्रथितस्तत्त्वचिन्तकैः ॥ २७ ॥
अङ्गैः पञ्चभिरध्वानं निखिलं विकृतिक्रमात् ।
तन्मात्रात्मनि संहृत्य मायासूत्रे पशोस्तनौ(१) ॥ २८ ॥
प्रकृतिर्लिङ्गशक्तिश्च कर्त्ता बुद्धिस्तथा मनः ।
पञ्चतन्मात्रबुद्ध्याख्यं कर्म्माख्यं भूतपञ्चकं ॥ २९ ॥
ध्यायेच्च द्वादशात्मानं सूत्रे देहे तथेच्छया ।
कृत्वा सम्पातविधिना सृष्टेः सृष्टिक्रमेण तु ॥ ३० ॥
एकैकं शतहोमेन दत्त्वा पूर्णाहुतिं ततः ।
शरावे सम्पुटीकृत्य कुम्भेशाय निवेदयेत् ॥ ३१ ॥
अधिवास्य यथा न्यायं भक्तं शिष्यं तु दीक्षयेत् ।
करणीं कर्त्तरीं वापि(२) रजांसि खटिकामपि ॥ ३२ ॥
अन्यदप्युपयोगि स्यात् सर्वं तद्वायुगोचरे ।
संस्थाप्य मूलमन्त्रेण परामृश्याधिवासयेत् ॥ ३३ ॥
नमो भूतेभ्यश्च बलिः कुशे शेते स्मरन् हरिं ।
मण्डपं भूषयित्वाथ वितानघटलड्डुकैः(३) ॥ ३४ ॥
मण्डलेथ यजेद्विष्णुं ततः सन्तर्प्य पावकं ।
आहूय दीक्षयेच्छिष्यान् बद्धपद्मासनस्थितान् ॥ ३५ ॥
सम्प्रोक्ष्य विष्णुहस्तेन मूर्द्धानं स्पृश्य वै क्रमात् ।
प्रकृत्यादिविकृत्यन्तां साधिभूताधिदैवतां ॥ ३६ ॥
सृष्टिमाध्यात्मिकीं कृत्वा हृदि तां संहरेत् क्रमात् ।
तन्मात्रभूतां सकलां जीवेन समतां गतां ॥ ३७ ॥
ततः सम्प्रार्थ्य कुम्भेशं सूत्रं संहृत्य देशिकः ।

१ मायासूत्रे सुशोभने इति ङ, चिह्नितपुस्तकपाठः ।
२ करालकर्त्तरीञ्चापि इति ख, ग, चिह्नितपुस्तकद्वयपाठः ।
३ वितानभवगन्धकैरिति ख, चिह्नितपुस्तकपाठः । वितानपटकेन्द्रियैश्चेति ग, घ, चिह्नितपुस्तकद्वयपाठः ।

अग्नेः समीपमागत्य पार्श्वे तं सन्निवेश्य तु ॥ ३८ ॥
मूलमन्त्रेण सृष्टीशमाहुतीनां शतेन तं।
उदासीनमथासाद्य पूर्णाहुत्या च देशिकः ॥ ३९ ॥
शुक्लं रजः समादाय मूलेन शतमन्त्रितं।
सन्ताड्य हृदयन्तेन हुंफट्कारान्तसंयुतैः ॥ ४० ॥
वियोगपदसंयुक्तैर्वीजैः पादादिभिः क्रमात्।
पृथिव्यादीनि तत्त्वानि विश्लिष्य जुहुयात्ततः ॥ ४१ ॥
वह्नावखिलतत्त्वानामालये व्याहृते हरौ।
नीयमानं क्रमात्सर्वं तत्राध्वानं स्मरेद्बुधः ॥ ४२ ॥
ताडनेन वियोज्यैवं(१) आदायापाद्य शाम्यतां।
प्रकृत्याहृत्य जुहुयाद्यथोक्तं जातवेदसि ॥ ४३ ॥
गर्भाधानं जातकर्म भोगञ्चैव लयन्तथा।
हुत्वाष्टौ तत्र तत्रैव ततः शुद्धिन्तु होमयेत् ॥ ४४ ॥
शुद्धं तत्त्वं समुद्धृत्य पूर्णाहुत्या तु देशिकः।
सन्नयेद्द्विपरे तत्त्वे यावदव्याहृतं क्रमात् ॥ ४५ ॥
तत् परं ज्ञानयोगेन विलाप्य परमात्मनि।
विमुक्तबन्धनं जीवं परस्मिन्नव्यये पदे ॥ ४६ ॥
निवृत्तं परमानन्दे शुद्धे बुद्धे स्मरेद्बुधः।
दद्यात् पूर्णाहुतिं पश्चादेवं दीक्षा समाप्यते ॥ ४७ ॥
प्रयोगमन्त्रान् वक्ष्यामि यैर्दीक्षा होमसंलयः।

ओं यं भूतानि विशुद्धं हुं फट्।

अनेन ताडनं कुर्याद्वियोजनमिह द्वयं ॥ ४८ ॥

ओं यं भूतान्यापातयेऽहं। आदानं कृत्वा यानेन प्रकृत्या योजनं शृणु।

---

१. ताडनेन विमोच्यैवमिति ख, चिह्नितपुस्तकपाठः।

ओं यं भूतानि पुं स्वाहा। होममन्त्रं प्रवक्ष्यामि ततः पूर्णाहुतेर्मनुं ॥ ४९ ॥
ओं भूतानि संहर स्वाहा। ओं अं ओं नमो भगवते वासुदेवाय वौषट्।

पूर्णाहुत्यनन्तरे तु तद्वै शिष्यन्तु साधयेत्(१)।
एवं तत्त्वानि सर्वाणि क्रमात्संशोधयेद् बुधः ॥ ५० ॥
नमोन्तेन स्वबीजेन ताडनादिपुरःसरम्।

ओं वां कर्म्मेन्द्रियाणि। ओं दें बुद्धीन्द्रियाणि।

यं बीजेन समानन्तु ताडनादिप्रयोगकम् ॥ ५१ ॥

ओं सुं गन्धतन्मात्रे वियुङ्क्ष्व हुं फट्। ओं सम्याहिं हा(२) ॥ ओं खं खं क्ष प्रकृत्या(३)। ओं मुं हुं गन्धतन्मात्रे संहर स्वाहा।

ततः पूर्णाहुतिश्चैवमुत्तरेषु प्रयुज्यते।

ओं रां रसतन्मात्रे। ओं भें रूपतन्मात्रे। ओं रं स्पर्शतन्मात्रे। ओं एं शब्दतन्मात्रे। ओं भं नमः। ओं सों अहङ्कारः। ओं नं बुद्धे। ओं ओं प्रकृते।

एकमूर्त्तावयं प्रोक्तो दीक्षायोगः समासतः।
एवमेव प्रयोगस्तु नवव्यूहादिके स्मृतः ॥ ५२ ॥
दग्धापरस्मिन् सन्दध्यान्निर्वाणे प्रकृतिन्नरः।
अविकारे समादध्यादीश्वरे प्रकृतिन्नरः ॥ ५३ ॥
शोधयित्वाथ भूतानि कर्म्माङ्गानि(४) विशोधयेत्।
बुद्ध्याख्यान्यथ तन्मात्रमनोज्ञानमहङ्कृतिं ॥ ५४ ॥
लिङ्गात्मानं विशोध्यान्ते प्रकृतिं शोधयेत् पुनः।

१ तद्वै शिष्यन्तु गमयेदिति ख, घ, ङ, चिह्नितपुस्तकत्रयपाठः।

२ ओं सु आयाहि हामिति ख, चिह्नितपुस्तकपाठः ओं सं पाहि स्वाहा इति ग, ङ, चिह्नितपुस्तकद्वयपाठः।

३ अं दुं क्ष प्रकृत्या इति ओं स्व स्वं क्ष प्रकृत्या इति च ख, चिह्नितपुस्तकपाठः।

४ कर्म्माख्याणि च शोधयेदिति घ, ङ, चिह्नितपुस्तकद्वयपाठः।

पुरुषं प्राकृतं शुद्धमीश्वरे धाम्नि संस्थितं ॥ ५५ ॥
स्वगोचरीकृताशेषभोगमुक्तौ कृतास्पदं।
ध्यायन् पूर्णाहुतिं दद्याद्दीक्षेयं त्वधिकारिणी ॥ ५६ ॥
अङ्गैराराध्य मन्त्रस्य नीत्वा तत्त्वगणं समं।
क्रमादेवं विशोध्यान्ते सर्वसिद्धिसमन्वितं ॥ ५७ ॥
ध्यायन् पूर्णाहुतिं दद्याद्दीक्षेयं साधके स्मृता।
द्रव्यस्य वा न सम्पत्तिरशक्तिर्वात्मनो यदि ॥ ५८ ॥
इष्ट्वा देवं यथा पूर्वं सर्वोपकरणान्वितं।
सद्योधिवास्य द्वादश्यां दीक्षयेद्देशिकोत्तमः ॥ ५९ ॥
भक्तो विनीतः शारीरैर्गुणैः सर्वैः समन्वितः।
शिष्यो नातिधनी यस्तु स्थण्डिलेभ्यर्च्य दीक्षयेत् ॥ ६० ॥
अध्वानं निखिलं दैवं(१) भौतं वाध्यात्मिकीकृतं।
सृष्टिक्रमेण शिष्यस्य देहे ध्यात्वा तु देशिकः ॥ ६१ ॥
अष्टाष्टाहुतिभिः पूर्वं क्रमात् सन्तर्प्य सृष्टिमान्।
स्वमन्त्रैर्वासुदेवादीन् जननादीन् विसर्जयेत्(२) ॥ ६२ ॥
होमेन शोधयेत् पश्चात्संहारक्रमयोगतः।
योनिसूत्राणि बद्धानि मुक्त्वा कर्माणि देशिकः ॥ ६३ ॥
शिष्यदेहात्समाहृत्य क्रमात्तत्त्वानि शोधयेत्।
अग्नौ प्राकृतिके विष्णौ लयं नीत्वाधिदैविके ॥ ६४ ॥
शुद्धं तत्त्वमशुद्धेन पूर्णाहुत्या तु साधयेत्(३)।
शिष्ये प्रकृतिमापन्ने दग्ध्वा प्राकृतिकान् गुणान् ॥ ६५ ॥

१ लिखित दैवमिति ख, चिह्नितपुस्तकपाठः।

२ पूजां कृत्वा विसर्जयेदिति घ, चिह्नितपुस्तकपाठः विमलादीन् विसर्जयेदिति ङ, चिह्नितपुस्तकपाठः।

३ पूर्णाहुत्या तु मन्त्रयेदिति ख, घ, चिह्नितपुस्तकद्वयपाठः।

मोचयेदधिकारे वा नियुञ्ज्याद्देशिकः शिशून्(१) ।
अथान्यां शक्तिदीक्षां वा कुर्य्यात् भावे स्थितो गुरुः ॥ ६६ ॥
भक्त्या समतिपन्नानां यतीनां निर्द्धनस्य च ।
सम्पूज्य स्थण्डिले विष्णुं पार्श्वस्थं स्थाप्य पुत्रकं ॥ ६७ ॥
देवताभिमुखः शिष्यस्तिर्य्यगास्यः स्वयं स्थितः ।
अध्वानं निखिलं ध्यात्वा पर्वभिः स्वैर्विकल्पितं ॥ ६८ ॥
शिष्यदेहे तथा देवमाधिदैविकयाचनं ।
ध्यानयोगेन सञ्चिन्त्य पूर्ववत्ताडनादिना ॥ ६९ ॥
क्रमात्तत्त्वानि सर्वाणि शोधयेत् स्थण्डिले हरौ ।
ताडनेन वियोज्याथ गृहीत्वात्मनि तत्परः(२) ॥ ७० ॥
देवे संयोज्य संशोध्य गृहीत्वा तत् स्वभावतः ।
आनीय शुद्धभावेन सन्धयित्वा क्रमेण तु ॥ ७१ ॥
शोधयेद्ध्यानयोगेन सर्वतो ज्ञानमुद्रया ।
शुद्धेषु सर्वतत्त्वेषु प्रधाने चेश्वरे स्थिते ॥ ७२ ॥
दग्ध्वा निर्वापयेच्छिष्यान् परे चेशे नियोजयेत् ।
निनयेत् सिद्धिमार्गे वा साधकं देशिकोत्तमः ॥ ७३ ॥
एवमेवाधिकारस्थो गृही कर्म्मण्यतन्द्रितः ।
आत्मानं शोधयंस्तिष्ठेद् यावद्रागक्षयो भवेत् ॥ ७४ ॥
क्षीणरागमथात्मानं ज्ञात्वा संशुद्धकिल्विषः ।
आरोप्य पुत्रे शिष्ये वा ह्यधिकारन्तु संयमी ॥ ७५ ॥
दग्ध्वा मायामयं पाशं प्रव्रज्य स्वात्मनि स्थितः ।
शरीरपातमाकाङ्क्षन्नासीताव्यक्तलिङ्गवान् ॥ ७६ ॥

इत्यादिमहापुराणे आग्नेये सर्वदीक्षाकथनं नाम
सप्तविंशोऽध्यायः ।

१ पशूनिति ध, चिह्नितपुस्तकपाठः ।
२ तत् पर्व्वणीति ग, ग, घ, ङ, चिह्नितपुस्तकचतुष्टयपाठः ।

## अथ अष्टाविंशोध्यायः ।

### अभिषेकविधानं ।

नारद उवाच । अभिषेकं प्रवक्ष्यामि यथाचार्य्यस्तु पुत्रकः ।
सिद्धिभाक् साधको येन रोगी रोगाद्विमुच्यते ॥ १ ॥
राज्यं राजा सुतं स्त्रीश्च प्राप्नुयान्मलनाशनं ।
मृत्तिकुम्भान् सुरत्नाद्यान्मध्यपूर्वादितो न्यसेत् ॥ २ ॥
सहस्रावर्त्तितान् कुर्य्यादथवा शतवर्त्तितान् ।
मण्डपे मण्डले विष्णुं प्राच्यैशानगाञ्च पीठके ॥ ३ ॥
निवेश्य शकलीकृत्य पुत्रकं साधकादिकं ।
अभिषेकं समभ्यर्च्य कुर्य्याद्गीतादिपूर्वकं ॥ ४ ॥
दद्याच्च योगपीठादींस्त्वनुग्राह्यास्त्वया नराः ।
गुरुश्च समयान् ब्रूयाद्गुप्तः शिष्योय सर्वभाक् ॥ ५ ॥

इत्यादिमहापुराणे आग्नेये आचार्य्याभिषेको नाम
अष्टाविंशोऽध्यायः ।

---

## अथ ऊनत्रिंशोऽध्यायः ।

### सर्वतोभद्रमण्डलकथनं ।

नारद उवाच । साधकः साधयेन्मन्त्रं देवतायतनादिके ।
शुद्धभूमौ गृहे प्रार्च्य मण्डले हरिमीश्वरम् ॥ १ ॥
चतुरस्त्रीकृते क्षेत्रे मण्डलादीनि वै लिखेत् ।
रसवाणाक्षिकोष्ठेषु सर्व्वतोभद्रमालिखेत् ॥ २ ॥
षट्त्रिंशत्कोष्ठकैः पद्मं पीठं पङ्क्त्या वहिर्भवेत् ।
द्वाभ्यान्तु वीथिका तस्माद् द्वाभ्यां द्वाराणि दिक्षु च ॥ ३ ॥

वर्त्तुलं भ्रामयित्वा तु पद्मक्षेत्रं पुरोदितम् ।
पद्मार्द्धं भ्रामयित्वा तु भागं द्वादशमं बहिः ॥ ४ ॥
विभज्य भ्रामयेच्छेषं चतुःक्षेत्रन्तु वर्त्तुलम् ।
प्रथमं कर्णिकाक्षेत्रं केशराणां द्वितीयकम् ॥ ५ ॥
तृतीयं दलसन्धीनां दलाग्राणां चतुर्थकम् ।
प्रसार्य कोणसूत्राणि कोणदिङ्मध्यमन्ततः ॥ ६ ॥
निधाय केशराग्रे तु दलसन्धींस्तु लाञ्छयेत् ।
पातयित्वाथ सूत्राणि तत्र पत्राष्टकं लिखेत् ॥ ७ ॥
दलसन्ध्यन्तरालन्तु मानं मध्ये निधाय तु ।
दलाग्रं भ्रामयेत्तेन तदग्रं तदनन्तरं ॥ ८ ॥
तदन्तरालं तत्पार्श्वे कृत्वा वाह्यक्रमेण च ।
केशरे तु लिखेद्द्वौ द्वौ दलमध्ये ततः पुनः ॥ ९ ॥
पद्मलक्ष्मैतत् सामान्यं द्विषट्कदलमुच्यते ।
कर्णिकार्द्धेन मानेन प्राक्संस्थं भ्रामयेत् क्रमात् ॥ १० ॥
तत्पार्श्वे भ्रमयोगेन कुण्डल्यः षड् भवन्ति हि ।
एवं द्वादश मत्स्याः स्युर्द्विषट्कदलकञ्च तैः ॥ ११ ॥
पञ्चपत्राभिसिद्ध्यर्थं मत्स्यं कृत्वैवमब्जकम् ।
व्योमरेखावहिः पीठन्तत्र कोष्ठानि मार्जयेत् ॥ १२ ॥
त्रीणि कोणेषु पादार्थं द्विद्विकान्यपराणि तु ।
चतुर्दिक्षु विलिप्तानि गात्रकाणि भवन्त्युत ॥ १३ ॥
ततः पङ्क्तिद्वयं दिक्षु वीथ्यर्थन्तु विलोपयेत्(१) ।
द्वाराण्याशासु कुर्वीत चत्वारि चतसृष्वपि ॥ १४ ॥
द्वाराणां पार्श्वतः शोभा अष्टौ कुर्याद्विचक्षणः ।

१ पङ्क्तिद्वयं द्वयं दिक्षु वीथ्यर्थं विनियोजयेदिति ङ, चिह्नितपुस्तकपाठः ।

तत्पार्श्वे उपशोभास्तु तावत्यः परिकीर्त्तिताः ॥ १५ ॥
समीप उपशोभानां कोणास्तु परिकीर्त्तिताः(१) ।
चतुर्दिक्षु ततो द्वे द्वे चिन्तयेन्मध्यकोष्ठकैः ॥ १६ ॥
चत्वारि वाह्यतो मृज्यादेकैकं पार्श्वयोरपि ।
शोभार्थं पार्श्वयोस्त्रीणि त्रीणि लुम्पेद्दलस्य तु ॥ १७ ॥
तद्वद्विपर्यये कुर्यादुपशोभां ततः परम् ।
कोणस्यान्तर्वहिस्त्रीणि चिन्तयेद्द्विविभेदतः ॥ १८ ॥
एवं षोडशकोष्ठं स्यादेवमन्यत्तु मण्डलम् ।
द्विषट्कभागे षट्त्रिंशत्पदं पद्मन्तु वीथिका ॥ १९ ॥
एका पङ्क्तिः पराभ्यां तु द्वारशोभादि पूर्ववत् ।
द्वादशाङ्गुलिभिः पद्ममेकहस्ते तु मण्डले ॥ २० ॥
द्विहस्ते हस्तमात्रं स्याद्वृद्ध्या द्वारेण वाचरेत् ।
अपीठञ्चतुरस्रं स्याद्विकरञ्चक्रपद्मजम् ॥ २१ ॥
पद्मार्द्धं नवभिः प्रोक्तं नाभिस्तु तिसृभिः स्मृता ।
अष्टाभिर्दारकान् कुर्य्यान्नेमिन्तु चतुरङ्गुलैः ॥ २२ ॥
त्रिधा(२) विभज्य च क्षेत्रमन्तर्द्वाभ्यामथाङ्कयेत् ।
पञ्चान्तस्वरसिद्ध्यर्थं (३) तेष्वास्फाल्य लिखेदरान् ॥ २३ ॥
इन्दीवरदलाकारानथवा मातुलाङ्गवत् ।
पद्मपत्रायतान्वापि लिखेदिच्छानुरूपतः ॥ २४ ॥
भ्रामयित्वा वहिर्नेमावरसन्ध्यन्तरे स्थितः ।
भ्रामयेदरमूलन्तु सन्धिमध्ये व्यवस्थितः ॥ २५ ॥

---

१ परिमार्जिता इति घ, चिह्नितपुस्तकपाठः ।

२ द्विधा इति ख, चिह्नितपुस्तकपाठः ।

३ पञ्चास्वरन्त्वसिद्धार्थमिति ख, चिह्नितपुस्तकपाठः पञ्चान्तरन्तु सिद्धार्थमिति क, चिह्नितपुस्तकपाठः ।

अरमध्ये स्थितो मध्यमरणिं भ्रामयेत् समम् ।
एवं सिद्धान्तराः सम्यक् मातुलाङ्गनिभाः समाः ॥ २६ ॥
विभज्य सप्तधा क्षेत्रं चतुर्दशकरं समम् ।
द्विधा कृते शतं त्वत्र षण्नवत्यधिकानि तु ॥ २७ ॥
कोष्ठकानि चतुर्भिस्तैर्मध्ये भद्रं समालिखेत् ।
परितो विसृजेद्वीथ्यै तथा दिक्षु समालिखेत् ॥ २८ ॥
कमलानि पुनर्वीथ्यै परितः परिमृज्य तु ।
द्वे द्वे मध्यमकोष्ठे तु ग्रीवार्थं दिक्षु लोपयेत् ॥ २९ ॥
चत्वारि बाह्यतः पश्चात्त्रीणि त्रीणि तु लोपयेत् ।
ग्रीवापार्श्वे वहिस्त्वेका शोभा सा परिकीर्त्तिता ॥ ३० ॥
विमृज्य बाह्यकोणेषु सप्तान्तस्त्रीणि मार्जयेत् ।
मण्डलं नवभागं स्यान्नवव्यूहं हरिं यजेत् ॥ ३१ ॥
पञ्चविंशतिकव्यूहं मण्डलं विश्वरूपगं ।
द्वात्रिंशद्धस्तकं क्षेत्रं भक्तं द्वात्रिंशता समं ॥ ३२ ॥
एवं कृते चतुर्विंशत्यधिकन्तु सहस्रकं ।
कोष्ठकानां समुद्दिष्टं मध्ये षोडशकोष्ठकैः ॥ ३३ ॥
भद्रकं परिलिख्याथ पार्श्वे पङ्क्तिं विमृज्य तु ।
ततः षोडशभिः कोष्ठैर्दिक्षु भद्राष्टकं लिखेत्(१) ॥ ३४ ॥
ततोऽपि पङ्क्तिं सम्मृज्य तद्वत् षोडशभद्रकं ।
लिखित्वा परितः पङ्क्तिं विमृज्याथ प्रकल्पयेत् ॥ ३५ ॥
द्वारद्वादशकं दिक्षु त्रीणि त्रीणि यथाक्रमं ।
षड्भिः परिलुप्यान्तर्मध्ये चत्वारि पार्श्वयोः ॥ ३६ ॥
चत्वार्यन्तर्वहिर्द्वे तु शोभार्थं परिमृज्य तु ।
उपद्वारप्रसिद्ध्यर्थं त्रीण्यन्तः पञ्च बाह्यतः ॥ ३७ ॥

१ दिक्षु तत्राष्टकं लिखेदिति ख, ग, घ, चिह्नितपुस्तकत्रयपाठः ।

परिमृज्य तथा शोभां पूर्ववत् परिकल्पयेत्।
वह्निः कोणेषु समान्तस्त्रीणि कोष्ठानि मार्जयेत् ॥ ३८ ॥
पञ्चविंशतिकव्यूहे परं ब्रह्म यजेत् कजे(१)।
मध्ये पूर्वादितः पद्मे वासुदेवादयः क्रमात् ॥ ३९ ॥
वराहं पूजयित्वा च पूर्वपद्मे ततः क्रमात्।
व्यूहान् सम्पूजयेत्तावत् यावत् षड्विंशमो भवेत् ॥ ४० ॥
यथोक्तं व्यूहमखिलमेकस्मिन् पङ्कजे क्रमात्।
यष्टव्यमिति यत्नेन(२)प्रचेता मन्यतेऽध्वरं(३) ॥ ४१ ॥
सत्यन्तु मूर्त्तिभेदेन विभक्तं मन्यतेऽच्युतं।
चत्वारिंशत् करं क्षेत्रं त्युत्तरं(४)विभजेत् क्रमात् ॥ ४२ ॥
एकैकं सप्तधा भूयस्तथैवैकं द्विधा पुनः।
चतुःषष्ट्युत्तरं सप्तशतान्येकं सहस्रकं ॥ ४३ ॥
कोष्ठकानां भद्रकञ्च मध्ये षोडशकोष्ठकैः।
पार्श्वे वीथीं ततस्त्वष्टभद्राण्यथ च वीथिका ॥ ४४ ॥
षोडशाब्जान्यथो वीथी चतुर्विंशतिपङ्कजं।
वीथीपद्मानि द्वात्रिंशत् पङ्क्तिवीथिकजान्यथ ॥ ४५ ॥
चत्वारिंशत्ततो वीथी शेषपङ्क्तित्रयेण च।
द्वारशोभोपशोभाः स्युर्दिक्षु मध्ये विलोप्य च ॥ ४६ ॥
द्विचतुःषड्द्वारसिद्ध्यै चतुर्दिक्षु विलोपयेत्।
पञ्च त्रीण्येककं बाह्ये शोभोपद्वारसिद्धये ॥ ४७ ॥

---

१ शुभे इति ङ, चिह्नितपुस्तकपाठः।

२ यष्टव्यमिति यज्ञेन इति ग, घ, चिह्नितपुस्तकद्वयपाठः यष्टव्यमिति मन्त्रेण इति ङ, चिह्नितपुस्तकपाठः।

३ प्रचेता मन्यते ध्रुवमिति ख, चिह्नितपुस्तकपाठः।

४ त्र्युत्तममिति ङ, चिह्नितपुस्तकपाठः।

द्वाराणां पार्श्वयोरन्तः षड् वा चत्वारि मध्यतः ।
द्वे द्वे लुम्पेदेवमेव षड् भवन्त्युपशोभिकाः ॥ ४८ ॥
एकस्यां दिशि सङ्ख्याः स्युः चतस्रः परिसङ्ख्यया ॥ ४९ ॥
एकैकस्यां दिशि त्रीणि द्वाराण्यपि भवन्त्यत ।
पञ्च पञ्च तु को[illegible]णेषु पङ्क्तौ पङ्क्तौ क्रमात् मृजेत् ।
कोष्ठकानि भवेदेवं मर्त्येच्छं मण्डलं शुभं ॥ ५० ॥

इत्यादिमहापुराणे आग्नेये मण्डलादिलक्षणं नाम
ऊनत्रिंशोऽध्यायः ।

## अथ त्रिंशोऽध्यायः ।

मण्डलविधिः ।

नारद उवाच । मध्ये पद्मे यजेद्ब्रह्म साङ्गं पूर्वेऽब्जनाभकं ।
आग्नेयेऽब्जे च प्रकृतिं याम्येऽब्जे पुरुषं यजेत् ॥ १ ॥
पुरुषाद्दक्षिणे वह्निं नैर्ऋते वारुणेऽनिलं ।
आदित्यमैन्दवे पद्मे ऋग्यजुश्चैशपद्मके ॥ २ ॥
इन्द्रादींश्च द्वितीयायां पद्मे षोडशके तथा ।
सामाथर्वाणमाकाशं वायुं तेजस्तथा जलं ॥ ३ ॥
पृथिवीञ्च मनश्चैव श्रोत्रं त्वक् चक्षुरर्चयेत् ।
रसनाञ्च तथा घ्राणं भूर्भुवश्चैव षोडशं ॥ ४ ॥
महर्जनस्तपः सत्यं तथाग्निष्टोममेव च ।
अत्यग्निष्टोमकं(१) चोक्थं षोड़शीं वाजपेयकं ॥ ५ ॥
अतिरात्रञ्च सम्पूज्य तथाप्तोर्याममर्चयेत् ।
मनो बुद्धिमहङ्कारं शब्दं स्पर्शञ्च रूपकं ॥ ६ ॥
रसं गन्धञ्च पद्मेषु चतुर्विंशतिषु क्रमात् ।

१ प्रत्य[illegible]ग्निष्टोमकमिति ख,चिह्नितपुस्तकपाठः ज्योतिष्टोमकमिति ङ,चिह्नितपुस्तकपाठः ।

जीवं मनोऽधिपश्चाहं प्रकृतिं शब्दमात्रकं ॥ ७ ॥
वासुदेवादिमूर्त्तीश्च तथा चैव दशात्मकं ।
मनः श्रोत्रं त्वचं प्रार्च्चेत् चक्षुश्च रसनं तथा ॥ ८ ॥
घ्राणं वाक्पाणिपादञ्च द्वात्रिंशद्वारिजे स्थिमान् ।
चतुर्थावरणे पूज्याः साङ्गाः सपरिवारकाः ॥ ९ ॥
पायूपस्थौ च सम्पूज्य मासानां द्वादशाधिपान् ।
पुरुषोत्तमादिषड्विंशान् वाह्यावरणके यजेत् ॥ १० ॥
चक्राब्जे तेषु सम्पूज्या मासानां पतयः क्रमात् ।
अष्टौ प्रकृतयः षड्वा पञ्चाथ चतुरोऽपरे ॥ ११ ॥
रजः पातं ततः कुर्य्याल्लिखिते मण्डले शृणु ।
कर्णिका पीतवर्णा स्याद्रेखाः सर्वाः सिताः समाः ॥ १२ ॥
द्विहस्तेऽङ्गुष्ठमात्राः स्युर्हस्ते चार्द्धसमाः सिताः ।
पद्मं शुक्लेन सन्धींस्तु कृष्णेन श्यामतोयवा ॥ १३ ॥
केशरा रक्तपीताः स्युः कोणान् रक्तेन पूरयेत् ।
भूषयेद्योगपीठन्तु यथेष्टं सार्व्ववर्णिकैः ॥ १४ ॥
लतावितानपत्राद्यैर्वीथिकामुपशोभयेत् ।
पीठद्वारे तु शुक्लेन शोभारक्तेन पीततः ॥ १५ ॥
उपशोभाश्च नीलेन कोणशङ्खांश्च वै सितान् ।
भद्रके पूरणं प्रोक्तमेवमन्येषु पूरणं ॥ १६ ॥
त्रिकोणं सितरक्तेन कृष्णेन च विभूषयेत् ।
द्विकोणं रक्तपीताभ्यां नाभिं कृष्णेन चक्रके ॥ १७ ॥
अरकान् पीतरक्ताभिः श्यामान् नेमिन्तु रक्ततः ।
सितश्यामारुणाः कृष्णाः पीता रेखास्तु वाह्यतः ॥ १८ ॥
शालिपिष्टादि शुक्लं स्याद्रक्तं कौसुम्भकादिकम् ।
हरिद्रया च हारिद्रं कृष्णं स्याद्दग्धधान्यतः ॥ १९ ॥

शमीपत्रादिकैः श्यामं वीजानां लक्षजाप्यतः।
चतुर्लक्षन्तु मन्त्राणां विद्यानां लक्षसाधनम् ॥ २० ॥
अयुतं बुद्धविद्यानां स्तोत्राणाञ्च सहस्रकम्।
पूर्व्वमेवाथ लक्षेण मन्त्रशुद्धिस्तथात्मनः ॥ २१ ॥
तथापरेण लक्षेण मन्त्रः क्षेत्रीकृतो भवेत्।
पूर्वमेवासमो होमो वीजानां सम्प्रकीर्तितः ॥ २२ ॥
पूर्वसेवा दशांशेन मन्त्रादीनां प्रकीर्त्तिता।
पुरश्चर्य्ये तु मन्त्रे तु मासिकं व्रतमाचरेत् ॥ २३ ॥
भुवि न्यसेद्वामपादं न गृह्णीयात् प्रतिग्रहम्।
एवं द्वित्रिगुणेनैव मध्यमोत्तमसिद्धयः ॥ २४ ॥
मन्त्रध्यानं प्रवक्ष्यामि येन स्यान्मन्त्रजं फलम्।
स्थूलं शब्दमयं रूपं विग्रहं वाह्यमिष्यते ॥ २५ ॥
सूक्ष्मं ज्योतिर्म्मयं रूपं हार्दं चिन्तामयं भवेत्।
चिन्तया रहितं यत्तु तत् परं परिकीर्त्तितम् ॥ २६ ॥
वराहसिंहशक्तीनां स्थूलरूपं प्रधानतः।
चिन्तया रहितं रूपं वासुदेवस्य कीर्त्तितम् ॥ २७ ॥
इतरेषां स्मृतं रूपं हार्द्दं चिन्तामयं सदा।
स्थूलं वैराजमाख्यातं सूक्ष्मं वै लिङ्गितं भवेत् ॥ २८ ॥
चिन्तया रहितं रूपमैश्वरं परिकीर्त्तितम्।
हृत्पुण्डरीकनिलयश्चैतन्यं ज्योतिरव्ययम् ॥ २९ ॥
वीजं वीजात्मकं ध्यायेत् कदम्बकुसुमाकृतिं।
कुम्भान्तरगतो दीपो निरुद्धप्रसवो यथा ॥ ३० ॥
संहतः केवलस्तिष्ठेदेवं मन्त्रेश्वरो हृदि।
अनेकसुषिरे कुम्भे तावन्मात्रा गभस्तयः ॥ ३१ ॥
प्रसरन्ति वहिस्तद्वन्नाडीभिर्वीजरश्मयः।

अथावभासतो देवीमात्मीकृत्य तनुं स्थिताः ॥ ३२ ॥
हृदयात् प्रस्थिता नाड्यो दर्शनेन्द्रियगोचराः ।
अग्नीषोमात्मके तासां नाड्यौ नासाग्रसंस्थिते ॥ ३३ ॥
सम्यग्गुह्येन योगेन जित्वा देहसमीरणम् ।
जपध्यानरतो मन्त्री मन्त्रलक्षणमश्नुते(१) ॥ ३४ ॥
संशुद्धभूततन्मात्रः सकामो योगमभ्यसन् ।
अणिमादिमवाप्नोति विरक्तः प्रविलङ्घ्य च ।
देवात्मके भूतमात्रान्मुच्यते चेन्द्रियग्रहात् । ३५ ॥

इत्यादिमहापुराणे आग्नेये मण्डलादिवर्णनं नाम त्रिंशोऽध्यायः ।

## अथ एकत्रिंशोऽध्यायः ।

### मार्जनविधानं ।

अग्निरुवाच । रक्षां स्वस्य परेषाञ्च वक्ष्ये तां मार्जनाह्वयां ।
यया विमुच्यते दुःखैः सुखञ्च प्राप्नुयान्नरः(२) ॥ १ ॥
ओं नमः परमार्थाय पुरुषाय महात्मने ।
अरूपबहुरूपाय व्यापिने परमात्मने ॥ २ ॥
निष्कल्मषाय शुद्धाय ध्यानयोगरताय च ।
नमस्कृत्य प्रवक्ष्यामि यत् तत्सिध्यतु मे वचः ॥ ३ ॥
वराहाय नृसिंहाय वामनाय महात्मने ।
नमस्कृत्य प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ४ ॥

---

१ मन्त्रजं फलमश्नुते इति ख, चिह्नितपुस्तकपाठः ।
२ सुखं ब्रह्माप्नुयान्नर इति ख, चिह्नितपुस्तकपाठः ।

त्रिविक्रमाय रामाय वैकुण्ठाय नराय च ।
नमस्कृत्य प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ॥ ५ ॥
वराह नरसिंहेश वामनेश त्रिविक्रम ।
हयग्रीवेश सर्वेश हृषीकेश हराशुभम् ॥ ६ ॥
अपराजितचक्राद्यैश्चतुर्भिः परमायुधैः ।
अखण्डितानुभावैस्त्वं(१) सर्वदुष्टहरो भव ॥ ७ ॥
हरामुकस्य दुरितं सर्वञ्च कुशलं कुरु ।
मृत्युबन्धार्त्तिभयदं दुरितस्य च यत् फलम् ॥ ८ ॥
पराभिध्यानसहितैः प्रयुक्तञ्चाभिचारकम् ।
गदस्पर्शमहारोगप्रयोगं जरया जर ॥ ९ ॥
ओं नमो वासुदेवाय नमः कृष्णाय खड्गिने ।
नमः पुष्करनेत्राय केशवायादिचक्रिणे ॥ १० ॥
नमः कमलकिञ्जल्कपीतनिर्म्मलवाससे ।
महाहवरिपुस्कन्धसृष्टचक्राय चक्रिणे ॥ ११ ॥
दंष्ट्रोद्धृतक्षितिभृते(२) त्रयीमूर्त्तिमते नमः ।
महायज्ञवराहाय शेषभोगाङ्कशायिने ॥ १२ ॥
तप्तहाटककेशाग्रज्वलत्पावकलोचन ।
वज्राधिकनखस्पर्श दिव्यसिंह नमोऽस्तु ते ॥ १३ ॥
काश्यपायातिह्रस्वाय ऋग्यजुःसामभूषित ।
तुभ्यं वामनरूपायाक्रमते गां(३) नमो नमः ॥ १४ ॥
वराहाशेषदुष्टानि सर्वपापफलानि वै ।
मर्द्द मर्द्द महादंष्ट्र मर्द्द मर्द्द च तत्फलम् ॥ १ ॥

१ अखण्डितात्मभावैस्त्वमिति ख, चिह्नितपुस्तकपाठः ।
२ दंष्ट्रोद्धृतभूमिमते इति ख, चिह्नितपुस्तकपाठः ।
३ मक्रते गामिति ख चिह्नितपुस्तकपाठः ।

नरसिंह करालास्य दन्तप्रान्तानलोज्ज्वल ।
भञ्ज भञ्ज निनादेन दुष्टान्यस्यार्त्तिनाशन ॥ १६ ॥
ऋग्यजुःसामगर्भाभिर्वाग्भिर्वामनरूपधृक् ।
प्रशमं सर्वदुःखानि नयत्वस्य जनार्द्दनः ॥ १७ ॥
ऐकाहिकं द्व्याहिकञ्च तथा त्रिदिवसं ज्वरम् ।
चातुर्थकन्तथात्युग्रन्तथैव सततज्वरम् ॥ १८ ॥
दोषोत्थं सन्निपातोत्थं तथैवागन्तुकं ज्वरम् ।
शमं नयाशु गोविन्द च्छिन्धि च्छिन्ध्यस्य वेदनाम् (१) ॥ १९ ॥
नेत्रदुःखं शिरोदुःखं दुःखञ्चोदरसम्भवम् ।
अन्तःश्वासमतिश्वासं (२) परितापं सवेपथुम् ॥ २० ॥
गुदघ्राणाङ्घ्रिरोगांश्च कुष्ठरोगांस्तथा क्षयं (३) ।
कामलादींस्तथा रोगान् प्रमेहांश्चातिदारुणान् ॥ २१ ॥
भगन्दरातिसारांश्च मुखरोगांश्च वल्गुलीम् ।
अश्मरीं मूत्रकृच्छ्रांश्च रोगानन्यांश्च दारुणान् ॥ २२ ॥
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः (४) ।
कफोद्भवाश्च ये केचित् ये चान्ये सान्निपातिकाः ॥ २३ ॥
आगन्तुकाश्च ये रोगा लूता विस्फोटकादयः ।
ते सर्वे प्रशमं यान्तु वासुदेवापमार्जिताः (५) ॥ २४ ॥
विलयं यान्तु ते सर्वे विष्णोरुच्चारणेन च ।
क्षयं गच्छन्तु चाशेषास्ते चक्राभिहता हरेः ॥ २५ ॥

---

१ छिन्द छिन्दास्य वेदनामिति ग, चिह्नितपुस्तकपाठः ।
२ अनिश्वासमतिश्वास मिति ग, चिह्नितपुस्तकपाठः ।
३ तथैव च इति ग, चिह्नितपुस्तकपाठः ।
४ ये रोगाः पित्तसम्भवा इति ग, चिह्नितपुस्तकपाठः ।
५ वासुदेवपराजिता इति च, चिह्नितपुस्तकपाठः

अच्युतानन्तगोविन्दनामोच्चारणभीषिताः ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ २६ ॥
स्थावरं जङ्गमं वापि कृत्रिमं चापि यद्विषम् ।
दन्तोद्भवं नखभवमाकाशप्रभवं विषम् ॥ २७ ॥
लूतादिप्रभवं यच्च विषमन्यत्तु दुःखदं ।
शमं नयतु तत् सर्वं कीर्त्तितोस्य जनार्द्दनः ॥ २८ ॥
ग्रहान् प्रेतग्रहांश्चापि तथा वै डाकिनीग्रहान् (१) ।
वेतालांश्च पिशाचांश्च गन्धर्वान् यक्षराक्षसान्(२) ॥ २९ ॥
शकुनीपूतनाद्यांश्च तथा वैनायकान् ग्रहान् ।
मुखमण्डीं तथा क्रूरां रेवतीं वृद्धरेवतीम् ॥ ३० ॥
वृद्धकाख्यान् ग्रहांश्चोग्रांस्तथा मातृग्रहानपि ।
बालस्य विष्णोश्चरितं हन्तु बालग्रहानिमान् ॥ ३१ ॥
वृद्धाश्च ये ग्रहाः केचिद्ये च बालग्रहाः क्वचित् ।
नरसिंहस्य ते दृष्ट्या दग्धा ये चापि यौवने ॥ ३२ ॥
सटा(३) करालवदनो नरसिंहो महाबलः ।
ग्रहानशेषान्निःशेषान् करोतु जगतो हितः ॥ ३३ ॥
नरसिंह महासिंह ज्वालामालोज्ज्वलानन ।
ग्रहानशेषान् सर्वेश खाद खादाग्निलोचन ॥ ३४ ॥
ये रोगा ये महोत्पाता यद्विषं ये महाग्रहाः ।
यानि च क्रूरभूतानि ग्रहपीडाश्च दारुणाः ॥ ३५ ॥
शस्त्रक्षतेषु ये दोषा ज्वालागर्द्दभकादयः ।
तानि सर्वाणि सर्वात्मा परमात्मा जनार्द्दनः ॥ ३६ ॥

---

१ तथा वेतालिकान् ग्रहानिति घ, चिह्नितपुस्तकपाठः ।
२ गन्धर्व्वान् राक्षसानपि इति ख, चिह्नितपुस्तकपाठः ।
३ शटा इति ख, क,चिह्नितपुस्तकद्वयपाठ ।

किञ्चिद्रूपं समास्थाय वासुदेवास्य नाशय ॥ ३७ ॥
छित्वा सुदर्शनचक्रं ज्वालामालातिभीषणम्।
सर्वदुष्टोपशमनं कुरु देववराच्युत ॥ ३८ ॥
सुदर्शन महाज्वाल च्छिन्धि च्छिन्धि महारव (१)।
सर्व्वदुष्टानि रक्षांसि क्षयं यान्तु विभीषण ॥ ३९ ॥
प्राच्यां प्रतीच्यां च दिशि दक्षिणोत्तरतस्तथा।
रक्षाङ्करोतु सर्वात्मा नरसिंहः सुगर्ज्जितः (२)॥ ४० ॥
दिवि भुव्यन्तरीक्षे च पृष्ठतः पार्श्वतोग्रतः।
रक्षाङ्करोतु भगवान् बहुरूपी जनार्द्दनः ॥ ४१ ॥
यथा विष्णुर्ज्जगत्सर्वं सदेवासुरमानुषं।
तेन सत्येन दुष्टानि शमनस्य व्रजन्तु वै (३)॥ ४२ ॥
यथा विष्णौ स्मृते सद्यः सङ्क्षयं यान्ति पातकाः।
सत्येन तेन सकलं दुष्टमस्य प्रशाम्यतु ॥ ४३ ॥
परमात्मा यथा विष्णुर्वेदान्तेषु च गीयते।
तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ॥ ४४ ॥
यथा यज्ञेश्वरो विष्णुर्द्देवेष्वपि हि गीयते।
सत्येन तेन सकलं यन्मयोक्तं तथास्तु तत् ॥ ४५ ॥
शान्तिरस्तु शिवञ्चास्तु दुष्टमस्य प्रशाम्यतु।
वासुदेवशरीरोत्थैः कुशैर्न्निर्म्मार्जितं मया (४) ॥ ४६ ॥
अपमार्जतु गोविन्दो नरो नारायणस्तथा।
तथास्तु सर्वदुःखानां प्रशमो जपनाद्धरेः ॥ ४७ ॥

---

१ महाबल इति ख, चिह्नितपुस्तकपाठः।
२ सुगर्ज्जितैरिति ग, ङ, चिह्नितपुस्तकद्वयपाठः।
३ प्रयान्तु वै इति ग, चिह्नितपुस्तकपाठः।
४ कुशैर्निर्णाशितमिति ख, ग, चिह्नितपुस्तकद्वयपाठः।

अपमार्जनकं शस्त्रं सर्वरोगादिवारणम् ।
अहं हरिः कुशो विष्णुर्हता रोगा मया तव ॥ ४८ ॥

इत्यादिमहापुराणे आग्नेये कुशापमार्जनं नाम
एकत्रिंशोऽध्यायः ।

---

## अथ द्वात्रिंशोऽध्यायः ।

### संस्कारकथनं ।

अग्निरुवाच । निर्वाणादिषु दीक्षासु चत्वारिंशत्तथाष्ट च ।
संस्कारान् कारयेद्धीमान् शृणु तान्यैः सुरो भवेत् ॥ १ ॥
गर्भाधानन्तु योन्यां वै ततः पुंसवनञ्चरेत् ।
सीमन्तोन्नयनञ्चैव जातकर्म्म च नाम च ॥ २ ॥
अन्नाशनं ततश्चूडा ब्रह्मचर्य्यव्रतानि च ।
चत्वारि वैष्णवी पार्थी भौतिकी श्रौतिकी तथा ॥ ३ ॥
गोदानं स्नातकत्वञ्च पाकयज्ञाश्च सप्त ते(१) ।
अष्टका पार्वणश्राद्धं श्रावण्याग्रायणीति च ॥ ४ ॥
चैत्री चाश्वयुजी सप्त हविर्यज्ञांश्च तान् शृणु ।
आधानञ्चाग्निहोत्रञ्च दर्शो वै पौर्णमासकः ॥ ५ ॥
चातुर्मास्यं पशुबन्धः सौत्रामणिरथापरः ।
सोमसंस्थाः सप्त शृणु अग्निष्टोमः क्रतूत्तमः ॥ ६ ॥
अत्यग्निष्टोम उक्थश्च षोडशी वाजपेयकः ।
अतिरात्राप्तोर्य्यामश्च सहस्रेशाः सवा इमे ॥ ७ ॥
हिरण्याङ्घ्रिर्हिरण्याक्षो हिरण्यमित्र इत्यतः ।

१ सप्त च इति ग, ख, चिह्नितपुस्तकद्वयपाठः ।

हिरण्यपाणिर्हेमाक्षो हेमाङ्गो हेमसूत्रकः॥ ८॥
हिरण्यास्यो हिरण्याङ्गो हेमजिह्वो हिरण्यवान्।
अश्वमेधो हि सर्वेशो गुणास्त्वाष्टाय तान् शृणु॥ ९॥
दया च सर्वभूतेषु क्षान्तिश्चैव तथार्जवम्।
शौचं चैवमनायासो मङ्गलं चापरो गुणः॥ १०॥
अकार्पण्यञ्चास्पृहा च मूलेन जुहुयाच्छतम्।
सौरशाक्तेयविष्णुशिवदीक्षास्त्वेते समाः स्मृताः॥ ११॥
संस्कारैः संस्कृतश्चैतैर्भुक्तिमुक्तिमवाप्नुयात्।
सर्वरोगाद्विनिर्मुक्तो देववद्वर्त्तते नरः।
जप्याद्धोमात्पूजनाच्च ध्यानाद्देवस्य चेष्टभाक्॥ १२॥

इत्यादिमहापुराणे आग्नेये अष्टचत्वारिंशत्संस्कारकथनं नाम द्वात्रिंशोऽध्यायः।

---

## अथ त्रयस्त्रिंशोऽध्यायः।

### पवित्रारोहणविधानं।

अग्निरुवाच। पवित्रारोहणं वक्ष्ये वर्षपूजाफलं हरेः।
आषाढादौ कार्त्तिकान्ते प्रतिपद्धनदा तिथिः(१)॥ १
श्रिया गौर्य्या गणेशस्य सरस्वत्या गुहस्य च।
मार्त्तण्डमातृदुर्गाणां नागर्षिहरिमन्मथैः॥ २॥
शिवस्य ब्रह्मणस्तद्वद्द्वितीयादितिथिः क्रमात्।
यस्य देवस्य यो भक्तः पवित्रा तस्य सा तिथिः॥ ३॥
आरोहणे तुल्यविधिः पृथक् मन्त्रादिकं यदि।

---

१ वह्ने सि.थि.रिति ख, चिह्नितपुस्तकपाठः।

सौवर्णं राजतं ताम्रं नेत्रकार्पासिकादिकं ॥ ४ ॥
ब्राह्मण्या कर्त्तितं सूत्रं तदलाभे तु संस्कृतं ।
त्रिगुणं त्रिगुणीकृत्य तेन कुर्य्यात् पवित्रकं ॥ ५ ॥
अष्टोत्तरशतादूर्द्ध्वं तदर्द्धं चोत्तमादिकं ।
क्रियालोपविघातार्थं यत्त्वयाभिहितं प्रभो ॥ ६ ॥
मया तत् क्रियते देव यथा यत्र पवित्रकं ।
अविघ्नं तु भवेदत्र कुरु नाथ जयाव्यय ॥ ७ ॥
प्रार्थ्य तन्मण्डलायादौ गायत्र्या बन्धयेन्नरः ।
ओं नारायणाय विद्महे वासुदेवाय धीमहि ॥ ८ ॥
तन्नो विष्णुः प्रचोदयात् देवदेवानुरूपतः ।
जानूरुनाभिनामान्तं प्रतिमासु पवित्रकं ॥ ९ ॥
पादान्ता वनमाला स्यादष्टोत्तरसहस्रतः(१) ।
माला तु कल्पसाध्यं वा द्विगुणं षोडशाङ्गुलात् ॥ १० ॥
कर्णिका केशरं पत्रं मन्त्राद्यं(२) मण्डलान्तकं ।
मण्डलाङ्गुलमात्रैकचक्राब्जाद्यौ(३) पवित्रकं ॥ ११ ॥
स्थण्डिलेऽङ्गुलमानेन आत्मनः सप्तविंशतिः ।
आचार्य्याणां च सूत्राणि पितृमात्रादिपुस्तके ॥ १२ ॥
नाभ्यन्तं द्वादशग्रन्थिं तथा गन्धपवित्रकं ।
षडङ्गुलात् कल्पनादौ द्विर्माला चाष्टोत्तरं शतं ॥ १३ ॥
अथवार्कचतुर्विंशषड्त्रिंशन्मालिका द्विजः ।
अनामामध्यमाङ्गुष्ठैर्मन्दाद्यैः मालिकार्थिभिः(४) ॥ १४ ॥

---

१ पादान्तरेण माला स्यादष्टोत्तरसहस्रशः इति ग, चिह्नितपुस्तकपाठः।
२ गदाद्यमिति घ, चिह्नितपुस्तकपाठः ।
३ चक्राब्जादौ पवित्रके इति घ, चिह्नितपुस्तकपाठः ।
४ मन्दाद्यौ इति ख, ग, चिह्नितपुस्तकद्वयपाठः मन्दाद्यैरिति घ,चिह्नितपुस्तकपाठः ।

कनिष्ठादौ द्वादश वा ग्रन्थयः स्युः पवित्रके ।
रवेः कुम्भकुताशादेः सम्भवे विष्णुवन्मतम् ॥ १५ ॥
पीठस्य पीठमानं स्यान्मेखलान्ते च कुण्डके ।
यथाशक्ति सूत्रग्रन्थिपरिचारेय वैष्णव ॥ १६ ॥
सूत्राणि वा सप्तदश सूत्रेण त्रिविभक्तके(१) ।
रोचनागुरुकर्पूरहरिद्राकुङ्कुमादिभिः ॥ १७ ॥
रञ्जयेच्चन्दनाद्यैर्वा स्नानसन्ध्यादिकृन्नरः ।
एकादश्यां यागगृहे भगवन्तं हरिं यजेत् ॥ १८ ॥
समस्तपरिवाराय बलिं पीठे समर्चयेत् ।
ओं क्षेत्रपालाय द्वारान्ते द्वारोपरि तथा श्रियं ॥ १९ ॥
धात्रे दक्षे विधात्रे च गङ्गाञ्च यमुनां तथा ।
शङ्खपद्मनिधी पूज्य मध्ये वास्तुपसारकं ॥
सारङ्गायेति भूतानां भूतशुद्धिं स्थितश्चरेत् ॥ २० ॥
ओं क्रूं हः फट् क्रूं(२) गन्धतन्मात्रं संहरामि नमः ॥
ओं क्रूं हः फट् क्रूं(३) रसतन्मात्रं संहरामि नमः ।
ओं क्रूं हः फट् क्रूं(४) रूपतन्मात्रं संहरामि नमः ॥
ओं क्रूं हः फट् क्रूं(५) स्पर्शतन्मात्रं संहरामि नमः ।

---

१ विसूत्राणि च भद्रके इति घ, चिह्नितपुस्तकपाठः ।

२ ओं हूं हः फट् हूमिति ग, चिह्नितपुस्तकपाठः ओं ह्रां हः फट् ह्रूमिति ङ, चिह्नितपुस्तकपाठः ।

३ ओं ह्रीं हः फट् ह्रूमिति ङ, चिह्नितपुस्तकपाठः ।

४ ओं ह्रां हः ह्रूं इति ग, चिह्नितपुस्तकपाठः ओं ह्रां हः फट् ह्रीमिति ङ, चिह्नितपुस्तकपाठः ।

५ ओं ह्रां हः फट् इति ग, चिह्नितपुस्तकपाठः ।

ओं क्रूं हः फट् क्रूं(१) शब्दतन्मात्रं संहरामि नमः ॥
पञ्चोद्घातैर्गन्धतन्मात्ररूपं भूमिमण्डलं ।
चतुरस्रञ्च पीतञ्च कठिनं वज्रलाञ्छितं ॥ २१ ॥
इन्द्राधिदैवतं पादयुग्ममध्यगतं स्मरेत् ।
शुद्धञ्च रसतन्मात्रं प्रविलिप्याथ संहरेत् ॥
रसमात्ररूपमात्रे क्रमेणानेन पूजकः ॥ २२ ॥
ओं क्रीं हः फट् क्रूं(२) रसतन्मात्रं संहरामि नमः ॥
ओं क्रूं हः फट्(३) रूपतन्मात्रं संहरामि नमः ।
ओं क्रीं हः फट् क्रूं स्पर्शतन्मात्रं संहरामि नमः ॥
ओं क्रीं हः फट् क्रूं(४) शब्दतन्मात्रं संहरामि नमः ।
जानुनाभिमध्यगतं(५) श्वेतं वै पद्मलाञ्छितं ।
शुक्लवर्णं चार्द्धचन्द्रं ध्यायेद्वरुणदैवतं ॥ २३ ॥
चतुर्भिश्च तदुद्घातैः शुद्धं तद्रसमात्रकं ।
संहरेद्रूपतन्मात्रे रूपमात्रे च संहरेत् ॥ २४ ॥
ओं क्रूं हः फट् क्रूं रूपतन्मात्रं संहरामि नमः ।
ओं क्रूं हः फट् क्रूं स्पर्शतन्मात्रं संहरामि नमः ॥
ओं क्रूं हः फट् क्रूं शब्दतन्मात्रं संहरामि नमः ।
इति त्रिभिस्तदुद्घातैस्त्रिकोणं वह्निमण्डलम् ।
नाभिकण्ठमध्यगतं रक्तं स्वस्तिकलाञ्छितम् ॥ २५ ॥
ध्यात्वानलाधिदैवन्तच्छुद्धं स्पर्शे लयं नयत् ।

---

१ ओं क्रां हः फट् ह्रमिति ग, चिह्नितपुस्तकपाठः ।
२ ओं क्रीं फट् ह्रमिति ग, चिह्नित पुस्तकपाठः ओं क्रूं हः फट् हूमिति क, चिह्नितपुस्तकपाठः ।
३ ओं क्रीं हः फट् क्रूं इति क, चिह्नितपुस्तकपाठः ।
४ ओं क्रूं हः फट् हूमिति क, चिह्नितपुस्तकपाठः ।
५ पद्मामममध्यगतमिति क, चिह्नितपुस्तकपाठः ।

ओं क्रौं हः फट् क्रूं (१) स्पर्शतन्मात्रं संहरामि नमः।
ओं क्रौं हः फट् क्रूं (२) शब्दतन्मात्रं संहरामि नमः॥
कण्ठनासामध्यगतं वृत्तं वै वायुमण्डलम्॥ २६॥
विरुद्धातैर्धूम्रवर्णं ध्यायेच्छुद्धेन्दुलाञ्छितम्।
स्पर्शमात्रं शब्दमात्रैः संहरेद्ध्यानयोगतः॥ २७॥
ओं क्रौं हः फट् क्रूं शब्दतन्मात्रं संहरामि नमः।
एकोद्वातेन चाकाशं शुद्धस्फटिकसन्निभम्।
नासापुटशिखान्तस्थमाकाशमुपसंहरेत्॥ २८॥
शोषणाद्यैर्देहशुद्धिं कुर्यादेवं क्रमात्ततः।
शुष्कं कलेवरं ध्यायेत् पादाद्यञ्च शिखान्तकम्॥ २९॥
यं वीजेन वं वीजेन ज्वालामालासमायुतम्(३)।
देहं रमित्यनेनैव ब्रह्मरन्ध्राद्विनिर्गतम्॥ ३०॥
विन्दुस्थात्ता चामृतस्य तेन भस्मकलेवरम्।
सम्प्लावयेल्लमित्यस्मात् देहं सम्पाद्य दिव्यकम्॥ ३१॥
न्यासं कृत्वा करे देहे मानसं यागमाचरेत्।
विष्णुं साङ्गं हृदि पद्मे मानसैः कुसुमादिभिः॥ ३२॥
मूलमन्त्रेण देवेशमभ्यर्चयेद्भुक्तिमुक्तिदम्।
स्वागतं देवदेवेश सन्निधौ भव केशव॥ ३३॥
गृहाण मानसीं पूजां यथार्थं(४) परिभाविताम्।
आधारशक्तिः कूर्माय पूज्योऽनन्तो मही ततः॥ ३४॥
मध्येऽग्न्यादौ च धर्माद्या अधर्मादीन्द्रमुख्यगम्(५)।

१ ओं चौं हः फट् क्रूमिति ङ, चिह्नितपुस्तकपाठः।
२ ओं चौं हः फट् क्रूमिति ङ, चिह्नितपुस्तकपाठः।
३ ज्वालामालासमप्रभमिति ङ, चिह्नितपुस्तकपाठः।
४ यथास्वमिति ख, चिह्नितपुस्तकपाठः।
५ धर्मादीनिन्द्रादौ विपरीतकानिति ङ चिह्नितपुस्तकपाठः।

सत्त्वादि मध्ये पद्मञ्च मायाविद्याख्यतत्त्वके ॥ ३५ ॥
कालतत्त्वञ्च सूर्य्यादिमण्डलं पक्षिराजकः ।
मध्ये ततश्च वायव्यादीशान्ता गुरुपङ्क्तिकाः ॥ ३६ ॥
गणः सरस्वती पूज्या(१) नारदो नलकूवरः ।
गुरुर्गुरुपादुका च परो गुरुश्च पादुका ॥ ३७ ॥
पूर्वसिद्धाः परसिद्धाः केशरेषु च शक्तयः ।
लक्ष्मीः सरस्वती प्रीतिः कीर्त्तिः शान्तिश्च कान्तिका ॥ ३८ ॥
पुष्टिस्तुष्टिर्महेन्द्राद्या मध्ये चावाहितो हरिः ।
धृतिः श्रीरतिकान्त्याद्या मूलेन स्थापितोऽच्युतः ॥ ३९ ॥
ओं अभिमुखो भवेति प्रार्थ्य सन्निहितो भव ।
विन्यस्यार्घ्यादिकं दत्वा गन्धाद्यैर्मूलतो यजेत् ॥ ४० ॥
ओं भीषय भीषय हृत् शिरस्त्रासय वै पुनः ।
मर्द्दय मर्द्दय शिखा अग्न्यादौ शस्त्रतोऽस्त्रकं ॥ ४१ ॥
रक्ष रक्ष प्रध्वंसय प्रध्वंसय कवचाय(२) नमस्ततः ।
ओं ह्रूं(३) फट् अस्त्राय नमो मूलवीजेन चाङ्गकं ॥ ४२ ॥
पूर्व्वदक्षाप्यसौम्येषु मूर्त्त्यावरणमर्च्चयेत् ।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ ४३ ॥
अग्न्यादौ श्रीधृतिरतिकान्तयो मूर्त्तयो हरेः ।
शङ्खचक्रगदापद्ममग्न्यादौ पूर्व्वकादिकं ॥ ४४ ॥
शार्ङ्गञ्च मुषलं खड्गं वनमालाञ्च तद्बहिः ।
इन्द्राद्याश्च तथानन्तो नैर्ऋत्यां वरुणस्ततः ॥ ४५ ॥
ब्रह्मेन्द्रेशानयोर्मध्ये अस्त्रावरणकं वहिः ।
ऐरावतस्ततश्छागो महिषो वानरो झषः ॥ ४६ ॥

१ गणश्च तास्तु पूज्याश्च इति ङ. चिह्नितपुस्तकपाठः ।
२ रक्ष रक्ष प्रध्वंसय कवचायेति ङ. चिह्नितपुस्तकपाठः ।
३ ओं ह्रीमिति ख. चिह्नितपुस्तकपाठः ।

मृगः शशोऽथ वृषभः कूर्म्मो हंसस्ततो बहिः।
पृश्निगर्भः कुमुदाद्या द्वारपाला द्वयं द्वयं ॥ ४७ ॥
पूर्व्वाद्युत्तरद्वारान्तं हरिं नत्वा बलिं बहिः।
विष्णुपार्षदेभ्यो नमो बलिपीठे बलिं ददेत् ॥ ४८ ॥
विश्वाय विश्वक्सेनात्मने ईशानके यजेत्।
देवस्य दक्षिणे हस्ते रक्षासूत्रञ्च बन्धयेत् ॥ ४९ ॥
संवत्सरकृतार्चायाः सम्पूर्णफलदायिने।
पवित्रारोहणायेदं कौतुकं धारय ओं नमः ॥ ५० ॥
उपवासादिनियमं कुर्य्याद्वै देवसन्निधौ।
उपवासादिनियतो देवं सन्तोषयाम्यहम् ॥ ५१ ॥
कामक्रोधादयः सर्वे मा मे तिष्ठन्तु सर्वथा।
अद्यप्रभृति देवेश यावद्वै शेषिकं दिनम् ॥ ५२ ॥
यजमानो ह्यशक्तश्चेत् कुर्य्यान्नक्तादिकं व्रती।
हुत्वा विसर्जयेत् स्तुत्वा श्रीकरं नित्यपूजनम् ॥
ओं ह्रीं(१) श्रीं श्रीधराय त्रैलोक्यमोहनाय नमः ॥ ५३ ॥

इत्यादिमहापुराणे आग्नेये पवित्रारोहणे श्रीधरनित्यपूजाकथनं नाम त्रयस्त्रिंशोऽध्यायः ॥

## अथ चतुस्त्रिंशोऽध्यायः।

### होमादिविधिः।

अग्निरुवाच। विप्रेन्देनेन मन्त्रेण यागस्थानञ्च भूषयेत्।
नमो ब्रह्मण्यदेवाय श्रीधरायाव्ययात्मने ॥ १ ॥

---

१ ओं ह्रीमिति ख, चिह्नितपुस्तकपाठः।

ऋग्यजुःसामरूपाय शब्ददेहाय विष्णवे ।
विलिख्य मण्डलं सार्थं यागद्रव्यादि चाहरेत् ॥ २ ॥
प्रक्षालितकराङ्घ्रिः सन् विन्यस्यार्घ्यकरो नरः ।
अर्घ्याद्भिस्तु शिरः प्रोक्ष्य द्वारदेशादिकं तथा ॥ ३ ॥
आरभेद् द्वारयागञ्च तोरणेशान् प्रपूजयेत् ।
अश्वत्थोदुम्बरवटप्लक्षाः पूर्वादिगा नगाः ॥ ४ ॥
ऋगिन्द्रशोभनं प्राच्यां यजुर्यमसुभद्रकम् ।
सामापस्य सुधन्वाख्यं सोमाथर्वसुहोत्रकम् ॥ ५ ॥
तोरणान्तः पताकाश्च कुमुदाद्या घटद्वयम् ।
द्वारि द्वारि स्वनामाढ्याः पूर्वे पूर्णश्च पुष्करः ॥ ६ ॥
आनन्दनन्दनौ दक्षे वीरसेनः सुषेणकः ।
सम्भवप्रभवौ सौम्ये द्वारपांश्चैव पूजयेत् ॥ ७ ॥
अस्त्रजप्तपुष्पक्षेपाद्विघ्नानुत्सार्य संविशेत् ।
भूतशुद्धिं विधायाथ विन्यस्य कृतमुद्रकः ॥ ८ ॥
फट्कारान्तां शिखां जप्त्वा सर्षपान् दिक्षु निक्षिपेत् ।
वासुदेवेन गोमूत्रं सङ्कर्षणेन गोमयम् ॥ ९ ॥
प्रद्युम्नेन पयस्तज्जात् दधि नारायणाद् घृतम् ।
एकद्वित्र्यादिवाराणि घृतादि भागतोधिकम् ॥ १० ॥
घृतपात्रे तदेकत्र पञ्चगव्यमुदाहृतम् ।
मण्डपप्रोक्षणायैकञ्चापरम्प्राशनाय च ॥ ११ ॥
आनीय दशकुम्भेषु इन्द्राद्यान् लोकपान् यजेत् ।
पूज्याज्ञां श्रावयेत्तांश्च स्थातव्यं चाज्ञया हरेः ॥ १२ ॥
यागद्रव्यादि संरक्ष्य विकिरान् विकिरेत्ततः ।
मूलाष्टशतसञ्जप्तान् कुशकूर्चान् हरेच्च तान् ॥ १३ ॥
ऐशान्यां दिशि तत्रस्थं स्थाप्य कुम्भञ्च वर्द्धनीं ।

कुम्भे साङ्गं हरिं प्रार्च्य वर्द्धन्यामस्त्रमर्चयेत् ॥ १४ ॥
प्रदक्षिणं यागगृहं वर्द्धन्याच्छिन्नधारया ।
सिञ्चन्नयेत्ततः कुम्भं पूजयेच्च स्थिरासने ॥ १५ ॥
सपञ्चरत्नवस्त्राढ्यकुम्भे गन्धादिभिर्हरिम् ।
वर्द्धन्यां हेमगर्भायां यजेदस्त्रञ्च वामतः ॥ १६ ॥
तत्समीपे वास्तुलक्ष्मीं भूविनायकमर्च्चरेत् ।
स्नपनं कल्पयेद्विष्णोः सङ्क्रान्त्यादौ तथैव च ॥ १७ ॥
पूर्णकुम्भान् नव स्थाप्य नवकोणेषु निर्व्रणान् ।
पाद्यमर्घ्यमाचमनीयं पञ्चगव्यञ्च निःक्षिपेत् ॥ १८ ॥
पूर्वादिकलसेष्वग्रादौ पञ्चामृतजलादिकम् ।
दधि क्षीरं मधूष्णोदं पाद्यं स्याच्चतुरङ्गकम् ॥ १९ ॥
पद्मश्यामाकदूर्वाश्च विष्णुपर्णी च पाद्यकम् ।
तथाष्टाङ्गार्घ्यमाख्यातं यवगन्धफलाक्षतम् ॥ २० ॥
कुशाः सिद्धार्थपुष्पाणि तिला द्रव्याणि चार्हणम्(१) ।
लवङ्गकक्कोलयुतं दद्यादाचमनीयकम् ॥ २१ ॥
स्नापयेन्मूलमन्त्रेण देवं पञ्चामृतैरपि ।
शुद्धोदं मध्यकुम्भेन देवमूर्द्धि विनिःक्षिपेत् ॥ २२ ॥
कलशान्निःसृतं तोयं कूर्चाग्रं(२) संस्पृशन्नरः ।
शुद्धोदकेन पाद्यञ्च अर्घ्यमाचमनन्ददेत् ॥ २३ ॥
परिमृज्य पटेनाङ्गं सवस्त्रं मण्डलं नयेत् ।
तत्राभ्यर्च्याचरेद्धोमं कुण्डादौ प्राणसंयमी ॥ २४ ॥
प्रक्षाल्य हस्तौ रेखाश्च तिस्रः पूर्वाग्रगामिनीः ।

---

१ चार्हणा इति ख, ङ, चिह्नितपुस्तकद्वयपाठः ।
२ दूर्वाग्रमिति ङ, चिह्नितपुस्तकपाठः ।

दक्षिणादुत्तरान्ताश्च तिस्रश्चैवोत्तराग्रगाः॥ २५॥
अर्घ्योदकेन सम्प्रोक्ष्य योनिमुद्राम्प्रदर्शयेत्।
ध्यात्वाग्निरूपञ्चाग्निन्तु योन्यां कुण्डे क्षिपेन्नरः॥ २६॥
पात्राण्यासादयेत् पश्चाद्दर्भशुक्स्रुवकादिभिः।
बाहुमात्राः परिधय इध्मव्रश्चनमेव च॥ २७॥
प्रणीता प्रोक्षणीपात्रमाज्यस्थाली घृतादिकम्।
प्रस्थद्वयं तण्डुलानां युग्मं युग्ममधोमुखम्॥ २८॥
प्रणीताप्रोक्षणीपात्रे न्यसेत् प्रागग्रगं कुशम्।
अद्भिः पूर्य्य प्रणीतान्तु ध्यात्वा देवं प्रपूज्य च॥ २९॥
प्रणीतां स्थापयेदग्रे द्रव्याणाञ्चैव मध्यतः।
प्रोक्षणीमद्भिः सम्पूर्य्य प्रार्च्य दक्षे तु विन्यसेत्॥ ३०॥
चरुञ्च श्रपयेदग्नौ ब्रह्माणं दक्षिणे न्यसेत्।
कुशानास्तीर्य्य पूर्वादौ परिधीन् स्थापयेत्ततः॥ ३१॥
वैष्णवीकरणं कुर्यात् गर्भाधानादिना नरः।
गर्भाधानं पुंसवनं सीमन्तोन्नयनञ्जनिः॥ ३२॥
नामादिसमावर्त्तनान्तं जुहुयादष्ट चाहुतीः।
पूर्णाहुतीः प्रतिकर्म्म स्रुचा स्रुवमुक्तया॥ ३३॥
कुण्डमध्ये ऋतुमतीं लक्ष्मीं सञ्चिन्त्य होमयेत्।
कुण्डलक्ष्मीः समाख्याता प्रकृतिस्त्रिगुणात्मिका॥ ३४॥
सा योनिः सर्वभूतानां विद्यामन्त्रगणस्य च।
विमुक्तेः कारणं वह्निः परमात्मा च मुक्तिदः॥ ३५॥
प्राची शिरः समाख्यातं बाहू कोणे व्यवस्थितौ।
ईशानाग्नेयकोणे तु जङ्घे वायव्यनैर्ऋते॥ ३६॥
उदरं कुण्डमित्युक्तं योनिर्योनिर्विधीयते।
गुणत्रयं मेखलाःस्युर्ध्यायेत् समिधो दश॥ ३७॥

पञ्चाधिकांस्तु जुहुयात् प्रणवान्मुष्टिमुद्रया(१) ।
पुनराघारौ जुहुयाद्वायुमग्न्यं ततः श्रपेत् ॥ ३८ ॥
ईशानं मूलमन्त्रेण आज्यभागौ तु होमयेत् ।
उत्तरे द्वादशान्तेन दक्षिणे तेन मध्यतः ॥ ३९ ॥
व्याहृत्या पद्ममध्यस्थं ध्यायेदग्निन्तु संस्कृतम् ।
वैष्णवं सप्तजिह्वं च सूर्यकोटिसमप्रभम् ॥ ४० ॥
चन्द्रवक्त्रञ्च(२) सूर्याक्षं जुहुयाच्छतमष्ट च ।
तदर्द्धञ्चाष्ट मूलेन अङ्गानाञ्च दशांशतः ॥ ४१ ॥

इत्यादिमहापुराणे आग्नेये अग्निकार्यकथनं नाम
चतुस्त्रिंशोऽध्यायः ॥

## अथ पञ्चत्रिंशोऽध्यायः ।

### पवित्राधिवासनादिविधिः ।

अग्निरुवाच । सम्पाताहुतिनासिच्य (३) पवित्राण्यधिवासयेत् ।
नृसिंहमन्त्रजप्तानि गुप्तान्यस्त्रेण तानि तु ॥ १ ॥
वस्त्रसंवेष्टितान्येव पात्रस्थान्यभिमन्त्रयेत् ।
बिल्वाद्भिः प्रोक्षितानि मन्त्रेण चैकधा द्विधा (४) ॥ २ ॥
कुम्भपार्श्वे तु संस्थाप्य रक्षां विज्ञाप्य देशिकः ।
दन्तकाष्ठञ्चामलकं पूर्वे सङ्कर्षणेन तु ॥ ३ ॥
प्रद्युम्नेन भस्मतिलान् दद्याद् गोमयमृत्तिकां ।

१ स्वस्तिमुद्रयेति ङ, चिह्नितपुस्तकपाठः ।
२ पञ्चवक्त्रञ्चेति ङ, चिह्नितपुस्तकपाठः ।
३ सम्पाताहुतिनाऽभिषिच्येति ङ, चिह्नितपुस्तकपाठः ।
४ मन्त्राणां चैकधा द्विधेति ख चिह्नितपुस्तकपाठः ।

वारुणे चानिरुद्धेन सौम्ये नारायणेन च ॥ ४ ॥
दर्भोदकञ्चाथ हृदा ध्यमौ कुङ्कुमरोचनं।
ऐशान्यां शिरसा धूपं शिखया नैर्ऋतेप्यथ ॥ ५ ॥
मूलपुष्पाणि दिव्यानि कवचेनाथ वायवे।
चन्दनाम्बुक्षतदधिदूर्वाश्च पुटिकास्थिताः ॥ ६ ॥
गृहं त्रिसूत्रेणावेष्ट्य पुनः सिद्धार्थकान् क्षिपेत्।
दद्यात्पूजाक्रमेणाथ स्वैः स्वैर्गन्धपवित्रकं ॥ ७ ॥
मन्त्रैर्वै द्वारपादिभ्यो विष्णुकुम्भे त्वनेन च।
विष्णुतेजोभवं रम्यं सर्वपातकनाशनं ॥ ८ ॥
सर्वकामप्रदं देवं तवाङ्गे धारयाम्यहं।
सम्पूज्य धूपदीपाद्यैर्व्रजेद्द्वारसमीपतः ॥ ९ ॥
गन्धपुष्पाक्षतोपेतं पवित्रञ्चाखिलेर्प्ययेत् (१)।
पवित्रं वैष्णवं तेजो महापातकनाशनं ॥ १० ॥
धर्मकामार्थसिद्ध्यर्थं स्वकेङ्गे धारयाम्यहं।
आसने परिवारादौ गुरौ दद्यात् पवित्रकं ॥ ११ ॥
गन्धादिभिः समभ्यर्च्य गन्धपुष्पाक्षतादिमत्।
विष्णुतेजोभवेत्यादिमूलेन हरयेर्पयेत् ॥ १२ ॥
वह्निस्थाय ततो दत्वा देवं सम्प्रार्थयेत्ततः।
क्षीरोदधिमहानागशय्यावस्थितविग्रह ॥ १३ ॥
प्रातस्त्वां पूजयिष्यामि सन्निधौ भव केशव।
इन्द्रादिभ्यस्ततो दत्वा विष्णुपार्षदके बलिं ॥ १४ ॥
ततो देवाग्रतः कुम्भं वासोयुगसमन्वितं।
रोचनाचन्द्रकाश्मीरगन्धाद्युदकसंयुतं ॥ १५ ॥
गन्धपुष्पादिनाभ्यर्च्य मूलमन्त्रेण पूजयेत्।

१ पवित्रं पार्श्वतो नयेदिति ङ. चिह्नितपुस्तकपाठः।

मण्डपाद्वहिरागत्य विलिप्ते मण्डलत्रये ॥ १६ ॥
पञ्चगव्यञ्चरुन्दन्तकाष्ठञ्चैव क्रमाद्भवेत् ।
पुराणश्रवणं स्तोत्रं पठन् जागरणं निशि ॥ १७ ॥
परप्रेषकबालानां स्त्रीणां भोगभुजां तथा ।
सद्योऽधिवासनं कुर्य्याद्विना गन्धपवित्रकं ॥ १८ ॥

इत्यादिमहापुराणे आग्नेये पवित्राधिवासनं नाम
पञ्चत्रिंशोऽध्यायः ॥

-००*००-

## अथ षट्त्रिंशोऽध्यायः ।

### पवित्रारोपणविधानं ।

अग्निरुवाच । प्रातःस्नानादिकं कृत्वा द्वारपालान् (१) प्रपूज्य च ।
प्रविश्य गुप्ते देशे च समाकृष्याथ धारयेत् ॥ १ ॥
पूर्वाधिवासितं द्रव्यं वस्त्राभरणगन्धकं ।
निरस्य सर्वनिर्म्माल्यं देवं संस्थाप्य पूजयेत् ॥ २ ॥
पञ्चामृतैः कषायैश्च शुद्धगन्धोदकैस्ततः ।
पूर्वाधिवासितं दद्याद्वस्त्रं गन्धं च पुष्पकं ॥ ३ ॥
अग्नौ हुत्वा नित्यवच्च देवं सम्प्रार्थयेन्नमेत् (२) ।
समर्प्य कर्म्म देवाय पूजां नैमित्तिकीं चरेत् ॥ ४ ॥
द्वारपालविष्णुकुम्भवर्द्धनीः प्रार्थयेद्धरिं ।
अतो देवेति मन्त्रेण मूलमन्त्रेण कुम्भके ॥ ५ ॥
कृष्ण कृष्ण नमस्तुभ्यं गृह्णीष्वेदं पवित्रकं ।

१ लोकपालानिति ख, चिह्नितपुस्तकपाठः ।
२ प्रार्थयेन्नमेदिति ग चिह्नितपुस्तकपाठः ।

पवित्रीकरणार्थाय वर्षपूजाफलप्रदं ॥ ६ ॥
पवित्रकं कुरुष्वाद्य यन्मया दुष्कृतं कृतं।
शुद्धो भवाम्यहं देव त्वत्प्रसादात् सुरेश्वर ॥ ७ ॥
पवित्रञ्च हृदाद्यैस्तु आत्मानमभिषिच्य च।
विष्णुकुम्भञ्च सम्प्रोक्ष्य व्रजेद्देवसमीपतः ॥ ८ ॥
पवित्रमात्मने दद्याद्रक्षाबन्धं विसृज्य च (१)।
गृहाण ब्रह्मसूत्रञ्च यन्मया कल्पितं प्रभो ॥ ९ ॥
कर्म्मणां पूरणार्थाय यथा दोषो न मे भवेत्।
द्वारपालासनगुरुमुख्यानाञ्च पवित्रकम् ॥ १० ॥
कनिष्ठादि च देवाय वनमालाञ्च मूलतः।
हृदादिविश्वक्सेनान्ते पवित्राणि समर्पयेत् ॥ ११ ॥
वह्नौ हुत्वाग्निवर्त्तिभ्यो विष्णादिभ्यः पवित्रकम्।
प्रार्च्य पूर्णाहुतिं दद्यात् प्रायश्चित्ताय मूलतः ॥ १२ ॥
अष्टोत्तरशतं वापि पञ्चोपनिषदैस्ततः।
मणिविद्रुममालाभिर्म्मन्दारकुसुमादिभिः ॥ १३ ॥
इयं सांवत्सरी पूजा तवास्तु गरुडध्वज।
वनमाला यथा देव कौस्तुभं सततं हृदि ॥ १४ ॥
तद्वत् पवित्रतन्तूंश्च पूजां च हृदये वह (२)।
कामतोऽकामतो वापि यत्कृतं नियमार्चने ॥ १५ ॥
विधिना विघ्नलोपेन परिपूर्णं तदस्तु मे।
प्रार्थ्य नत्वा क्षमाप्याथ पवित्रं मस्तकेऽर्प्ययेत् ॥ १६ ॥
दत्वा बलिं दक्षिणाभिर्वैष्णवन्तोषयेद्गुरुं।

१ रक्षाबन्धं विमुच्य चेति ख, चिह्नितपुस्तकपाठः। पवित्रं मूलतो दद्याद्रक्षार्थं तद्विसृज्य चेति ङ, चिह्नितपुस्तकपाठः।

२ पवित्रकं त्वञ्च पूजार्थं हृदये वहेति ङ, चिह्नितपुस्तकपाठः।

विप्रान् भोजनवस्त्राद्यैर्द्दिवसं पक्षमेव वा ॥ १७ ॥
पवित्रं स्नानकाले च अवतार्य्य समर्पयेत् ।
अनिवारितमन्नाद्यं दद्याद्भुञ्जीत च स्वयं ॥ १८ ॥
विसर्जनेऽह्नि सम्पूज्य पवित्राणि विसर्ज्जयेत् ।
सांवत्सरीमिमां पूजां सम्पाद्य विधिवन्मम ॥ १९ ॥
व्रज पवित्रकेदानीं विष्णुलोकं विसर्ज्जितः ।
मध्ये सोमेशयोः प्रार्च्य विष्वक्सेनं हि तस्य च ॥ २० ॥
पवित्राणि समभ्यर्च्य ब्राह्मणाय समर्पयेत् ।
यावन्तस्तन्तवस्तस्मिन् पवित्रे परिकल्पिताः ॥ २१ ॥
तावद्युगसहस्राणि विष्णुलोके महीयते ।
कुलानां शतमुद्धृत्य दश पूर्वान् दशापरान् ।
विष्णुलोके तु संस्थाप्य स्वयं मुक्तिमवाप्नुयात् ॥ २२ ॥

इत्यादिमहापुराणे आग्नेये विष्णुपवित्रारोहणं नाम षट्त्रिंशोऽध्यायः ॥

## अथ सप्तत्रिंशोऽध्यायः ।

### सर्वदेवपवित्रारोहणविधिः ।

अग्निरुवाच । सङ्क्षेपात् सर्वदेवानां पवित्रारोहणं(१) शृणु ।
पवित्रं सर्वलक्ष्म स्यात् स्वरसानलगं त्वपि ॥ १ ॥
जगद्योनि समागच्छ परिवारगणैः सह ।
निमन्त्रयाम्यहं प्रातर्द्दद्यान्तुभ्यं पवित्रकं ॥ २ ॥
जगत्सृजे(२) नमस्तुभ्यं गृह्णीष्वेदं पवित्रकं ।

१ पवित्रारोपणमिति ख, चिह्नितपुस्तकपाठः ।
२ जगत्सूते इति ङ, चिह्नितपुस्तकपाठः ।

पवित्रीकरणार्थाय वर्षपूजाफलप्रदं ॥ ३ ॥
शिवदेव नमस्तुभ्यं गृहाणेदं पवित्रकं ।
मणिविद्रुममालाभिर्म्मन्दारकुसुमादिभिः ॥ ४ ॥
इयं सांवत्सरी पूजा तवास्तु वेदवित्पते ।
सांवत्सरीमिमां पूजां सम्पाद्य विधिवन्मम ॥ ५ ॥
व्रज पवित्रकेदानीं स्वर्गलोकं विसर्ज्जितः ।
सूर्य्यदेव नमस्तुभ्यं गृहाणेदं पवित्रकं ॥ ६ ॥
पवित्रीकरणार्थाय वर्षपूजाफलप्रदं ।
शिवदेव नमस्तुभ्यं गृहाणेदं पवित्रकं ॥ ७ ॥
पवित्रीकरणार्थाय वर्षपूजाफलप्रदं ।
गणेश्वर (१) नमस्तुभ्यं गृहाणेदं पवित्रकं ॥ ८ ॥
पवित्रीकरणार्थाय वर्षपूजाफलप्रदं ।
शक्तिदेवि नमस्तुभ्यं गृहाणेदं पवित्रकं ॥ ९ ॥
पवित्रीकरणार्थाय वर्षपूजाफलप्रदं ।
नारायणमयं सूत्रमनिरुद्धमयं वरं (२) ॥ १० ॥
धनधान्यायुरारोग्यप्रदं सम्प्रददामि ते ।
कामदेवमयं सूत्रं सङ्कर्षणमयं वरं ॥ ११ ॥
विद्यासन्ततिसौभाग्यप्रदं सम्प्रददामि ते ।
वासुदेवमयं सूत्रं धर्म्मकामार्थमोक्षदं ॥ १२ ॥
संसारसागरोत्तारकारणं प्रददामि ते ।
विश्वरूपमयं सूत्रं सर्व्वदं पापनाशनं ॥ १३ ॥

१ गणेश्वर इति ग, घ, ङ, चिह्नितपुस्तकत्रयपाठः ।
२ परमिति ङ चिह्नितपुस्तकपाठः ।

अतीतानागतकुलसमुद्धारं ददामि ते ।
कनिष्ठादीनि चत्वारि मनुभिस्तु क्रमाद्दद ॥ १४ ॥

इत्यादिमहापुराणे आग्नेये सङ्क्षेपप्रविस्तारो हणं नाम सप्तत्रिंशोऽध्यायः ॥

## अथ अष्टत्रिंशोऽध्यायः ।

देवालयनिर्म्माणफलं ।

अग्निरुवाच । वासुदेवाद्यालयस्य कृतौ वक्ष्ये फलादिकं ।
चिकीर्षोर्द्देवधामादि सहस्रजनिपापनुत् ॥ १ ॥
मनसा सद्मकर्तॄणां शतजन्माघनाशनं ।
येऽनुमोदन्ति कृष्णस्य क्रियमाणं नरा गृहं (१) ॥ २ ॥
तेऽपि पापैर्व्विनिर्मुक्ताः प्रयान्त्यच्युतलोकतां ।
समतीतं भविष्यञ्च कुलानामयुतं नरः ॥ ३ ॥
विष्णुलोकं नयत्याशु कारयित्वा हरेर्गृहं ।
वसन्ति (२) पितरो दृष्ट्वा (३) विष्णुलोके ह्यलङ्कृताः ॥ ४ ॥
विमुक्ता नारकैर्दुःखैः कर्त्तुः कृष्णस्य मन्दिरं ।
ब्रह्महत्यादिपापौघघातकं देवतालयं ॥ ५ ॥
फलं यन्नाप्यते यज्ञैर्धाम कृत्वा तदाप्यते ।
देवागारे कृते सर्व्वतीर्थस्नानफलं लभेत् ॥ ६ ॥
देवाद्यर्थे हतानाञ्च रणे यत्तत्फलादिकं ।
शाठ्येन पांशुना वापि कृतं धाम च नाकदं ॥ ७ ॥

१ गृहादिकं ग, घ, चिह्नितपुस्तकद्वयपाठः ।

२ नन्दन्ति इति ख, ग, चिह्नितपुस्तकद्वयपाठः । वल्गन्ति इति ङ, चिह्नितपुस्तक पाठः ।

३ हृष्टा इति ख ग, चिह्नितपुस्तकद्वयपाठः ।

एकायतनकृत् स्वर्गी त्र्यगारी ब्रह्मलोकभाक् ।
पञ्चागारी शम्भुलोकमष्टागाराद्धरौ स्थितिः ॥ ८ ॥
षोडशालयकारी तु (१) भुक्तिमुक्तिमवाप्नुयात् ।
कनिष्ठं मध्यमं श्रेष्ठं कारयित्वा हरेर्गृहं ॥ ९ ॥
स्वर्गं च वैष्णवं लोकं मोक्षमाप्नोति च क्रमात् ।
श्रेष्ठमायतनं विष्णोः कृत्वा यद्धनवान् लभेत् ॥ १० ॥
कनिष्ठेनैव तत् पुण्यं प्राप्नोत्यधनवान्नरः ।
समुत्पाद्य धनं कृत्वा स्वल्पेनापि (२)सुरालयं ॥ ११ ॥
कारयित्वा हरेः पुण्यं सम्प्राप्नोत्यधिकं वरं ।
लक्षेणाथ सहस्रेण शतेनार्द्धेन वा हरेः ॥ १२ ॥
कारयन् भवनं याति यत्रास्ते गरुडध्वजः ।
बाल्ये तु क्रीडमाना ये पांसुभिर्भवनं हरेः ॥ १३ ॥
वासुदेवस्य कुर्व्वन्ति तेपि तल्लोकगामिनः ।
तीर्थे चायतने पुण्ये सिद्धक्षेत्रे तथाऽऽश्रमे ॥ १४ ॥
कर्त्तुरायतनं विष्णोर्यथोक्तात्त्रिगुणं फलं ।
बन्धूकपुष्पविन्यासैः सुधापङ्केन वैष्णवं ॥ १५ ॥
ये विलिम्पन्ति भवनं ते यान्ति भगवत्पुरं ।
पतितं पतमानन्तु तथार्द्धपतितं नरः ॥ १६ ॥
समुद्धृत्य हरेर्द्धाम प्राप्नोति द्विगुणं फलं ।
पतितस्य तु यः कर्त्ता पतितस्य च रक्षिता ॥ १७ ॥
विष्णोरायतनस्येह स नरो विष्णुलोकभाक् ।
इष्टकानिचयस्तिष्ठेद् यावदायतने हरेः ॥ १८ ॥
सकुलस्तस्य वै कर्त्ता विष्णुलोके महीयते ।

१ षोडशागारकारी तु इति ग, चिह्नितपुस्तकपाठः ।
२ स्वल्पेनेनेति ख चिह्नितपुस्तकपाठः ।

स एव पुण्यवान् पूज्य इह लोके परत्र च ॥ १९ ॥
कृष्णस्य वासुदेवस्य यः कारयति केतनं।
जातः स एव सुकृती कुलन्तेनैव पावितं ॥ २० ॥
विष्णुरुद्रार्कदेव्यादेर्गृहकर्त्ता स कीर्त्तिभाक्।
किं तस्य वित्तनिचयैर्मूढस्य परिरक्षिणः ॥ २१ ॥
दुःखार्ज्जितैर्यः कृष्णस्य न कारयति केतनं।
नोपभोग्यं धनं यस्य पितृधिप्रदिवौकसां ॥ २२ ॥
नोपभोगाय बन्धूनां व्यर्थस्तस्य धनागमः।
यथा ध्रुवो नृणां मृत्युर्वित्तनाशस्तथा ध्रुवः ॥ २३ ॥
मूढस्तत्राऽनुबध्नाति जीविते च चले धने।
यदा वित्तं न दानाय नोपभोगाय देहिनां ॥ २४ ॥
नापि कीर्त्यै न धर्म्मार्थं तस्य स्वाम्येथ को गुणः।
तस्माद्वित्तं समासाद्य दैवाद्वा पौरुषादथ ॥ २५ ॥
दद्यात् सम्यग् द्विजाग्र्येभ्यः कीर्त्तनानि च कारयेत्।
दानेभ्यश्चाधिकं यस्मात् कीर्त्तनेभ्यो वरं यतः ॥ २६ ॥
अत स्तत्कारयेद्धीमान् विष्ण्वादेर्मन्दिरादिकं।
विनिवेश्य हरेर्धाम भक्तिमद्भिर्नरोत्तमैः ॥ २७ ॥
निवेशितं भवेत् कृत्स्नं त्रैलोक्यं सचराचरं।
भूतं भव्यं भविष्यच्च स्थूलं सूक्ष्मं तथेतरत् (१) ॥ २८ ॥
आब्रह्मस्तम्बपर्य्यन्तं सर्व्वं विष्णोः समुद्भवं।
तस्य देवादिदेवस्य सर्वगस्य (२) महात्मनः ॥ २९ ॥
निवेश्य भवनं विष्णोर्न्न भूयो भुवि जायते।
यथा विष्णोर्द्धामकृतौ फलं तद्वद्दिवौकसां ॥ ३० ॥

१ तथैव च इति ग, चिह्नितपुस्तकपाठः।
२ सर्व्वशस्य इति ख, चिह्नितपुस्तकपाठः।

शिवब्रह्मार्कविघ्नेशचण्डीलक्ष्म्यादिकात्मनां ।
देवालयकृतेः पुण्यं प्रतिमाकरणेऽधिकं (३) ॥ ३१ ॥
प्रतिमास्थापने यागे फलस्यान्तो न विद्यते ।
मृण्मयाद्दारुजे पुण्यं दारुजादिष्टकाभवे ॥ ३२ ॥
इष्टकोत्थाच्छैलजे स्याद्धेमादेरधिकं फलं ।
सप्तजन्मकृतं पापं पारम्भादेव नश्यति ॥ ३३ ॥
देवालयस्य स्वर्गी स्यान्नरकं न स गच्छति ।
कुलानां शतमुद्धृत्य विष्णुलोकं नयेन्नरः ॥ ३४ ॥
यमो यमभटानाह देवमन्दिरकारिणः ।
यम उवाच । प्रतिमापूजादिकृतो नानेया नरकं नराः ॥ ३५ ॥
देवालयाद्यकर्त्तार आनेयास्ते तु गोचरे (१) ।
विचरध्वं यथान्यायन्नियोगो मम पाल्यतां (२) ॥ ३६ ॥
नाज्ञाभङ्गं करिष्यन्ति भवतां जन्तवः क्वचित् ।
केवलं ये जगत्तातमनन्तं समुपाश्रिताः ॥ ३७ ॥
भवद्भिः परिहर्त्तव्यास्तेषां नात्रास्ति संस्थितिः ।
ये च भागवता लोके तच्चित्तास्तत्परायणाः ॥ ३८ ॥
पूजयन्ति सदा विष्णुं ते वस्त्याज्याः सुदूरतः ।
यस्तिष्ठन् प्रस्वपन् गच्छन्नुत्तिष्ठन् स्खलिते स्थिते (४) ॥ ३९ ॥
सङ्कीर्त्तयन्ति गोविन्दं ते वस्त्याज्याः सुदूरतः ।
नित्यनैमित्तिकैर्देवं ये यजन्ति जनार्द्दनम् ॥ ४० ॥
नावलोक्या भवद्भिस्ते तद्गता यान्ति तद्गतिम् ।

---

१ आनेयास्त्वविशेषत इति ग. चिह्नितपुस्तकपाठः ।
२ नियमो मेऽनुपाल्यतामिति ख चिह्नितपुस्तकपाठः ।
३ जन्तवः क्वाचिदिति ख चिह्नितपुस्तकपाठः ।

ये पुष्पधूपवासोभिर्भूषणैश्चातिवल्लभैः ॥ ४१ ॥
अर्चयन्ति न ते ग्राह्या नराः कृष्णालये गताः (१) ।
उपलेपनकर्त्तारः सम्मार्जनपराश्च ये ॥ ४२ ॥
कृष्णालये परित्याज्यास्तेषां पुत्रास्तथा कुलम् ।
येन चायतनं विष्णोः कारितं तत्कुलोद्भवम् ॥ ४३ ॥
पुंसां शतं नावलोक्यं भवद्भिर्दुष्टचेतसा ।
यस्तु देवालयं विष्णोर्दारुशैलमयं तथा ॥ ४४ ॥
कारयेन्मृण्मयं वापि सर्वपापैः प्रमुच्यते ।
अहन्यहनि यज्ञेन यजतो यन्महाफलम् ॥ ४५ ॥
प्राप्नोति तत् फलं विष्णोर्यः कारयति केतनं ।
कुलानां शतमागामि समतीतं तथा शतं ॥ ४६ ॥
कारयन् भगवद्धाम नयत्यच्युतलोकतां ।
सप्तलोकमयो विष्णुस्तस्य यः कुरुते गृहं ॥ ४७ ॥
तारयत्यक्षयांल्लोकानक्षयान् प्रतिपद्यते ।
इष्टकाचयविन्यासो यावन्त्यब्दानि तिष्ठति ॥ ४८ ॥
तावद्वर्षसहस्राणि तत्कर्त्तुर्दिवि संस्थितिः ।
प्रतिमाकृद्विष्णुलोकं स्थापको लीयते हरौ ।
देवसद्मप्रतिकृतिप्रतिष्ठाकृत्तु गोचरे ॥ ४९ ॥
अग्निरुवाच । यमोक्ता नानयंस्तेथ प्रतिष्ठादिकृतं हरेः ।
हयग्रीवः प्रतिष्ठार्थं (२) देवानां ब्रह्मणेऽब्रवीत् ॥ ५० ॥

इत्यादिमहापुराणे आग्नेये देवालयादिमाहात्म्यवर्णनं नाम अष्टत्रिंशोऽध्यायः ॥

—०()०—

१ कृष्णाश्रये गता इति ख, घ, ङ, चिह्नितपुस्तकत्रयपाठः ।
२ प्रतिष्ठायमिति ख ङ, चिह्नितपुस्तकद्वयपाठः ।

# अथोनचत्वारिंशोऽध्यायः ।

## भूपरिग्रहविधानं ।

हयग्रीव उवाच । विष्ण्वादीनां प्रतिष्ठादि वक्ष्ये ब्रह्मन् शृणुष्व मे ।
प्रोक्तानि पञ्चरात्राणि सप्तरात्राणि वै मया ॥ १ ॥
व्यस्तानि मुनिभिर्लोके पञ्चविंशतिसङ्ख्यया ।
हयशीर्षं तन्त्रमाद्यं तन्त्रं त्रैलोक्यमोहनं ॥ २ ॥
वैभवं पौष्करं तन्त्रं प्रह्लादङ्गार्ग्यगालवं ।
नारदीयञ्च सम्प्रश्नं शाण्डिल्यं वैश्वकं (१) तथा ॥ ३ ॥
सत्योक्तं शौनकं तन्त्रं वासिष्ठं ज्ञानसागरं ।
स्वायम्भुवं कापिलञ्च तार्क्ष्यं नारायणीयकं ॥ ४ ॥
आत्रेयं नारसिंहाख्यमानन्दाख्यं तथारुणं ।
बौधायनं तथार्षं तु (२) विश्वोक्तं तस्य सारतः ॥ ५ ॥
प्रतिष्ठां हि द्विजः कुर्य्यान्मध्यदेशादिसम्भवः ।
नकच्छदेशसम्भूतः कावेरीकोङ्कणोद्भवः ॥ ६ ॥
कामरूपकलिङ्गोत्थः काञ्चीकाश्मीरकोशलः (३) ।
आकाशवायुतेजोम्बुभूरेताः पञ्चरात्रयः ॥ ७ ॥
अचैतन्यास्तमोद्रिक्ताः पञ्चरात्रविवर्जितं ।
ब्रह्माहं विष्णुरमल इति विद्यात्स देशिकः ॥ ८ ॥
सर्व्वलक्षणहीनोपि स गुरुस्तन्त्रपारगः ।

१ चैश्वरं तथेति ग, ङ, घ, चिह्नितपुस्तकत्रयपाठः ।
२ तथाष्टाङ्गमिति ख ङ, चिह्नितपुस्तकद्वयपाठः ।
३ काश्मीरके स्थित इति ग, चिह्नितपुस्तकपाठः ।

नगराभिमुखाः स्थाप्या देवा न च पराङ्मुखाः ॥ ९ ॥
कुरुक्षेत्रे गयादौ च नदीनान्तु (१) समीपतः।
ब्रह्मा मध्ये तु नगरे पूर्वे शक्रस्य शोभनं ॥ १० ॥
अग्नावग्नेश्च मातॄणां भूतानाञ्च यमस्य च ।
दक्षिणे चण्डिकायाश्च पितृदैत्यादिकस्य च ॥ ११ ॥
नैर्ऋते मन्दिरं कुर्यात् वरुणादेश्च वारुणे।
वायोर्नागस्य वायव्ये सौम्ये यक्षगुहस्य च ॥ १२ ॥
चण्डीशस्य महेशस्य ऐशे विष्णोश्च सर्वशः ।
पूर्वदेवकुलं पीड्य प्रासादं स्वल्पकं त्वथ ॥ १३ ॥
समं वाप्यधिकं वापि न कर्त्तव्यं विजानता ।
उभयोर्द्विगुणां सीमां त्यक्त्वा चोच्छ्रयसम्मितां ॥ १४ ॥
प्रासादं कारयेदन्यं नोभयं पीड़येद् बुधः।
भूमौ तु शोधितायां तु कुर्याद्भूमिपरिग्रहं ॥ १५ ॥
प्राकारसीमापर्य्यन्तं ततो भूतबलिं हरेत् ।
माषं हरिद्राचूर्णन्तु सलाजं दधिसक्तुभिः ॥ १६ ॥
अष्टाक्षरेण सक्तूंश्च पातयित्वाष्टदिक्षु च ।
राक्षसाश्च पिशाचाश्च येऽस्मिंस्तिष्ठन्ति भूतले ॥ १७ ॥
सर्व्वे ते व्यपगच्छन्तु स्थानं कुर्य्यामहं हरेः ।
हलेन वाहयित्वा गां गोभिश्चैवावदारयेत् ॥ १८ ॥
परमाण्वष्टकेनैव रथरेणुः प्रकीर्त्तितः ।
रथरेण्वष्टकेनैव त्रसरेणुः प्रकीर्त्यते ॥ १९ ॥
तैरष्टभिस्तु बालाग्रं लिख्या तैरष्टभिर्मता ।
ताभिर्यूकाष्टभिः ख्याता ताश्चाष्टौ यवमध्यमः ॥ २० ॥

---

१ नद्यद्रिषु इति ख, ग, ङ, चिह्नितपुस्तकत्रयपाठः।

यवाष्टकैरङ्गुलं स्याच्चतुर्विंशाङ्गुलः करः।
चतुरङ्गुलसंयुक्तः स हस्तः (१) पद्महस्तकः॥ २१॥

इत्यादिमहापुराणे आग्नेये प्रतिष्ठायां भूपरिग्रहो नामोनचत्वारिंशोऽध्यायः॥

---

## अथ चत्वारिंशोऽध्यायः।

### अर्घ्यदानविधानं।

भगवानुवाच। पूर्व्वमासीत् महद्भूतं सर्व्वभूतभयङ्करं।
तद्देवैर्न्निहितं भूमौ स वास्तुपुरुषः स्मृतः॥ १॥
चतुःषष्टिपदे क्षेत्रे ईशं कोणार्द्धसंस्थितं।
घृताक्षतैस्तर्पयेत्तं पर्ज्जन्यं पदगं ततः॥ २॥
उत्पलाद्भिर्जयन्तञ्च द्विपदस्थं पताकया।
महेन्द्रञ्चैककोष्ठस्थं सर्व्वरक्तैः पदे रविं॥ ३॥
वितानेनार्द्धपदगं सत्यं पदे भृशं घृतैः।
व्योम शाकुनमांसेन (२) कोणार्द्धपदसंस्थितं॥ ४॥
स्रुचा चार्द्धपदे वह्निं पूषाणं लाजयैकतः।
स्वर्णेन वितथं द्विष्ठं मथनेन गृहाक्षतं॥ ५॥
मांसौदनेन धर्म्मेशमेकैकस्मिन् स्थितं द्वयं।
गन्धर्व्वं द्विपदं गन्धैर्भृशं शाकुनजिह्वया॥ ६॥
एकस्थमूर्द्धसंस्थञ्च मृगं नीलपटैस्तथा।
पितॄन् कृशरयार्द्धस्थं दन्तकाष्ठैः पदस्थितं॥ ७॥

१ नृहस्त इति ख, चिह्नितपुस्तकपाठः।
२ व्योम शाकुलमांसेनेति ख, चिह्नितपुस्तकपाठः।

दौवारिकं दिसंस्थञ्च सुग्रीवं यावकेन तु ।
पुष्पदन्तं कुशस्तम्बैः पद्मैर्व्वरुणमेकतः ॥ ८ ॥
असुरं सुरया दिष्ठं पदे शेषं घृताम्भसा ।
यवैः पापं पदार्द्धस्थं रोगमर्द्धं च मण्डकैः ॥ ९ ॥
नागपुष्पैः पदे नागं मुख्यं भक्ष्यैर्द्विसंस्थितं ।
मुद्गौदनेन भल्लाटं पदे सोमं पदे तथा ॥ १० ॥
मधुना पायसेनाथ शालूकेन ऋषिं दये ।
पदे दितिं लोपिकाभिरर्द्धे दितिमथापरं ॥ ११ ॥
पूरिकाभिस्ततश्चापमीशाधः पयसा पदे ।
ततोधश्चापवत्सन्तु दध्ना चैकपदे स्थितं ॥ १२ ॥
लड्डुकैश्च मरीचिन्तु पूर्वकोष्ठचतुष्टये (१) ।
सवित्रे रक्तपुष्पाणि ब्रह्माधःकोणकोष्ठके ॥ १३ ॥
तदधःकोष्ठके दद्यात् सावित्र्ये च कुशोदकं ।
विवस्वतेऽरुणं दद्याच्चन्दनञ्चतुरङ्घिषु ॥ १४ ॥
रक्षोधःकोणकोष्ठे तु इन्द्रायान्नं निशान्वितं ।
इन्द्रजयाय तस्याधो घृतान्नं कोणकोष्ठके ॥ १५ ॥
चतुष्पदेषु दातव्यमिन्द्राय गुडपायसं ।
वायुधःकोणदेशे तु रुद्राय पक्कमांसकं ॥ १६ ॥
तदधःकोणकोष्ठे तु यक्षायार्द्रं फलन्तथा ।
महीधराय मांसान्नं माषञ्च चतुरङ्घ्रिषु ॥ १७ ॥
मध्ये चतुष्पदे स्थाप्या ब्रह्मणे तिलतण्डुलाः ।
चरकीं माषसर्पिर्भ्यां स्कन्दं कृशरयासृजा ॥ १८ ॥
रक्तपद्मैर्विदारीञ्च कन्दर्पञ्च पलोदनैः ।
पूतनां पलपित्ताभ्यां मांसासृग्भ्याञ्च जम्भकं ॥ १९ ॥

१ मध्यचतुष्टये इति ख, चिह्नितपुस्तकपाठः ।

पित्तासृगस्थिभिः पापां पिलिपिञ्जं (१) खजासृजा ।
ईशाद्यान् रक्तमांसेन अभावादक्षतैर्यजेत् ॥ २० ॥
रक्षोमातृगणेभ्यश्च पिशाचादिभ्य एव च ।
पितृभ्यः क्षेत्रपालेभ्यो बलीन् दद्यात् प्रकामतः ॥ २१ ॥
अकृत्वैतानसन्तर्प्य प्रासादादीन्न कारयेत् ।
ब्रह्मस्थाने हरिं लक्ष्मीं गणं पश्चात् समर्चयेत् ॥ २२ ॥
महेश्वरं वास्तुमयं (२) वर्द्धन्या सहितं घटं ।
ब्रह्माणं मध्यतः कुम्भे ब्रह्मादींश्च दिगीश्वरान् ॥ २३ ॥
दद्यात् पूर्णाहुतिं पश्चात् स्वस्ति वाच्य प्रणम्य च ।
प्रगृह्य कर्करीं सम्यक् मण्डलन्तु प्रदक्षिणं ॥ २४ ॥
सूत्रमार्गेण हे ब्रह्मंस्तोयधाराञ्च भ्रामयेत् ।
पूर्व्ववर्त्तेन मार्गेण सप्त वीजानि वापयेत् ॥ २५ ॥
प्रारम्भं तेन मार्गेण तस्य खातस्य कारयेत् ।
ततो गर्त्तं खनेन्मध्ये हस्तमात्रं प्रमाणतः ॥ २६ ॥
चतुरङ्गुलकं चाधश्चोपलिप्यार्च्चयेत्ततः ।
ध्यात्वा चतुर्भुजं विष्णुमर्घ्यं दद्यात्तु कुम्भतः ॥ २७ ॥
कर्कर्या पूरयेत् श्वभ्रं शुक्लपुष्पाणि च न्यसेत् ।
दक्षिणावर्त्तकं श्रेष्ठं वीजैर्मृद्भिश्च पूरयेत् ॥ २८ ॥
अर्घ्यदानं विनिष्पाद्य गोवस्त्रादीन्ददेद्गुरौ ।
कालज्ञाय स्थपतये वैष्णवादिभ्य अर्च्चयेत् ॥ २९ ॥
ततस्तु खानयेद्यत्नाज्जलान्तं यावदेव तु ।
पुरुषाधःस्थितं शल्यं (३) न गृहे दोषदं भवेत् । ३० ॥

---

१ पिलिपिच्छमिति ङ. चिह्नितपुस्तकपाठः ।

२ महीधरं वास्तुमयमिति ख ङ. चिह्नितपुस्तकपाठः ।

३ पुरुषाधिष्ठित शल्यमिति ग चिह्नितपुस्तकपाठः ।

अस्थिशल्ये भिद्यते वै भित्तिर्वै गृहिणोऽसुखं।
यन्नामशब्दं शृणुयात्तत्र शल्यं तदुद्भवं ॥ ३१ ॥

इत्यादिमहापुराणे आग्नेये अर्घ्यदानकथनं नाम
चत्वारिंशोऽध्यायः ॥ ४० ॥

## अथैकचत्वारिंशोऽध्यायः।

### शिलाविन्यासविधानं।

भगवानुवाच। पादप्रतिष्ठां वक्ष्यामि शिलाविन्यासलक्षणं।
अग्रतो मण्डपः कार्य्यः कुण्डानान्तु चतुष्टयं ॥ १ ॥
कुम्भन्यासेष्टकान्यासो द्वारस्तम्भोच्छ्रयं शुभं।
पादोनं पूरयेत् खातं तत्र वास्तुं यजेत् समे ॥ २ ॥
इष्टकास्तु सुपक्वाः स्युर्द्वादशाङ्गुलसम्मिताः।
सुविस्तारत्रिभागेन वैपुल्येन (१) समन्विताः ॥ ३ ॥
करप्रमाणा श्रेष्ठा स्याच्छिलाप्यथ शिलामये (२)।
नव कुम्भांस्ताम्रमयान् स्थापयेदिष्टकाघटान् ॥ ४ ॥
अद्भिः पञ्चकषायेण सर्व्वौषधिजलेन च।
गन्धतोयेन च तथा कुम्भैस्तोयसुपूरितैः ॥ ५ ॥
हिरण्यव्रीहिसंयुक्तैर्गन्धचन्दनचर्चितैः।
आपो हि ष्ठेति तिसृभिः शन्नो देवीति चाप्यथ ॥ ६ ॥
तरत् समन्दीरिति च (३) पावमानीभिरेव च।
उदुत्तमं वरुणमिति कयानश्च तथैव च ॥ ७ ॥

---

१ सुविस्तारं विभागेन नैपुण्येनेति ख, चिह्नितपुस्तकपाठः।

२ शिला स्यान्न शिलामये इति ग, चिह्नितपुस्तकपाठः।

३ भवतमसन्दीरितीति ख, ग, ङ, चिह्नितपुस्तकत्रयपाठः।

वरुणस्येति मन्त्रेण हंसः शुचिषदित्यपि ।
श्रीसूक्तेन च तथा शिलाः संस्थाप्य संघटाः (१) ॥ ८ ॥
शय्यायां मण्डपे प्राच्यां मण्डले हरिमर्चयेत् ।
जुहुयाज्जनयित्वाग्निं समिधो द्वादशीस्ततः ॥ ९ ॥
आघारावाज्यभागौ तु प्रणवेनैव कारयेत् ।
अष्टाहुतीस्तथाष्टान्तैराज्यं (२) व्याहृतिभिः क्रमात् ॥ १० ॥
लोकेशानामग्नये वै सोमायावग्रहेषु च (३) ।
पुरुषोत्तमायेति च व्याहृतीर्जुहुयात्ततः ॥ ११ ॥
प्रायश्चित्तं ततः पूर्णां मूर्त्तिमांसघृतांस्तिलान् ।
वेदाद्यैर्द्वादशान्तेन (४) कुम्भेषु च पृथक् पृथक् ॥ १२ ॥
प्राङ्मुखस्तु गुरुः कुर्य्यादष्टदिक्षु विलिप्य च ।
मध्ये चैकां शिलां कुम्भं न्यसेदेतान् सुरान् क्रमात् ॥ १३ ॥
पद्मं चैव महापद्मं मकरं कच्छपं तथा ।
कुमुदञ्च तथा नन्दं पद्मं शङ्खञ्च पद्मिनीं ॥ १४ ॥
कुम्भान्न चालयेत्तेषु न्यसेदष्टेष्टकाः क्रमात् ।
ईशानान्ताश्च पूर्व्वादाविष्टकां प्रथमं न्यसेत् ॥ १५ ॥
शक्तयो विमलाद्यास्तु इष्टकानान्तु देवताः ।
न्यसनीया यथा योगं मध्ये न्यस्या त्वनुग्रहा ॥ १६ ॥
अव्यङ्गे चाक्षते पूर्णे मुनेरङ्गिरसः सुते ।
इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहं ॥ १७ ॥
मन्त्रेणानेन विन्यस्य इष्टका देशिकोत्तमः ।

१ सयुता इति ङ, चिह्नितपुस्तकपाठः ।
२ अष्टाहुतीस्तथा पूर्णेराज्यमिति ग, घ, ङ, चिह्नितपुस्तकत्रयपाठः ।
३ सोमाय च यहाय चेति ङ, चिह्नितपुस्तकपाठः ।
४ द्वादशार्णेन इति ख चिह्नितपुस्तकपाठः ।

गर्भाधानं ततः कुर्य्यान्मध्यस्थाने समाहितः ॥ १८ ॥
कुम्भोपरिष्टाद्वेश्मं पद्मिनीं न्यस्य देवतां ।
मृत्तिकाश्चैव पुष्पाणि धातवो रत्नमेव च (१) ॥ १९ ॥
लौहानि दिक्पतेरस्त्रं यजेद्वै गर्भभाजने ।
द्वादशाङ्गुलविस्तारे चतुरङ्गुलकोच्छ्रये ॥ २० ॥
पद्माकारे ताम्रमये भाजने पृथिवीं यजेत् ।
एकान्ते सर्वभूतेशे पर्वतासनमण्डिते ॥ २१ ॥
समुद्रपरिवारे त्वं देवि गर्भं समाश्रय ।
नन्दे नन्दय वासिष्ठे वसुभिः प्रजया (२) सह ॥ २२ ॥
जये भार्गवदायादे प्रजानां विजयावहे ।
पूर्णाङ्गिरसदायादे पूर्णकामं कुरुष्व मां ॥ २३ ॥
भद्रे काश्यपदायादे कुरु भद्रां मतिं मम ।
सर्ववीजसमायुक्ते सर्वरत्नौषधीवृते ॥ २४ ॥
जये सुरुचिरे नन्दे वासिष्ठे रम्यतामिह ।
प्रजापतिसुते देवि चतुरस्रे महीयसि ॥ २५ ॥
सुभगे सुप्रभे भद्रे गृहे काश्यपि रम्यतां ।
पूजिते परमाचार्य्यै गन्धमाल्यैरलङ्कृते ॥ २६ ॥
भवभूतिकरी देवि गृहे भार्गवि रम्यतां ।
देशस्वामिपुरस्वामिगृहस्वामिपरिग्रहे ॥ २७ ॥
मनुष्यादिकतुष्ट्यर्थं पशुवृद्धिकरी भव ।
एवमुक्त्वा ततः खातं गोमूत्रेण तु सेचयेत् ॥ २८ ॥
कृत्वा निधापयेद्गर्भं गर्भाधानं भवेन्निशि ।
गोवस्त्रादि प्रदद्याच्च गुरवेऽन्येषु भोजनं ॥ २९ ॥

१ रत्नमेव चेति ग, घ, ङ, चिह्नितपुस्तकत्रयपाठः ।
२ प्रियथेति ग, चिह्नितपुस्तकपाठः ।

गर्भं न्यसेदृका न्यस्य ततो गर्भं प्रपूरयेत् ।
पीठबन्धमतः कुर्य्यान्मितप्रासादमानतः (१) ॥ ३० ॥
पीठोत्तमञ्चोच्छ्रयेण प्रासादस्यार्द्धविस्तरात् ।
पादहीनं मध्यमं स्यात् कनिष्ठं चोत्तमार्द्धतः ॥ ३१ ॥
पीठबन्धोपरिष्टात्तु वास्तुयागं पुनर्यजेत् ।
पादप्रतिष्ठाकारी तु निष्पापो दिवि मोदते ॥ ३२ ॥
देवागारं करोमीति मनसा यस्तु चिन्तयेत् ।
तस्य कायगतं पापं तदह्ना हि प्रणश्यति ॥ ३३ ॥
कृते तु किं पुनस्तस्य प्रासादे विधिनैव तु ।
अष्टेष्टकसमायुक्तं यः कुर्य्याद्देवतालयं ॥ ३४ ॥
न तस्य फलसम्पत्तिर्वक्तुं शक्येत केनचित् ।
अनेनैवानुमेयं हि फलं प्रासादविस्तरात् ॥ ३५ ॥
ग्राममध्ये च पूर्वे च प्रत्यग्द्वारं प्रकल्पयेत् ।
विदिशासु च सर्वासु ग्रामे प्रत्यङ्मुखो भवेत् ।
दक्षिणे चोत्तरे चैव पश्चिमे प्राङ्मुखो भवेत् ॥ ३६ ॥

इत्यादिमहापुराणे आग्नेये पातालयोगकथनं नाम एकचत्वारिंशोऽध्यायः ॥

## अथ द्विचत्वारिंशोऽध्यायः ।

### प्रासादलक्षणकथनं ।

हयग्रीव उवाच । प्रासादं सम्प्रवक्ष्यामि सर्वसाधारणं शृणु ।
चतुरस्रीकृतं क्षेत्रं भजेत् षोडशधा बुधः ॥ १ ॥
मध्ये तस्य चतुर्भिस्तु कुर्य्यादायसमन्वितं ।

१ समप्रासादमानत इति ङ, चिह्नितपुस्तकपाठः ।

द्वादशैव तु भागानि भित्त्यर्थं परिकल्पयेत् ॥ २ ॥
जङ्घोच्छायन्तु कर्त्तव्यं चतुर्भागेण चायतं (१)।
जङ्घायां द्विगुणोच्छायं मञ्जर्य्याः कल्पयेद् बुधः ॥ ३ ॥
तुर्य्यभागेन मञ्जर्य्याः कार्य्यः सम्यक् प्रदक्षिणः (२)।
तन्मानर्निगमं कार्य्यमुभयोः पार्श्वयोः समं ॥ ४ ॥
शिखरेण समं कार्य्यमग्रे जगति विस्तरं।
द्विगुणेनापि कर्त्तव्यं यथाशोभानुरूपतः ॥ ५ ॥
विस्तारान्मण्डपस्याग्रे गर्भसूत्रद्वयेन तु।
दैर्घ्यात्पादाधिकं कुर्य्यान्मध्यस्तम्भैर्विभूषितं ॥ ६ ॥
प्रासादगर्भमानं वा कुर्व्वीत मुखमण्डपं।
एकाशीतिपदैर्व्वास्तुं पश्चात् मण्डपमारभेत् ॥ ७ ॥
शुक्रान् प्राग्द्वारविन्यासे पादान्तःस्थान् यजेत् सुरान्।
तथा प्राकारविन्यासे यजेद् द्वात्रिंशदन्तगान् (३) ॥ ८ ॥
सर्व्वसाधारणं चैतत् प्रासादस्य च लक्षणं।
मानेन प्रतिमाया वा प्रासादमपरं शृणु ॥ ९ ॥
प्रतिमायाः प्रमाणेन कर्त्तव्या पिण्डिका शुभा।
गर्भस्तु पिण्डिकार्द्धेन गर्भमानास्तु भित्तयः ॥ १० ॥
भित्तेरायाममानेन उत्सेधन्तु प्रकल्पयेत्।
भित्त्युच्छ्रायात्तु द्विगुणं शिखरं कल्पयेद् बुधः ॥ ११ ॥
शिखरस्य तु तुर्य्येण भ्रमणं परिकल्पयेत्।
शिखरस्य चतुर्थेन अग्रतो मुखमण्डपं ॥ १२ ॥

१ चतुर्भागेण वा युतामिति ख, चिह्नितपुस्तकपाठः। चतुर्भागेण संयुतमिति ग, चिह्नितपुस्तकपाठः।

२ सम्यक् कुर्य्यात् प्रदक्षिणमिति ख, चिह्नितपुस्तकपाठः।

३ द्वात्रिंशदन्तरे इति ख, चिह्नितपुस्तकपाठः।

अष्टमांसेन गर्भस्य रथकानान्तु निर्गमः ।
परिधेर्गुणभागेन रथकांस्तत्र कल्पयेत् ॥ १३ ॥
तत्तृतीयेण (४) वा कुर्य्याद्रथकानान्तु निर्गमं ।
वामत्रयं स्थापनीयं रथकत्रितये सदा ॥ १४ ॥
शिखरार्थं हि सूत्राणि चत्वारि विनिपातयेत् ।
शुकनाशोर्द्ध्वतः सूत्रं तिर्य्यग्भूतं निपातयेत् ॥ १५ ॥
शिखरस्यार्द्धभागस्थं सिंहं तत्र तु कारयेत् ।
शुकनासां स्थिरीकृत्य मध्यसन्धौ निधापयेत् ॥ १६ ॥
अपरे च तथा पार्श्वे तद्वत् सूत्रं निधापयेत् ।
तदूर्द्ध्वन्तु भवेद्वेदी सकण्ठा मनसारकं ॥ १७ ॥
स्कन्धभग्नं न कर्त्तव्यं विकरालं तथैव च ।
ऊर्द्ध्वं च वेदिकामानात् कलशं परिकल्पयेत् ॥ १८ ॥
विस्ताराद्द्विगुणं द्वारं कर्त्तव्यं तु सुशोभनं ।
उदुम्बरौ तदूर्द्ध्वञ्च न्यसेच्छाखां सुमङ्गलैः ॥ १९ ॥
द्वारस्य तु चतुर्थांशे कार्य्यौ चण्डप्रचण्डकौ ।
विश्वक्सेनवत्सदण्डौ शिखोर्द्ध्वोडुम्बरे श्रियं ॥ २० ॥
दिग्गजैः स्नाप्यमानान्तां घटैः साब्जां सुरूपिकां ।
प्रासादस्य चतुर्थांशैः प्राकारस्योच्छ्रयो भवेत् ॥ २१ ॥
प्रासादात् पादहीनस्तु गोपुरस्योच्छ्रयो भवेत् ।
पञ्चहस्तस्य देवस्य एकहस्ता तु पीठिका ॥ २२ ॥
गारुडं मण्डपश्चाग्रे एकं भौमादिधाम च ।
कुर्य्याद्धि प्रतिमायान्तु दिक्षु चाष्टासु चोपरि ॥ २३ ॥
पूर्वे वराहं दक्षे च नृसिंहं श्रीधरं जले ।
उत्तरे तु हयग्रीवमाग्नेय्यां जामदग्न्यकं ॥ २४ ॥

४ तत्तुरीयेणेति ख, चिह्नितपुस्तकपाठः ।

नैर्ऋत्यां रामकं वायौ वामनं वासुदेवकं ।
ईशे प्रासादरचना देया वज्रकर्कादिभिः ।
द्वारस्य चाष्टमाद्यंशं त्यक्त्वा वेधो न दोषभाक् ॥ २५ ॥

इत्यादिमहापुराणे आग्नेये प्रासादलक्षणं नाम
द्वाचत्वारिंशोऽध्यायः ।

---

## अथ त्रिचत्वारिंशोऽध्यायः ।

### प्रासाददेवतास्थापनं ।

भगवानुवाच । प्रासादे देवताः स्थाप्या वच्मे ब्रह्मन् शृणुष्व मे ।
पञ्चायतनमध्ये तु वासुदेवं निवेशयेत् ॥ १ ॥
वामनं नृहरिञ्चाश्वशीर्षं तद्वच्च शूकरं ।
आग्नेये नैर्ऋते चैव वायव्ये चेशगोचरे ॥ २ ॥
अथ नारायणं मध्ये आग्नेय्यामम्बिकां न्यसेत् ।
नैर्ऋत्यां भास्करं वायौ ब्रह्माणं लिङ्गमीशके ॥ ३ ॥
अथवा रुद्ररूपन्तु अथवा नवधामसु ।
वासुदेवं न्यसेन्मध्ये पूर्वादौ वामवामकान् ॥ ४ ॥
इन्द्रादीन् लोकपालांश्च अथवा नवधामसु ।
पञ्चायतनकं कुर्य्यात् मध्ये तु पुरुषोत्तमं ॥ ५ ॥
लक्ष्मीवैश्रवणौ पूर्वं दक्षे मातृगणं न्यसेत् ।
स्कन्दं गणेशमीशानं सूर्य्यादीन् पश्चिमे ग्रहान् ॥ ६ ॥
उत्तरे दश मत्स्यादीनाग्नेय्यां चण्डिकां तथा ।
नैर्ऋत्यामम्बिकां स्थाप्य वायव्ये तु सरस्वतीं ॥ ७ ॥
पद्मामैशे वासुदेवं मध्ये नारायणञ्च वा ।
अथोदशालये मध्ये विश्वरूपं न्यसेद्धरिं ॥ ८ ॥

पूर्वादौ केशवादीन् वा अन्यधामस्थं हरिं (१) ।
मृण्मयी दारुघटिता लोहजा रत्नजा तथा ॥ ९ ॥
शैलजा गन्धजा चैव कौसुमी (२) सप्तधा स्मृता ।
कौसुमी गन्धजा चैव मृण्मयी प्रतिमा तथा ॥ १० ॥
तत्कालपूजिताश्चैताः सर्वकामफलप्रदाः ।
अथ शैलमयीं वक्ष्ये शिला यत्र च गृह्यते ॥ ११ ॥
पर्वतानामभावे च गृह्णीयाद्भूगतां शिलां ।
पाण्डरा त्वरुणा पीता कृष्णा शस्ता तु वर्णिनां ॥ १२ ॥
न यदा लभ्यते सम्यग् वर्णिनां वर्णतः शिला ।
वर्णाद्यापादनं तत्र जुहुयात् सिंहविद्यया ॥ १३ ॥
शिलायां शुक्लरेखाग्र्या कृष्णाग्र्या सिंहहोमतः ।
कांस्यघण्टानिनादा स्यात् पुंलिङ्गा विस्फुलिङ्गिका ॥ १४ ॥
तन्मन्दलक्षणा (३) स्त्री स्याद्रूपाभावान्नपुंसका ।
दृश्यते मण्डलं यस्यां सगर्भां तां विवर्जयेत् ॥ १५ ॥
प्रतिमार्थं वनं गत्वा वनयागं समाचरेत् ।
तत्र खात्वोपलिप्याथ मण्डपे तु हरिं यजेत् ॥ १६ ॥
बलिं दत्वा कर्म्मशस्त्रं टङ्कादिकमथार्च्चयेत् ।
हुत्वाथ शालितोयेन अस्त्रेण प्रोक्षयेच्छिलां ॥ १७ ॥
रक्षां कृत्वा नृसिंहेन मूलमन्त्रेण पूजयेत् (४) ।
हुत्वा पूर्णाहुतिं दद्यात्ततो भूतबलिं गुरुः ॥ १८ ॥

१ अन्यधामस्थवज्रादिरिति ख, चिह्नितपुस्तकपाठः । दुग्धधामस्थं हरिमिति घ, चिह्नितपुस्तकपाठः ।

२ कौमुदी इति ख, घ, चिह्नितपुस्तकद्वयपाठः ।

३ उन्मत्तलक्षणा इति ङ, चिह्नितपुस्तकपाठः ।

४ मन्त्रयेदिति ख, चिह्नितपुस्तकपाठः ।

अत्र ये संस्थिताः सत्त्वा यातुधानाश्च गुह्यकाः।
सिद्धादयो वा ये चान्ये तान् सम्पूज्य क्षमापयेत् ॥ १९ ॥
विष्णुबिम्बार्थमस्माकं (१) यात्रैषा केशवाज्ञया।
विघ्नार्थं यद्भवेत् कार्य्यं युष्माकमपि तद्भवेत् ॥ २० ॥
अनेन बलिदानेन प्रीता भवत सर्वथा।
क्षेमेण गच्छतान्यत्र मुक्त्वा स्थानमिदं त्वरात् ॥ २१ ॥
एवं प्रबोधिताः सत्त्वा यान्ति तृप्ता यथासुखं।
शिल्पिभिश्च चरुं प्राश्य स्वप्नमन्त्रं जपेन्निशि ॥ २२ ॥
ओं नमः सकललोकाय विष्णवे प्रभविष्णवे।
विश्वाय विश्वरूपाय स्वप्नाधिपतये (२) नमः ॥ २३ ॥
आचक्ष्व देवदेवेश प्रसुप्तोऽस्मि (३) तवान्तिकं।
स्वप्ने सर्वाणि कार्य्याणि हृदिस्थानि तु यानि मे ॥ २४ ॥
ओं ओं ह्रूं फट् विष्णवे स्वाहा (४)।
शुभे स्वप्ने शुभं सर्वं ह्यशुभे सिंहहोमतः।
प्रातरर्घ्यं शिलायां तु दत्वास्त्रेणास्त्रकं यजेत् ॥ २५ ॥
कुद्दालटङ्कशस्त्राद्यं मध्वाज्याक्तमुखञ्चरेत्।
आत्मानं चिन्तयेद्विष्णुं शिल्पिनं विश्वकर्म्मकं (५) ॥ २६ ॥
शस्त्रं विष्ण्वात्मकं (६) दद्यात् मखपृष्ठादि दर्शयेत्।
जितेन्द्रियः टङ्कहस्तः शिल्पी तु चतुरस्रकां ॥ २७ ॥

१ लोकसिद्ध्यर्थमस्माकमिति ख, चिह्नितपुस्तकपाठः।
२ विश्वाधिपतये इति ख, चिह्नितपुस्तकपाठः।
३ प्रपन्नोऽस्मि इति ख, चिह्नितपुस्तकपाठः।
४ ओं ओं ह्रीं फडिति ग, चिह्नितपुस्तकपाठः।
५ विश्वकर्म्मणिमिति ख, ग, चिह्नितपुस्तकपाठः।
६ विश्वात्मकमिति ग, घ, ङ चिह्नितपुस्तकत्रयपाठः।

शिलां कृत्वा पिण्डिकार्थं किञ्चिन्नूरनान्तु कल्पयेत् ।
रथे स्थाप्य समानीय सवस्त्रां कारवेश्मनि ।
पूजयित्वाथ घटयेत् प्रतिमां स तु कर्म्मकृत् ॥ २८ ॥

इत्यादिमहापुराणे आग्नेये शान्त्यादिवर्णनं नाम त्रिचत्वारिंशोऽध्यायः ॥

—०0०—

## अथ चतुश्चत्वारिंशोऽध्यायः ।

वासुदेवादिप्रतिमालक्षणविधिः ।

भगवानुवाच । वासुदेवादिप्रतिमालक्षणं प्रवदामि ते ।
प्रासादस्योत्तरे पूर्वमुखीं वा चोत्तराननां ॥ १ ॥
संस्थाप्य पूज्य च बलिं दत्वाथो मध्यसूत्रकं ।
शिलां शिल्पी तु नवधा विभज्य नवमेंऽशके ॥ २ ॥
सूर्यभक्तैः शिलायां तु भागं स्वाङ्गुलमुच्यते ।
द्व्यङ्गुलं गोलकं नाम्ना कालनेत्रं तदुच्यते ॥ ३ ॥
भागमेकं त्रिधा भक्त्वा पार्ष्णिभागं प्रकल्पयेत् ।
भागमेकं तथा जानौ ग्रीवायां भागमेव च ॥ ४ ॥
मुकुटं तालमात्रं स्यात्तालमात्रं तथा मुखं ।
तालेनैकेन कण्ठन्तु तालेन हृदयं तथा ॥ ५ ॥
नाभिमेढ्रान्तरन्तालं द्वितालावूरुकौ तथा ।
तालद्वयेन जङ्घा स्यात् सूत्राणि शृणु साम्प्रतं ॥ ६ ॥
कार्य्यं सूत्रद्वयं पादे जङ्घामध्ये तथापरं ।
जानौ सूत्रद्वयं कार्य्यमूरुमध्ये तथापरं ॥ ७ ॥
मेढ्रे तथापरं कार्य्यं कट्यां सूत्रन्तथापरं ।
मेखलाबन्धसिद्ध्यर्थं नाभ्यां चैवापरन्तथा ॥ ८ ॥

हृदये च तथा कार्य्यं कण्ठे सूत्रद्वयं तथा ।
ललाटे चापरं कार्य्यं मस्तके च तथापरं ॥ ९ ॥
मुकुटोपरि कर्त्तव्यं सूत्रमेकं विचक्षणैः ।
सूत्राण्यूर्द्ध्वं प्रदेयानि सप्तैव कमलोद्भव (१) ॥ १० ॥
कक्षात्रिकान्तरेणैव षट् सूत्राणि प्रदापयेत् ।
मध्यसूत्रं तु सन्त्यज्य सूत्राण्येव निवेदयेत् ॥ ११ ॥
ललाटं नासिकावक्त्रं कर्त्तव्यञ्चतुरङ्गुलं ।
ग्रीवाकर्णौ तु कर्त्तव्यौ आयामाच्चतुरङ्गुलौ ॥ १२ ॥
द्व्यङ्गुले हनुके कार्य्ये विस्ताराच्चिबुकन्तथा ।
अष्टाङ्गुलं ललाटन्तु विस्तारेण प्रकीर्त्तितम् ॥ १३ ॥
परेण द्व्यङ्गुलौ शङ्खौ कर्त्तव्यावलकान्वितौ ।
चतुरङ्गुलमाख्यातमन्तरं कर्णनेत्रयोः ॥ १४ ॥
द्व्यङ्गुलौ पृथुकौ कर्णौ कर्णापाङ्गार्द्धपञ्चमे ।
भ्रूसमेन तु सूत्रेण कर्णस्रोत्रं प्रकीर्त्तितम् ॥ १५ ॥
विद्धं षडङ्गुलं कर्णमविद्धञ्चतुरङ्गुलम् ।
चिबुकेन समं विद्धमविद्धं वा षडङ्गुलम् ॥ १६ ॥
गन्धपात्रं तथावर्त्तं शष्कुलीं कल्पयेत्तथा ।
द्व्यङ्गुलेनाधरः कार्य्यस्तस्यार्द्धेनोत्तराधरः ॥ १७ ॥
अर्द्धाङ्गुलं तथा नेत्रं (२) वक्त्रन्तु चतुरङ्गुलम् ।
आयामेन तु वैपुल्यात् सार्द्धमङ्गुलमुच्यते ॥ १८ ॥
अव्यात्तमेवं स्याद्वक्त्रं व्यात्तं त्र्यङ्गुलमिष्यते ।
नासावंशसमुच्छ्रायं मूले त्वेकाङ्गुलं मतम् ॥ १९ ॥
उच्छ्राया द्व्यङ्गुलं चाग्रे करवीरोपमाः स्मृताः ।

१ मुकुटोपरि इति ख, चिह्नितपुस्तकपाठः ।
२ तथौष्ठौ इति ग, चिह्नितपुस्तकपाठः ।

अन्तरं चक्षुषोः कार्य्यं चतुरङ्गुलमानतः ॥ २० ॥
द्व्यङ्गुलं चाक्षिकोणञ्च द्व्यङ्गुलं चान्तरं तयोः ।
तारा नेत्रत्रिभागेण दृक्तारा पञ्चमांशिका ॥ २१ ॥
षडङ्गुलं नेत्रविस्तारं द्रोणी चार्द्धाङ्गुला मता ।
तत्प्रमाणा भ्रुवोर्लेखा भ्रुवौ चैव समे मते ॥ २२ ॥
भ्रूमध्यं द्व्यङ्गुलं कार्य्यं भ्रूदैर्घ्यं चतुरङ्गुलम् (१) ।
षट्त्रिंशदङ्गुलायाममस्तकस्य तु वेष्टनम् ॥ २३ ॥
मूर्त्तीनां केशवादीनां द्वात्रिंशद्वेष्टनं भवेत् ।
पञ्चनेत्रा लम्बग्रीवा विस्ताराद्वेष्टनं पुनः ॥ २४ ॥
त्रिगुणं तु भवेदूर्द्ध्वं विस्तृतायष्टाङ्गुलं पुनः ।
ग्रीवात्रिगुणमायामं ग्रीवावक्षोन्तरं भवेत् ॥ २५ ॥
स्कन्धावष्टाङ्गुलौ कार्य्यौ त्रिकलावंशकौ शुभौ ।
सप्तनेत्रौ स्मृतौ बाहू प्रबाहू षोडशाङ्गुलौ ॥ २६ ॥
त्रिकलौ विस्तृतौ बाहू प्रबाहू चापि तत्समौ ।
बाहुदण्डोर्द्धतो ज्ञेयः परिणाहः कला नव ॥ २७ ॥
सप्तदशाङ्गुलो मध्ये कूर्प्परोर्द्धे च षोडश ।
कूर्परस्य भवेन्नाहः त्रिगुणः कमलोद्भव ॥ २८ ॥
नाहः प्रबाहुमध्ये तु षोडशाङ्गुल उच्यते ।
अग्रहस्ते परीणाहो द्वादशाङ्गुल उच्यते ॥ २९ ॥
विस्तारेण करतलं कीर्त्तितं तु षडङ्गुलम् ।
दैर्घ्यं सप्ताङ्गुलं कार्य्यं मध्या पञ्चाङ्गुला मता ॥ ३० ॥
तर्ज्जन्यनामिका चैव तस्मादर्द्धाङ्गुलं विना ।
कनिष्ठाङ्गुष्ठकौ कार्य्यौ चतुरङ्गुलसम्मितौ ॥ ३१ ॥

---

१ भ्रूदैर्घ्याश्चतुरङ्गुला इति ङ. चिह्नितपुस्तकपाठः ।

द्विपर्वोऽङ्गुष्ठकः कार्यः शेषाङ्गुल्यस्त्रिपर्विकाः ।
सर्वासां पर्वणोऽर्द्धेन नखमानं विधीयते ॥ ३२ ॥
वक्षसो यत् प्रमाणन्तु जठरं तत्प्रमाणतः ।
अङ्गुलैकं भवेन्नाभी वेधेन च प्रमाणतः ॥ ३३ ॥
ततो मेढ्रान्तरं कार्यं तालमात्रं प्रमाणतः ।
नाभिमध्ये परीणाहो द्विचत्वारिंशदङ्गुलैः ॥ ३४ ॥
अन्तरं स्तनयोः कार्य्यं तालमात्रं प्रमाणतः ।
चिवुकौ (१) यवमानौ तु मण्डलं द्विपदं भवेत् ॥ ३५ ॥
चतुःषष्ट्यङ्गुलं कार्यं वेष्टनं वक्षसः स्फुटम् ।
चतुर्मुखञ्च तदधोवेष्टनं परिकीर्त्तितम् ॥ ३६ ॥
परिणाहस्तथा कव्यां चतुःपञ्चाशदङ्गुलैः ।
विस्तारश्चोरुमूले तु प्रोच्यते द्वादशाङ्गुलः ॥ ३७ ॥
तस्मादभ्यधिकं मध्ये ततो निम्नतरं क्रमात् ।
विस्तृताष्टाङ्गुलं जानुत्रिगुणा परिणाहतः ॥ ३८ ॥
जङ्घामध्ये तु विस्तारः सप्ताङ्गुल उदाहृतः ।
त्रिगुणा परिधिश्चास्य जङ्घाग्रं पञ्चविस्तरात् ॥ ३९ ॥
त्रिगुणा परिधिश्चास्य पादौ तालप्रमाणकौ ।
आयामादुच्छ्रितौ पादौ चतुरङ्गुलमेव च ॥ ४० ॥
गुल्फात् पूर्वं तु कर्त्तव्यं प्रमाणाच्चतुरङ्गुलम् ।
त्रिकलं विस्तृतौ पादौ त्र्यङ्गुलो गुह्यकः स्मृतः ॥ ४१ ॥
पञ्चाङ्गुलस्तु नाहोऽस्य दीर्घा तद्वत् प्रदेशिनी ।
अष्टमाष्टांशतो न्यूनाः शेषाङ्गुल्यः क्रमेण तु ॥ ४२ ॥
सपादाङ्गुलमुत्सेधमङ्गुष्ठस्य प्रकीर्त्तितं ।
यवोनमङ्गुलं कार्यमङ्गुष्ठस्य नखं तथा ॥ ४३ ॥

---

१ चूचुकौ इति ङ, चिह्नितपुस्तकपाठः ।

अर्द्धाङ्गुलं तथान्यासां(१) क्रमान्न्यूनं तु कारयेत्।
व्यङ्गुलौ वृषणौ कार्यौ मेढ्रं तु चतुरङ्गुलम्॥ ४४ ॥
परिणाहोऽत्र कोषाग्रं कर्त्तव्यश्चतुरङ्गुलम्।
षडङ्गुलपरीणाहौ वृषणौ परिकीर्त्तितौ॥ ४५ ॥
प्रतिमा भगवत्या स्यादीदृग्रूपलक्षणम्।
अनयैव दिशा कार्यं लोके दृष्टा तु लक्षणम्॥ ४६ ॥
दक्षिणे तु करे चक्रमधस्तात् पद्ममेव च।
वामे शङ्खं गदामधस्ताद्वासुदेवस्य लक्षणात्॥ ४७ ॥
श्रीपुष्टी चापि कर्त्तव्ये पद्मवीणाकरान्विते।
ऊरुमात्रोच्छ्रिते ताते मालाविद्याधरौ(२) तथा॥ ४८ ॥
प्रभामण्डलसंस्थौ तौ प्रभा हस्त्यादिभूषणा।
पद्माभं पादपीठन्तु प्रतिमास्वेवमाचरेत्॥ ४९ ॥

इत्यादिमहापुराणे आग्नेये प्रतिमालक्षणं नाम
चतुश्चत्वारिंशोऽध्यायः॥

## अथ पञ्चचत्वारिंशोऽध्यायः।

### पिण्डिकालक्षणकथनम्।

भगवानुवाच। पिण्डिकालक्षणं वक्ष्ये दैर्घ्येण प्रतिमासमा।
उच्छ्रायं प्रतिमार्द्धन्तु चतुःषष्टिपुटां(३) च ताम्॥ १ ॥
त्यक्त्वा पङ्क्तिद्वयं चाधस्तदूर्द्ध्वं यत्तु कोष्ठकम्।

१ सार्द्धाङ्गुलं तथाभ्यासमिति ङ. चिह्नितपुस्तकपाठः।
२ मणिविद्याधराविति घ. चिह्नितपुस्तकपाठः।
३ चतुःषष्टिपदामिति ङ. चिह्नितपुस्तकपाठः।

तालमात्रौ स्तनौ कार्य्यौ कटिः सार्द्धकलाधिका ।
लक्ष्म शेषं पुरावत्स्यात् दक्षिणे चाम्बुजं करे ॥ १५ ॥
वामे बिल्वं स्त्रियौ पार्श्वे शुभे चामरहस्तके ।
दीर्घघोणस्तु गरुडश्चक्राङ्काद्यानथो वदे ॥ १६ ॥

इत्यादिमहापुराणे आग्नेये पिण्डिकालक्ष्मादिलक्षणं नाम पञ्चचत्वारिंशोऽध्यायः ।

---

## अथ षट्चत्वारिंशोऽध्यायः ।

### शालग्रामादिमूर्त्तिलक्षणकथनं ।

भगवानुवाच । शालग्रामादिमूर्त्तीश्च वक्ष्येहं भुक्तिमुक्तिदाः ।
वासुदेवोऽसितो द्वारे शिलालग्नद्विचक्रकः ॥ १ ॥
ज्ञेयः सङ्कर्षणो लग्नद्विचक्रो रक्त उत्तमः ।
सूक्ष्मचक्रो बहुच्छिद्रः प्रद्युम्नो नीलदीर्घकः ॥ २ ॥
पीतोऽनिरुद्धः पद्माङ्को वर्त्तुलो द्वित्रिरेखवान् ।
कृष्णो नारायणो नाभ्युन्नतः सुषिरदीर्घवान् ॥ ३ ॥
परमेष्ठी साब्जचक्रः पृष्ठच्छिद्रश्च (१) विन्दुमान् ।
स्थूलचक्रोऽसितो विष्णुर्मध्ये रेखा गदाकृतिः ॥ ४ ॥
नृसिंहः कपिलः स्थूलचक्रः स्यात् पञ्चविन्दुकः ।
वराहः शक्तिलिङ्गः स्यात् तच्चक्रौ विषमौ स्मृतौ ॥ ५ ॥
इन्द्रनीलनिभः स्थूलस्त्रिरेखालाञ्छितः शुभः ।
कूर्मस्तथोन्नतः पृष्ठे वर्त्तुलावर्त्तकोऽसितः ॥ ६ ॥
हयग्रीवोऽङ्कुशाकाररेखो नीलः सविन्दुकः ।

---

१ पृथुच्छिद्रश्चेति ङ, लिखितपुस्तकपाठः ।

वैकुण्ठः एकचक्रोऽब्जी मणिभः पुच्छरेखकः ॥ ७ ॥
मत्स्यो दीर्घस्त्रिविन्दुः स्यात् काचवर्णस्तु पूरितः ।
श्रीधरो वनमालाङ्कः पञ्चरेखस्तु वर्त्तुलः ॥ ८ ॥
वामनो वर्त्तुलश्चातिह्रस्वो नीलः सविन्दुकः ।
श्यामस्त्रिविक्रमो दक्षरेखो वामेन विन्दुकः ॥ ९ ॥
अनन्तो नागभोगाङ्को नैकाभो नैकमूर्त्तिमान् ।
स्थूलो दामोदरो मध्यचक्रो द्वाःसूक्ष्मविन्दुकः (१) ॥ १० ॥
सुदर्शनस्त्वेकचक्रो लक्ष्मीनारायणो द्वयात् ।
त्रिचक्रश्चाच्युतो देवस्त्रिचक्रो वा त्रिविक्रमः ॥ ११ ॥
जनार्द्दनश्चतुश्चक्रो वासुदेवश्च पञ्चभिः ।
षट्चक्रश्चैव प्रद्युम्नः सङ्कर्षणश्च सप्तभिः ॥ १२ ॥
पुरुषोत्तमोऽष्टचक्रो नवव्यूहो नवाङ्कितः ।
दशावतारो दशभिर्द्दशैकेनानिरुद्धकः ।
द्वादशात्मा द्वादशभिरत ऊर्द्ध्वमनन्तकः ॥ १३ ॥

इत्यादिमहापुराणे आग्नेये शालग्रामादिमूर्त्तिलक्षणं नाम
षट्चत्वारिंशोऽध्यायः ।

---

## अथ सप्तचत्वारिंशोऽध्यायः ।

### शालग्रामादिपूजाकथनं ।

भगवानुवाच । शालग्रामादिचक्राङ्कपूजाः सिद्ध्यै वदामि ते ।
त्रिविधा स्याद्धरेः पूजा काम्याकाम्योभयात्मिका ॥ १ ॥
मीनादीनान्तु पञ्चानां काम्यार्था वोभयात्मिका(२) ।

---

१ मध्यचक्राधः सूक्ष्मविन्दुक इति ङ, चिह्नितपुस्तकपाठः ।
२ काम्यार्थैवोभयात्मिकेति घ, चिह्नितपुस्तकपाठः ।

वराहस्य नृसिंहस्य वामनस्य च मुक्तये ॥ २ ॥
चक्रादीनां त्रयाणान्तु शालग्रामार्चनं शृणु ।
उत्तमा निष्कला पूजा कनिष्ठा सकलार्चना ॥ ३ ॥
मध्यमा मूर्त्तिपूजा स्याच्चक्राब्जे चतुरस्रके ।
प्रणवं हृदि विन्यस्य षडङ्गङ्करदेहयोः ॥ ४ ॥
कृतमुद्रात्रयश्चक्राद् वहिः पूर्वे गुरुं यजेत् ।
आप्ये गणं वायवे च धातारं नैर्ऋते यजेत् ॥ ५ ॥
विधातारञ्च कर्त्तारं हर्त्तारं दक्षसौम्ययोः ।
विश्वक्सेनं यजेदीशे आग्नेये क्षेत्रपालकं ॥ ६ ॥
ऋगादिवेदान् प्रागादौ आधारानन्तकं भुवं ।
पीठं पद्मं चार्कचन्द्रवक्न्याख्यं मण्डलत्रयं ॥ ७ ॥
आसनं द्वादशार्णेन तत्र स्थाप्य शिलां यजेत् ।
व्यस्तेन च समस्तेन स्वबीजेन यजेत् क्रमात् ॥ ८ ॥
पूर्वादावथ वेदाद्यैर्गायत्रीभ्यां जितादिना ।
प्रणवेनार्चयेत् पश्चान्मुद्रास्तिस्रः प्रदर्शयेत् ॥ ९ ॥
विश्वक्सेनस्य चक्रस्य क्षेत्रपालस्य दर्शयेत् ।
शालग्रामस्य प्रथमा पूजायो निष्कलोच्यते ॥ १० ॥
पूर्ववत् षोडशारञ्च सपद्मं मण्डलं लिखेत् ।
शङ्खचक्रगदाखड्गैर्गुर्वाद्यं पूर्ववद्यजेत् (१) ॥ ११ ॥
पूर्वे सौम्ये धनुर्वाणान् वेदाद्यैरासनं ददेत् ।
शिलां न्यसेद् द्वादशार्णैस्तृतीयं पूजनं शृणु ॥ १२ ॥
अष्टारमब्जं विलिखेत् गुर्वाद्यं(२) पूर्ववद्यजेत् ।

---

१ चतुर्भिः पूर्ववद्यजेदिति ङ, चिह्नितपुस्तकपाठः ।

२ गन्धाद्यैरिति ङ. चिह्नितपुस्तकपाठः ।

अस्त्रेणासनं दत्वा तेनैव च शिलां न्यसेत्।
पूजयेद्दशधा तेन गायत्रीभ्यां जितं तथा(१)॥ १३॥
इत्यादिमहापुराणे आग्नेये शालग्रामादिपूजाकथनं नाम
सप्तचत्वारिंशोऽध्यायः॥

---

## अथाष्टाचत्वारिंशोऽध्यायः।

### चतुर्विंशतिमूर्त्तिस्तोत्रकथनं।

भगवानुवाच। ओंरूपः केशवः पद्मशङ्खचक्रगदाधरः।
नारायणः शङ्खपद्मगदाचक्री प्रदक्षिणं॥ १॥
ततो गदी माधवोरिशङ्खपद्मी नमामि तं।
चक्रकौमोदकीपद्मशङ्खी गोविन्द ऊर्जितः॥ २॥
मोक्षदः श्रीगदी पद्मी शङ्खी विष्णुश्च चक्रधृक्।
शङ्खचक्राब्जगदिनं मधुसूदनमानमे॥ ३॥
भक्त्या त्रिविक्रमः पद्मगदी चक्री च शङ्ख्यपि।
शङ्खचक्रगदापद्मी वामनः पातु मां सदा॥ ४॥
गतिदः श्रीधरः पद्मी चक्रशार्ङ्गी च शङ्ख्यपि(२)।
हृषीकेशो गदाचक्री पद्मी शङ्खी च पातु नः॥ ५॥
वरदः पद्मनाभस्तु शङ्खाब्जारिगदाधरः।
दामोदरः पद्मशङ्खगदाचक्री नमामि तं॥ ६॥
तेने गदी शङ्खचक्री वासुदेवोऽब्जभृज्जगत्।
सङ्कर्षणो गदी शङ्खी पद्मी चक्री च पातु वः॥ ७॥

---

१ जितं तत इति ख, ग, ङ, चिह्नितपुस्तकत्रयपाठः।
२ चक्री गदश्च शङ्ख्यपि इति ङ, चिह्नितपुस्तकपाठः।

गदी चक्री शङ्खगदी (१) प्रद्युम्नः पद्मभृत् प्रभुः ।
अनिरुद्धश्चक्रगदी शङ्खी पद्मी च पातु नः ॥ ८ ॥
सुरेशोऽर्यब्जशङ्खाढ्यः श्रीगदी पुरुषोत्तमः ।
अधोक्षजः पद्मगदी शङ्खी चक्री च पातु वः ॥ ९ ॥
देवो नृसिंहश्चक्राब्जगदाशङ्खी नमामि तम् ।
अच्युतः श्रीगदी पद्मी चक्री शङ्खी च पातु वः ॥ १० ॥
बालरूपी शङ्खगदी उपेन्द्रश्चक्रपद्मप्यपि ।
जनार्द्दनः पद्मचक्री शङ्खधारी गदाधरः ॥ ११ ॥
शङ्खी पद्मी च चक्री च हरिः कौमोदकीधरः ।
कृष्णः शङ्खी गदी पद्मी चक्री मे भुक्तिमुक्तिदः ॥ १२ ॥
आदिमूर्त्तिर्वासुदेवस्तस्मात् सङ्कर्षणोऽभवत् ।
सङ्कर्षणाच्च प्रद्युम्नः प्रद्युम्नादनिरुद्धकः ॥ १३ ॥
केशवादिप्रभेदेन एकैकस्य त्रिधा क्रमात् ।
द्वादशाक्षरकं स्तोत्रं चतुर्विंशतिमूर्त्तिमत् ।
यः पठेच्छृणुयाद्वापि निर्मलः सर्वमाप्नुयात् ॥ १४ ॥

इत्यादिमहापुराणे आग्नेये चतुर्विंशतिमूर्त्तिस्तोत्रं नाम अष्टाचत्वारिंशोऽध्यायः ॥

---

## अथोनपञ्चाशोऽध्यायः ।

### मत्स्यादिलक्षणवर्णनम् ।

भगवानुवाच । दशावतारं मत्स्यादिलक्षणं प्रवदामि ते ।
मत्स्याकारस्तु मत्स्यः स्यात् कूर्म्मः कूर्म्माकृतिर्भवेत् ॥ १ ॥

---

१ शङ्खपद्मी इति ग, ङ, चिह्नितपुस्तकद्वयपाठः ।

नराङ्गो वाथ कर्त्तव्यो भूवराहो गदादिभृत् ।
दक्षिणे वामके शङ्खं लक्ष्मीर्वा पद्ममेव वा ॥ २ ॥
श्रीर्वामकूर्परस्था तु क्ष्मानन्तौ चरणानुगौ ।
वराहस्थापनाद्राज्यं भवाब्धितरणं भवेत् ॥ ३ ॥
नरसिंहो विवृत्तास्यो वामोरुक्षतदानवः (१) ।
तद्वक्षो दारयन्माली स्फुरच्चक्रगदाधरः ॥ ४ ॥
छत्री दण्डी वामनः स्यादथवा स्याच्चतुर्भुजः ।
रामश्चापेषुहस्तः स्यात् खड्गी परशुनान्वितः ॥ ५ ॥
रामश्चापी शरी खड्गी शङ्खी वा द्विभुजः स्मृतः ।
गदालाङ्गलधारी च रामो वाथ चतुर्भुजः ॥ ६ ॥
वामोर्द्ध्वे लाङ्गलं दद्यादधः शङ्खं सुशोभनं ।
मुषलं दक्षिणोर्द्ध्वे तु चक्रञ्चाधः सुशोभनं ॥ ७ ॥
शान्तात्मा लम्बकर्णश्च गौराङ्गश्चाम्बरावृतः (२) ।
ऊर्द्ध्वपद्मस्थितो बुद्धो वरदाभयदायकः ॥ ८ ॥
धनुस्तूणान्वितः (३) कल्की म्लेच्छोत्सादकरो द्विजः ।
अथवाश्वस्थितः खड्गी शङ्खचक्रशरान्वितः ॥ ९ ॥
लक्षणं वासुदेवादिनवकस्य वदामि ते ।
दक्षिणोर्द्ध्वे गदा वामे वामोर्द्ध्वे चक्रमुत्तमं ॥ १० ॥
ब्रह्मेशौ पार्श्वगौ नित्यं वासुदेवोऽस्ति पूर्ववत् ।
शङ्खी स वरदो वाथ द्विभुजो वा चतुर्भुजः ॥ ११ ॥
लाङ्गली मुषली रामो गदापद्मधरः स्मृतः ।

---

१ वामोरुधृतदानव इति ङ, चिह्नितपुस्तकपाठः ।
२ गौराङ्गश्चांशुकावृत इति ख, ग, चिह्नितपुस्तकद्वयपाठः ।
३ धनुर्बाणान्वित इति ङ, चिह्नितपुस्तकपाठः ।

प्रद्युम्नो दक्षिणे वज्रं (१) शङ्खं वामे धनुः करे ॥ १२ ॥
गदानाभ्यावृतः (२) प्रीत्या प्रद्युम्नो वा धनुःशरी ।
चतुर्भुजोऽनिरुद्धः स्यात्तथा नारायणो विभुः ॥ १३ ॥
चतुर्मुखश्चतुर्बाहुर्बृहज्जठरमण्डलः ।
लम्बकूर्चो (३) जटायुक्तो ब्रह्मा हंसाग्रवाहनः ॥ १४ ॥
दक्षिणे चाक्षसूत्रञ्च स्रुवो वामे तु कुण्डिका ।
आज्यस्थाली सरस्वती सावित्री वामदक्षिणे ॥ १५ ॥
विष्णुरष्टभुजस्तार्क्ष्ये करे खड्गस्तु दक्षिणे ।
गदा शरश्च वरदो वामे कार्मुकखेटके ॥ १६ ॥
चक्रशङ्खौ चतुर्बाहुर्नरसिंहश्चतुर्भुजः ।
शङ्खचक्रधरो वापि विदारितमहासुरः ॥ १७ ॥
चतुर्बाहुर्वराहस्तु शेषः पाणितले धृतः ।
धारयन् बाहुना पृथ्वीं वामेन कमलाधरः (४) ॥ १८ ॥
पादलग्ना धरा कार्य्या यदा लक्ष्मीर्व्यवस्थिता ।
त्रैलोक्यमोहनस्तार्क्ष्ये अष्टबाहुस्तु दक्षिणे ॥ १९ ॥
चक्रं खड्गं च मुषलं अङ्कुशं वामके करे ।
शङ्खशार्ङ्गगदापाशान् पद्मवीणासमन्विते ॥ २० ॥
लक्ष्मीः सरस्वती कार्य्ये विश्वरूपोऽथ दक्षिणे ।
मुद्गरं च तथा पाशं शक्तिशूलं शरं करे ॥ २१ ॥
वामे शङ्खञ्च शार्ङ्गञ्च गदां पाशं च तोमरं ।

---

१ दक्षिणे चक्रमिति ख, चिह्नितपुस्तकपाठः ।
२ गदी रत्यावृत इति ख, चिह्नितपुस्तकपाठः ।
३ लम्बभुज इति ख, चिह्नितपुस्तकपाठः ।
४ धारयन्नाकुलां पृथ्वीं वामेन कमलामध इति ख, चिह्नितपुस्तकपाठः ।

लाङ्गलं परशुं दण्डं छुरिकां चर्म्मक्षेपणं (१) ॥ २२ ॥
विंशद्वाङ्कश्चतुर्व्वक्त्रो दक्षिणस्थोथ वामके ।
त्रिनेत्रो वामपार्श्वेन शयिता जलशाय्यपि ॥ २३ ॥
श्रिया धृतैकचरणो विमलाद्याभिरीडितः ।
नाभिपद्मचतुर्व्वक्त्रो हरिशङ्करको हरिः ॥ २४ ॥
शूलर्ष्टिधारी दक्षे च गदाचक्रधरो परे ।
रुद्रकेशवलक्ष्माङ्गो गौरी लक्ष्मीसमन्वितः ॥ २५ ॥
शङ्खचक्रगदावेदपाणिश्चाश्वशिरा हरिः ।
वामपादो धृतः शेषे दक्षिणः कूर्म्मपृष्ठगः ॥ २६ ॥
दत्तात्रेयो द्विबाहुः स्याद्वामोत्सङ्गे श्रिया सह ।
विश्वक्सेनश्चक्रगदी हली शङ्खी हरेर्गणः ॥ २७ ॥

इत्यादिमहापुराणे आग्नेये प्रतिमालक्षणं नाम
ऊनपञ्चाशोऽध्यायः ॥

---

## अथ पञ्चाशोध्यायः ।

देवीप्रतिमालक्षणकथनं ।

भगवानुवाच । चण्डी विंशतिबाहुः स्याद्विभ्रती दक्षिणैः करः ।
शूलासिशक्तिचक्राणि पाशं खेटायुधाभयं ॥ १ ॥
डमरुं शक्तिकां वामैर्न्नागपाशञ्च खेटकं ।
कुठाराङ्कुशचापांश्च घण्टाध्वजगदास्तथा ॥ २ ॥
आदर्शमुद्गरान् हस्तैश्चण्डी वा दशबाहुका ।
तदधो महिषश्छिन्नमूर्द्धा पातितमस्तकः ॥ ३ ॥

---

१ चर्म चोत्तममिति ङ, चिह्नितपुस्तकपाठः ॥

शस्त्रोद्यतकरः क्रुद्धस्तद्ग्रीवासम्भवः पुमान् ।
शूलहस्तो वमद्रक्तो रक्तस्रङ्मूर्द्धजेक्षणः ॥ ४ ॥
सिंहेनास्वाद्यमानस्तु पाशबद्धो गले भृशं ।
याम्याङ्घ्र्याक्रान्तसिंहा च सव्याङ्घ्रिर्नीचगासुरे ॥ ५ ॥
चण्डिकेयं त्रिनेत्रा च सशस्त्रा रिपुमर्द्दनी ।
नवपद्मात्मके स्थाने पूज्या दुर्गा स्वमूर्त्तितः ॥ ६ ॥
आदौ मध्ये तथेन्द्रादौ नवतत्त्वात्मभिः (१) क्रमात् ।
अष्टादशभुजैका तु दक्षे मुण्डं च खेटकं ॥ ७ ॥
आदर्शतर्जनीचापं ध्वजं डमरुकं तथा ।
पाशं वामे बिभ्रती च शक्तिमुद्गरशूलकं ॥ ८ ॥
वज्रखड्गाङ्कुशशरान् चक्रन्देवी शलाकया ।
एतैरेवायुधैर्युक्ता शेषाः षोडशबाहुकाः ॥ ९ ॥
डमरुं तर्जनीं त्यक्त्वा रुद्रचण्डादयो नव ।
रुद्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ॥ १० ॥
चण्डा चण्डवती चैव चण्डरूपातिचण्डिका ।
उग्रचण्डा च मध्यस्था रोचनाभारुणासिता ॥ ११ ॥
नीला शुक्ला धूम्रिका च पीता श्वेता च सिंहगाः ।
महिषोऽथ पुमान् शस्त्री तत्कचग्रहमुष्टिकाः ॥ १२ ॥
आलीढा नव(२) दुर्गाः स्युः स्थाप्याः पुत्रादिवृद्धये ।
तथा गौरी चण्डिकाद्या कुण्ड्यक्षररदाग्निधृक् ॥ १३ ॥
सैव रम्भा वने सिद्धाऽग्निहीना ललिता तथा ।
स्कन्धमूर्द्धकरा वामे द्वितीये धृतदर्पणा ॥ १४ ॥

---

१ नवतत्त्वा द्विभिरिति ङ, चिह्नितपुस्तकपाठः ।

२ शालास्तु नव इति ङ, चिह्नितपुस्तकपाठः ।

याम्ये पद्माञ्जलिहस्ता सौभाग्या तत्र चोर्द्धिका ।
लक्ष्मीर्याम्यकराम्भोजा वामे श्रीफलसंयुता ॥ १५ ॥
पुस्ताक्षमालिकाहस्ता वीणाहस्ता सरस्वती ।
कुम्भाब्जहस्ता श्वेताभा मकरोपरि जाह्नवी(१) ॥ १६ ॥
कूर्म्मगा यमुना कुम्भकरा श्यामा च पूज्यते ।
सवीणस्तुम्बुरः शुक्लः शूली मात्रग्रतो वृषे ॥ १७ ॥
गौरी चतुर्मुखी ब्राह्मी अक्षमालासुरान्विता ।
कुण्डाक्षपाणिणी वामे हंसगा शाङ्करी सिता ॥ १८ ॥
शरचापौ दक्षिणेऽस्या वामे चक्रं (२) धनुर्वृषे ।
कौमारी शिखिगा रक्ता शक्तिहस्ता द्विबाहुका ॥ १९ ॥
चक्रशङ्खधरा सव्ये वामे लक्ष्मीर्गदाब्जधृक् ।
दण्डशङ्खासि (३) गदया वाराही महिषस्थिता ॥ २० ॥
ऐन्द्री वामे वज्रहस्ता सहस्राक्षी तु सिद्धये ।
चामुण्डा कोटराक्षी स्यान्निर्म्मांसा तु त्रिलोचना ॥ २१ ॥
निर्म्मांसा अस्थिसारा वा ऊर्द्ध्वकेशी कृशोदरी ।
द्वीपिचर्म्मधरा वामे कपालं पट्टिशङ्करे ॥ २२ ॥
शूलं कर्त्री दक्षिणेऽस्याः शवारूढास्थिभूषणा ।
विनायको नराकारो वृहत्कुक्षिर्गजाननः ॥ २३ ॥
वृहच्छुण्डो ह्युपवीती मुखं सप्तकलं भवेत् ।
विस्ताराद्दैर्घ्यतश्चैव शुण्डं षट्त्रिंशदङ्गुलं ॥ २४ ॥
कला द्वादश नाडी तु ग्रीवा सार्द्धकलोच्छ्रिता ।
षट्त्रिंशदङ्गुलं कण्ठं गुह्यमध्यर्द्धमङ्गुलं ॥ २५ ॥

---

१ मकरोदरि जाह्नवीति ख, घ, ङ, चिह्नितपुस्तकत्रयपाठः ।
२ वामे वज्रमिति ख, ङ, चिह्नितपुस्तकद्वयपाठः ।
३ शङ्खारि इति ख, चिह्नितपुस्तकपाठः ।

नाभिरूद्रू द्वादशश्च अङ्गे पादे तु दक्षिणे।
खदन्तं परशुं वामे लड्डुकञ्चोत्पलं शये॥ २६॥
सुमुखी च विडालाक्षी पार्श्वे स्कन्दो मयूरगः।
स्वामी शाखो विशाखश्च द्विभुजो बालरूपधृक्॥ २७॥
दक्षे शक्तिः कुक्कुटोथ एकवक्त्रोथ षण्मुखः।
षड्भुजो वा द्वादशभिर्ग्रामेऽरण्ये द्विबाहुकः॥ २८॥
शक्तीषुपाशनिस्त्रिंशतोत्रदोस्तर्जनीयुतः।
शक्त्या दक्षिणहस्तेषु षट्सु वामे करे तथा॥ २९॥
शिखिपिच्छन्धनुः खेटं पताकाभयकुक्कुटे।
कपालकर्तरीशूलपाशभृद्याम्यसौम्ययोः॥ ३०॥
गजचर्म्मभृदूर्द्ध्वास्यपादा स्यात् रुद्रचर्चिका।
सैव चाष्टभुजा देवी शिरोडमरुकान्विता॥ ३१॥
तेन सा रुद्रचामुण्डा नाटेश्वर्य्यथ नृत्यती।
इयमेव महालक्ष्मीरुपविष्टा चतुर्मुखी॥ ३२॥
नृवाजिमहिषेभांश्च खादन्ती च करे स्थितान्।
दशबाहुस्त्रिनेत्रा च शस्त्रासिडमरुत्रिकं॥ ३३॥
बिभ्रती दक्षिणे हस्ते वामे घण्टां च खेटकं।
खट्वाङ्गं च त्रिशूलञ्च सिद्धचामुण्डकाह्वया॥ ३४॥
सिद्धयोगेश्वरी देवी सर्वसिद्धिप्रदायिका।
एतद्रूपा भवेदन्या पाशाङ्कुशयुतारुणा॥ ३५॥
भैरवी रूपविद्या तु भुजैर्द्वादशभिर्युता।
एताः श्मशानजा रौद्रा अम्बाष्टकमिदं (१) स्मृतं॥ ॥ ३६॥

---

१ आद्याष्टकमिदमिति ख, ग, घ, चिह्नितपुस्तकत्रयपाठः।

क्षमा शिवावृता (१) वृद्धा द्विभुजा विवृतानना ।
दन्तुरा क्षेमकारी स्याद्भूमौ जानुकरा स्थिता ॥ ३७ ॥
यक्षिण्यस्तब्धदीर्घाक्षाः शाकिन्यो वक्रदृष्टयः (२) ।
पिङ्गाक्षाः स्युर्महारम्या रूपिण्योऽप्सरसः(३) सदा ॥ ३८ ॥
साक्षमाली त्रिशूली च नन्दीशो द्वारपालकः ।
महाकालोसिमुण्डी स्याच्छूलखटकवांस्तथा ॥ ३९ ॥
कृशो भृङ्गी च नृत्यन् वै कुष्माण्डस्थूलखर्ववान् ।
गजगोकर्णवक्त्राद्या वीरभद्रादयो गणाः ॥ ४० ॥
घण्टाकर्णोऽष्टदशदोः पापरोगं विदारयन् ।
वज्रासिदण्डचक्रेषुमुषलाङ्कुशमुद्गरान् ॥ ४१ ॥
दक्षिणे तर्जनीं खेटं शक्तिं मुण्डञ्च पाशकं ।
चापं घण्टां कुठारञ्च द्वाभ्याञ्चैव त्रिशूलकं ।
घण्टामालाकुलो देवो विस्फोटकविमर्दनः (४) ॥ ४२ ॥

इत्यादिमहापुराणे आग्नेये देवीप्रतिमालक्षणं नाम
पञ्चाशोऽध्यायः ॥

---

## अथ एकपञ्चाशोऽध्यायः ।

### सूर्य्यादिप्रतिमालक्षणं ।

भगवानुवाच । सप्ताश्वे सैकचक्रे रथे सूर्य्यो द्विपद्मधृक् ।
मसीभाजनलेखन्यौ बिभ्रत्कुण्डी तु दक्षिणे ॥ १ ॥
वामे तु पिङ्गलो द्वारि दण्डभृत् स रवेर्गणः ।

---

१ शिवाच्युतेति ख, चिह्नितपुस्तकपाठः ।

२ वक्रदृश्य इति ख, चिह्नितपुस्तकपाठः ।

३ महारम्यो रूपिण्योऽप्सरस इति ख, चिह्नितपुस्तकपाठः ।

४ विस्फोटकवमर्द्दन इति ग, ङ, चिह्नितपुस्तकपाठः ।

बालव्यजनधारिण्यौ पार्श्वे राज्ञी च निष्प्रभा ॥ २ ॥
अथवाश्वसमारूढः कार्य्य एकस्तु भास्करः ।
वरदा द्व्यङ्गिनः सर्वे दिक्पालास्त्रकराः क्रमात् ॥ ३ ॥
मुद्गरशूलचक्राब्जभृतोऽग्न्यादिविदिक्स्थिताः ।
सूर्य्यार्यमादिरक्षोन्तास्चतुर्हस्ता द्विषड्दले ॥ ४ ॥
वरुणः सूर्यनामा च सहस्रांशुस्तथापरः ।
धाता तपनसञ्ज्ञश्च सविताथ गभस्तिकः ॥ ५ ॥
रविश्चैवाथ पर्ज्जन्यस्त्वष्टा मित्रोऽथ विष्णुकः ।
मेषादिराशिसंस्थाश्च मार्गादिकार्त्तिकान्तकाः ॥ ६ ॥
कृष्णो रक्तो मनाग्रक्तः पीतः पाण्डरकः सितः ।
कपिलः पीतवर्णश्च शुकाभो धवलस्तथा ॥ ७ ॥
धूम्रो नीलः क्रमाद्वर्णाः शक्तयः केशराग्रगाः ।
इडा सुषुम्णा विश्वार्चिरिन्दुसञ्ज्ञा प्रमर्दिनी(१) ॥ ८ ॥
प्रहर्षणी महाकाली कपिला च प्रबोधनी ।
नीलाम्बरा घनान्तस्था अमृताख्या च शक्तयः ॥ ९ ॥
वरुणादेश्च तद्वर्णाः केशराग्रेषु विन्यसेत् ।
तेजश्चण्डो महावक्त्रो(२) द्विभुजः पद्मखड्गभृत्(३) ॥ १० ॥
कुण्डिकाजप्यमालीन्दुः कुजः शक्त्यक्षमालिकः ।
बुधश्चापाक्षपाणिः स्याज्जीवः कुण्डाक्षमालिकः ॥ ११ ॥

---

१ विश्वाची विन्दुसञ्ज्ञा प्रवर्द्धनी इति ङ, चिह्नितपुस्तकपाठः ।

२ महारक्त इति ख, चिह्नितपुस्तकपाठः । मार्त्तण्डश्च महारक्त इति ङ, चिह्नितपुस्तकपाठः ।

३ पद्मखड्गधृगिति म, घ, चिह्नितपुस्तकपाठः । खड्गचर्म्मभृदिति ङ, चिह्नितपुस्तकपाठः ।

शुक्रः कुण्डाक्षमाली स्यात् किङ्किणीसूत्रवाञ्छनिः(१)।
अर्द्धचन्द्रधरो राहुः केतुः खड्गी च दीपभृत्॥ १२॥
अनन्तस्तक्षकः कर्कः पद्मो महाब्जः शङ्खकः।
कुलिकः सूत्रिणः सर्वे फणवक्त्रा महाप्रभाः॥ १३॥
इन्द्रो वज्री गजारूढश्छागगोऽग्निश्च शक्तिमान्।
यमो दण्डी च महिषे नैरृतः खड्गवान् करे॥ १४॥
मकरे वरुणः पाशी वायुर्ध्वजधरो मृगे।
गदी(२) कुवेरो मेषस्थ ईशानश्च जटी वृषे॥ १५॥
द्विबाहवो लोकपाला विश्वकर्माक्षसूत्रभृत्।
हनूमान् वज्रहस्तः स्यात् पद्भ्यां सम्पीडिताम्रयः॥ १६॥
वीणाहस्ताः किन्नराः स्युर्माला विद्याधराश्च खे(३)।
दुर्बलाङ्गाः पिशाचाः स्युर्वेताला विकृताननाः(४)।
क्षेत्रपालाः शूलवन्तः(५) प्रेता महोदराः कृशाः॥ १७॥

इत्यादिमहापुराणे आग्नेये प्रतिमालक्षणं नाम
एकपञ्चाशोऽध्यायः॥

---

## अथ द्विपञ्चाशोऽध्यायः।

### देवीप्रतिमालक्षणं।

भगवानुवाच। योगिन्यष्टाष्टकं वक्ष्ये ऐन्द्रादीशान्ततः क्रमात्।

---

१ शिखिनीसूत्रवान् शनिरिति ग, घ, चिह्नितपुस्तकद्वयपाठः।

२ खड्गी इति घ, चिह्नितपुस्तकपाठः।

३ मणिविद्याधराश्च खे इति ख, चिह्नितपुस्तकपाठः।

४ विकृतामना इति ख, चिह्नितपुस्तकपाठः।

५ शूलयुता इति ग, घ, ङ, चिह्नितपुस्तकत्रयपाठः।

अक्षोभ्या रूक्षकर्णी च राक्षसी क्षपणा क्षया (१) ॥ १ ॥
पिङ्गाक्षी च क्षया क्षेमा इला लीलालया तथा।
लोला लक्ता बलाकेशी(२) लालसा विमला पुनः(३) ॥ २ ॥
हुताशा च विशालाक्षी हुङ्कारा वडवामुखी।
महाक्रूरा क्रोधना तु भयङ्करी महानना ॥ ३ ॥
सर्वज्ञा तरला तारा ऋग्वेदा तु हयानना।
साराख्या रुद्रसङ्ग्राही(४) सम्बरा तालजङ्घिका ॥ ४ ॥
रक्ताक्षी सुप्रसिद्धा तु विद्युज्जिह्वा करङ्किणी।
मेघनादा प्रचण्डोग्रा कालकर्णी(५) वरप्रदा ॥ ५ ॥
चन्द्रा चन्द्रावली(६) चैव प्रपञ्चा प्रलयान्तिका।
शिशुवक्त्रा पिशाची च पिशिताशा च लोलुपा ॥ ६ ॥
धमनी तापनी चैव रागिणी(७) विकृतानना।
वायुवेगा बृहत्कुक्षिर्विकृता विश्वरूपिका ॥ ७ ॥
यमजिह्वा जयन्ती च दुर्जया च जयन्तिका।
विडाली रेवती चैव पूतना विजयान्तिका ॥ ८ ॥
अष्टहस्ताश्चतुर्हस्ता इच्छास्त्राः सर्वसिद्धिदाः।

---

१ क्षपणा क्षमा इति ख, चिह्नितपुस्तकपाठः। क्षपणा क्षपा इति ग, घ, चिह्नितपुस्तकद्वयपाठः।

२ लोला रक्ता च लोकेशी इति ग, घ, ङ, चिह्नितपुस्तकत्रयपाठः।

३ विमला मत इति ग, घ, चिह्नितपुस्तकद्वयपाठः।

४ रससङ्ग्राही इति ख, चिह्नितपुस्तकपाठः। वसुसङ्ग्राही इति घ, चिह्नितपुस्तकपाठः।

५ कालवर्णी इति ग, घ, चिह्नितपुस्तकद्वयपाठः।

६ चण्डा चण्डवतीति ङ, चिह्नितपुस्तकपाठः।

७ वामनी इति ख, ग, ङ, चिह्नितपुस्तकपाठः।

भैरवश्चार्कहस्तः स्यात् कूर्परास्यो(१) जटेन्दुभृत् ॥ ९ ॥
खड्गाङ्कुशकुठारेषुविश्वाभयभृदेकतः ।
चापत्रिशूलखट्वाङ्गपाशकार्द्धवरोद्यतः ॥ १० ॥
गजचर्मधरो द्वाभ्यां कृत्तिवासोऽहिभूषितः ।
प्रेताशनो मातृमध्ये पूज्यः पञ्चाननोऽथवा ॥ ११ ॥
ऋषिलोमाग्निपर्यन्तं दीर्घाष्टकैकभेदितं ।
तत्षडङ्गानि जात्यन्तैरन्वितं च क्रमाद् यजेत् ॥ १२ ॥
मन्दिराग्निदलारूढं(२) सुवर्णरसकान्वितं ।
नादविन्द्विन्दुसंयुक्तं मातृनायाङ्कदीपितं ॥ १३ ॥
वीरभद्रो वृषारूढो मात्रग्रे स चतुर्मुखः ।
गौरी तु द्विभुजा त्र्यक्षा शूलिनी दर्पणान्विता ॥ १४ ॥
शूलं शलन्तिका कुण्डी(३) वरदा च चतुर्भुजा ।
अब्जस्था ललिता स्कन्दगणादर्शशलाकया (४) ॥ १५ ॥
चण्डिका दशहस्ता स्यात् खड्गशूलारिशक्तिधृक् ।
दक्षे वामे नागपाशं चर्माङ्कुशकुठारकं ।
धनुः सिंहे च महिषः शूलेन प्रहतोऽग्रतः ॥ १६ ॥

इत्यादिमहापुराणे आग्नेये प्रतिमालक्षणं नाम
द्विपञ्चाशत्तमोऽध्यायः ॥

---

१ दन्तुरास्य इति ख, घ, चिह्नितपुस्तकद्वयपाठः ।

२ मण्डलाग्निदलारूढमिति ङ, चिह्नितपुस्तकपाठः ।

३ शूलं शलन्ती कुण्डी चेति ख, चिह्नितपुस्तकपाठः ।

४ स्कन्दगणा दश विनायका इति ख, चिह्नितपुस्तकपाठः ।

५ अत्र चण्डिकादशहस्तेषु खड्गशूलारिशक्तिधृगिति युक्तःपाठः । अस्मल्लब्धपुस्तकपञ्चकेषु नायं पाठः ।

## अथ त्रिपञ्चाशत्तमोऽध्यायः ।

### लिङ्गलक्षणं ।

भगवानुवाच । लिङ्गादिलक्षणं वक्ष्ये कमलोद्भव तच्छृणु ।
दैर्घ्यार्द्धं वसुभिर्भक्त्वा त्यक्त्वा भागत्रयं ततः ॥ १ ॥
विष्कम्भं भूतभागैस्तु चतुरस्रन्तु कारयेत् ।
आयामं मूर्त्तिभिर्भक्त्वा एकद्वित्रिक्रमान् न्यसेत् ॥ २ ॥
ब्रह्मविष्णुशिवांशेषु वर्द्धमानोयमुच्यते ।
चतुरस्रस्य वर्णार्द्धं गुह्यकोणेषु लाञ्छयेत् ॥ ३ ॥
अष्टाग्रं वैष्णवं भागं सिध्यत्येव न संशयः ।
षोडशास्रं ततः कुर्य्याद्द्वात्रिंशास्रं ततः पुनः ॥ ४ ॥
चतुःषष्ट्यस्रकं कृत्वा वर्त्तुलं साधयेत्ततः ।
कर्त्तयेदथ लिङ्गस्य शिरो वै देशिकोत्तमः ॥ ५ ॥
विस्तारमथ लिङ्गस्य अष्टधा संविभाजयेत् ।
भागार्द्धार्द्धन्तु सन्त्यज्य छत्राकारं शिरो भवेत् ॥ ६ ॥
त्रिषु भागेषु सदृशमायामं यस्य विस्तरं ।
तद्विभागसमं लिङ्गं सर्वकामफलप्रदं ॥ ७ ॥
दैर्घ्यस्य तु चतुर्थेन विष्कम्भं देवपूजिते ।
सर्वेषामेव लिङ्गानां लक्षणं शृणु साम्प्रतम् ॥ ८ ॥
मध्यसूत्रं समासाद्य ब्रह्मरुद्रान्तिकं(१) बुधः ।
षोडशाङ्गुललिङ्गस्य षड्भागैर्भाजितो यथा ॥ ९ ॥
तद्वैयमनसूत्राभ्यां मानमन्तरमुच्यते ।
यवाष्टमुत्तरे कार्य्यं शेषाणां यवहानितः ॥ १० ॥
अधोभागं त्रिधा कृत्वा त्वर्द्धमेकं परित्यजेत् ।

---

१ ब्रजेद्रात्यन्तिकमिति ग, चिह्नितपुस्तकपाठः ।

अष्टधा तद्द्वयं कृत्वा ऊर्द्ध्वभागत्रयं त्यजेत् ॥ ११ ॥
ऊर्द्ध्वञ्च पञ्चमाद्भागाद् भ्राम्य रेखां प्रलम्बयेत्।
भागमेकं परित्यज्य सङ्गमं कारयेत्तयोः ॥ १२ ॥
एतत् स्वाधारणं प्रोक्तं लिङ्गानां लक्षणं मया ।
सर्वसाधारणं वक्ष्ये पिण्डिकान्ताग्निबोध मे ॥ १३ ॥
ब्रह्मभागप्रवेशञ्च ज्ञात्वा लिङ्गस्य चोच्छ्रयं ।
न्यसेद् ब्रह्मशिलां विद्वान् सम्यक्कूर्मशिलोपरि ॥ १४ ॥
तथा समुच्छ्रयं ज्ञात्वा पिण्डिकां प्रविभाजयेत् ।
द्विभागमुच्छ्रितं पीठं विस्तारं लिङ्गसम्मितम् ॥ १५ ॥
त्रिभागं मध्यतः खातं कृत्वा पीठं(१) विभाजयेत् ।
स्वमानार्द्धत्रिभागेण बाहुल्यं परिकल्पयेत् ॥ १६ ॥
बाहुल्यस्य त्रिभागेण मेखलामथ कल्पयेत् ।
खातं स्यान्मेखलातुल्यं क्रमान्निम्नन्तु कारयेत् ॥ १७ ॥
मेखलाषोडशांशेन खातं वा तत्प्रमाणतः ।
उच्छ्रायं तस्य पीठस्य विकाराङ्कं तु(२) कारयेत् ॥ १८ ॥
भूमौ प्रविष्टमेकं तु भागेकैकेन(३) पिण्डिका ।
कण्ठं भागैस्त्रिभिः कार्यं भागेनैकेन पट्टिका ॥ १९ ॥
द्व्यंशेन चोर्द्ध्वपट्टन्तु(४) एकांशाः शेषपट्टिकाः ।
भागं भागं प्रविष्टन्तु यावत् कण्ठं ततः पुन ॥ २० ॥
निर्गमं भागमेकं तु यावद्वै शेषपट्टिका ।
प्रणालस्य त्रिभागेन निर्गमस्तु त्रिभागतः ॥ २१ ॥

---

१ मध्यतः कृत्वा ततः पीठमिति घ, चिह्नितपुस्तकपाठः ।
२ विकारांशांश्चेति घ, चिह्नितपुस्तकपाठः ।
३ भागेमेकेनेति ग, चिह्नितपुस्तकपाठः ।
४ द्व्यंशेपट्टन्तु इति ख, ग, चिह्नितपुस्तकपाठः ।

मूले त्र्यङ्गुल्यग्रविस्तारमग्रे त्र्यंशेन चाहृतः ।
ईषन्निम्नन्तु कुर्वीत खातं तच्चोत्तरेण वै ।
पिण्डिकासहितं लिङ्गमेतत् साधारणं स्मृतम् ॥ २२ ॥

इत्यादिमहापुराणे आग्नेये लिङ्गलक्षणं नाम
त्रिपञ्चाशत्तमोऽध्यायः ॥

---

## अथ चतुःपञ्चाशत्तमोऽध्यायः ।

### लिङ्गमानादिकथनं ।

भगवानुवाच । वक्ष्याम्यन्यप्रकारेण(१) लिङ्गमानादिकं शृणु ।
वक्ष्ये लवणजं लिङ्गं घृतजं बुद्धिवर्द्धनम् ॥ १ ॥
भूतये वस्त्रलिङ्गन्तु लिङ्गन्तात्कालिकं विदुः ।
पक्वापक्वं मृण्मयं स्यादपक्वात् पक्वजं वरं ॥ २ ॥
ततो दारुमयं पुण्यं दारुजात् शैलजं वरं ।
शैलाद्वरं तु मुक्ताजं ततो लौहं सुवर्णजं ॥ ३ ॥
राजतं कीर्त्तितं ताम्रं पैत्तलं भुक्तिमुक्तिदं ।
रङ्गजं(२) रसलिङ्गञ्च भुक्तिमुक्तिप्रदं वरं ॥ ४ ॥
रसजं रसलोहादिरत्नगर्भन्तु वर्धयेत् ।
मानादि नेष्टं सिद्धादि स्थापितेथ स्वयम्भुवि ॥ ५ ॥
वामे च स्वेच्छया तेषां पीठप्रासादकल्पना ।
पूजयेत् सूर्य्यविम्बस्थं दर्पणे प्रतिविम्बितं ॥ ६ ॥
पूज्यो हरस्तु सर्वत्र लिङ्गे पूर्णार्चनं भवेत् ।
हस्तोत्तरविधं शैलं(३) दारुजं तद्वदेव हि ॥ ७ ॥

---

१ प्रवक्ष्येऽहं प्रकारेणेति ग, चिह्नितपुस्तकपाठः ।

२ रत्नजमिति ख, चिह्नितपुस्तकपाठः ।

३ हस्ते तु विविधं शैलमिति ग, चिह्नितपुस्तकपाठः ।

चलमङ्गुलमानेन द्वारगर्भकरैः स्थितम् (१)।
अङ्गुलाद् गृहलिङ्गं स्याद्यावत् पञ्चदशाङ्गुलम्॥ ८॥
द्वारमानात् त्रिसङ्ख्याकं नवधा गर्भमानतः।
नवधा गर्भमानेन लिङ्गन्धाम्नि च पूजयेत्॥ ९॥
एवं लिङ्गानि षट्त्रिंशत् ज्ञेयानि ज्येष्ठमानतः।
मध्यमानेन षट्त्रिंशत् षट्त्रिंशदधमेन च॥ १०॥
इत्थमैक्येन लिङ्गानां शतमष्टोत्तरं भवेत्।
एकाङ्गुलादियच्चान्तं कन्यसञ्चलमुच्यते॥ ११॥
षडादिदशपर्यन्तञ्चलं लिङ्गञ्च मध्यमं।
एकादशाङ्गुलादि स्यात् ज्येष्ठं पञ्चदशान्तकम्॥ १२॥
षडङ्गुलं महारत्नै रत्नैरन्यैर्नवाङ्गुलम्।
रविभिर्हेमभारोत्थं लिङ्गं शेषैस्त्रिपञ्चभिः॥ १३॥
षोडशांशे च वेदांशे युगं लुप्तोर्द्धदेशतः।
द्वात्रिंशत्षोडशांशांश्च(२) कोणयोस्तु विलोपयेत्॥ १४॥
चतुर्निवेशनात् कण्ठा विंशतिस्त्रियुगैस्तथा(३)।
पार्श्वाभ्यां तु विलुप्ताभ्यां चललिङ्गं भवेद्वरं(४)॥ १५॥
धाम्नो युगत्तु नागांशैर्द्वारं स्त्रीनादितः क्रमात्।
लिङ्गद्वारोच्छ्रयाद्वांश् भवेत् पादोनतः क्रमात्॥ १६॥
गर्भार्द्धेनाधमं लिङ्गं भूतांशैः स्यात् त्रिभिर्वरं।
तयोर्म्मध्ये च सूत्राणि सप्त सम्पातयेत् समं॥ १७॥

---

१ चलमङ्गुलमानेन द्वारगर्भकरे स्थितमिति ग, चिह्नितपुस्तकपाठः।
२ द्वात्रिंशत्षोडशार्द्धेति ग, घ, ङ, चिह्नितपुस्तकत्रयपाठः।
३ विंशतिस्त्रिगुणैस्तथेति घ, चिह्नितपुस्तकपाठः।
४ चलत्रिङ्गं भवेद्वरमिति ग, घ, चिह्नितपुस्तकपाठः। चललिङ्गं भवेद् ध्रुवमिति ङ, चिह्नितपुस्तकपाठः।

एवं सूत्रैर्नव सूत्राणि भूतसूत्रेण मध्यमं ।
छन्तरो वामवामश्च(१) लिङ्गानां दीर्घता नव ॥ १८ ॥
हस्तादिवर्द्धते हस्तो यावत्सूत्रैर्नव पाणय: ।
हीनमध्योत्तमं लिङ्गं त्रिविधं त्रिविधात्मकम् ॥ १९ ॥
एकैकलिङ्गमध्येषु त्रीणि त्रीणि च पादशः ।
लिङ्गानि घटयेद्धीमान् षट्सु चाष्टोत्तरेषु च ॥ २० ॥
स्थिरदीर्घप्रमेयान्तु द्वारगर्भकरात्मिका ।
भागेशश्चाप्यमीशश्च देवेज्यन्तुल्यसञ्ज्ञितं ॥ २१ ॥
चत्वारि लिङ्गरूपाणि विष्कम्भेण तु लक्षयेत् ।
दीर्घमायान्वितं कृत्वा लिङ्गं कुर्य्यात् त्रिरूपकं ॥ २२ ॥
चतुरस्रास्त्रस्तश्च तत्त्वत्रयगुणात्मकं ।
लिङ्गानामीप्सितं दैर्घ्यं तेन कृत्वाङ्गुलानि वै ॥ २३ ॥
ध्वजाद्यायैः सुरैर्भूतैः शिखिभिर्व्वा हरेत् कृतिं ।
तान्यङ्गुलानि यच्छेषं लक्षयेच्च शुभाशुभं ॥ २४ ॥
ध्वजाद्या ध्वजसिंहेभवृषाः श्रेष्ठाः परे शुभाः ।
स्वरेषु षड्जगान्धारपञ्चमाः शुभदायकाः ॥ २५ ॥
भूतेषु च शुभा भूः स्यादग्निष्वाहवनीयकः ।
उक्तायामस्य चार्द्धांशे नागांशैर्भाजिते क्रमात् ॥ २६ ॥
रसभूतांशषष्ठांशत्र्यंशाधिकशरैर्भवेत् ।
आढ्यानाढ्यसुरेज्यार्कतुल्यानाञ्चतुरस्रता ॥ २७ ॥
पञ्चमं वर्द्धमानाख्यं व्यासाग्नाइप्रदर्शितः ।
द्विधा भेदा बहून्यत्र वक्ष्यन्ते विश्वकर्म्मतः ॥ २८ ॥
आढ्यादीनां त्रिधा स्थौल्याद्यवभूतं तदष्टधा (२) ।

१ अन्तरे वामवामे चेति ङ, चिह्नितपुस्तकपाठः ।

२ स्थौल्याद् यवभूत्याः तदष्टधा इति ख, चिह्नितपुस्तकपाठः ।

त्रिधा हस्ताञ्जिनाख्यञ्च युक्तं सर्वसमेन च (१) ॥ २९ ॥
पञ्चविंशतिलिङ्गानि नाद्ये(२) देवार्चिते तथा।
पञ्चसप्तभिरेकत्वाञ्जिनैर्भक्तैर्भवन्ति हि ॥ ३० ॥
चतुर्दशसहस्राणि चतुर्दशशतानि च।
एवमष्टाङ्गुलविस्तारो(३) नवैककरगर्भतः ॥ ३१ ॥
तेषां कोणार्द्धकोणस्थैश्छिन्द्यात् कोणानि (४) सूत्रकैः।
विस्तारं मध्यतः कृत्वा स्थाप्यं वा मध्यतस्त्रयं ॥ ३२ ॥
विभागादूर्द्ध्वमष्टास्रो(५) ह्यशस्रः स्याच्छिदांशकः।
पादाब्जान्वन्तको ब्रह्मा नाभ्यन्तो विष्णुरित्यतः ॥ ३३ ॥
मूर्द्ध्वान्तो भूतभागेभ्यो व्यक्तोऽव्यक्तं च तद्वति।
पञ्चलिङ्गव्यवस्थायां शिरो वर्त्तुलमुच्यते ॥ ३४ ॥
छत्राभं कुक्कुटाभं वा बालेन्दुप्रतिमाकृतिः (६)।
एकैकस्य चतुर्भेदैः (७) काम्यभेदात् फलं वदे ॥ ३५ ॥
लिङ्गमस्तकविस्तारं वसुभक्तन्तु कारयेत्।
आद्यभागं चतुर्द्धा तु(८) विस्तारोच्छ्रायतो भजेत् ॥ ३६ ॥
चत्वारि तत्र सूत्राणि(९) भागभागानुपातनात्।

---

१ पूजयेत् सर्व्वमेव चेति ङ, चिह्नितपुस्तकपाठः।

२ नाद्ये देवार्च्चित इति ख, ग, चिह्नितपुस्तकपाठः।

३ एवमष्टाङ्गुलविन्यास इति ग, घ, चिह्नितपुस्तकपाठः।

४ छिन्द्यात् कोणानीति ख, चिह्नितपुस्तकपाठः। छिन्द्यात् कोणाणि इति ङ, चिह्नितपुस्तकपाठः।

५ द्विभागादूर्द्धमष्टास्र इति ख, ङ, चिह्नितपुस्तकपाठः।

६ बालेन्दुवपुषाकृतिरिति ख, ग, घ, चिह्नितपुस्तकपाठः।

७ चतुर्भागैरिति ङ, चिह्नितपुस्तकपाठः।

८ अन्यभागमिति ग, घ, चिह्नितपुस्तकपाठः।

९ चत्वारि मत्र सूत्राणि इति ख, ग, घ, ङ, चिह्नितपुस्तकचतुष्टयपाठः।

पुण्डरीकन्तु भागेन विशालाख्यं विलोपनात् ॥ ३७ ॥
त्रिभागतनात्तु श्रीवत्सं शत्रुघ्नं द्दलोपनात् ।
शिरः सर्व्वसमे श्रेष्ठं कुक्कुटाभं सुराङ्कये(१) ॥ ३८ ॥
चतुर्भागात्मके लिङ्गे त्रपुषं द्वयलोपनात् ।
अनाद्यस्य शिरः प्रोक्तमर्द्धचन्द्रं शिरः शृणु ॥ ३९ ॥
अंशात् प्रान्ते युगांशैश्च त्रिकद्वान्यामृताक्षकं (२) ।
पूर्णबालेन्दुकुमुदं द्वित्रिवेदक्षयात् क्रमात् ॥ ४० ॥
चतुस्त्रिरेकवदनं मुखलिङ्गमतः शृणु ।
पूजाभागं प्रकर्त्तव्यं मूर्ध्वाग्निपदकल्पितं (३) ॥ ४१ ॥
अर्कांशं पूर्ववत् त्यक्ता षट् स्थानानि विवर्त्तयेत् ।
शिरोन्नतिः प्रकर्त्तव्या ललाटं नासिका ततः ॥ ४२ ॥
वदनं चिवुकं ग्रीवा युगभागैर्भुजाक्षिभिः ।
कराभ्यां मुकुलीकृत्य(४) प्रतिमायाः प्रमाणतः ॥ ४३ ॥
मुखं प्रति समः कार्य्यो विस्तारादष्टमांशतः ।
चतुर्मुखं मया प्रोक्तं त्रिमुखञ्चोच्यते शृणु ॥ ४४ ॥
कर्णपादाधिकास्तस्य ललाटादीनि निर्द्दिशेत् ।
भुजौ चतुर्भिर्भागैस्तु कर्त्तव्यौ पश्चिमोर्ज्जितं ॥ ४५ ।
विस्तरादष्टमांशेन मुखानां प्रतिनिर्गमः ।
एकवक्त्रं तथा कार्य्यं पूर्वस्यां सौम्यलोचनं ॥ ४६ ॥
ललाटनासिकावक्त्रग्रीवायाश्च विवर्त्तयेत् ।

---

१ कुक्कुटाण्डं सुधाह्वये इति ख, चिह्नितपुस्तकपाठः ।

२ द्विकद्वान्या सुताक्षयमिति ख, चिह्नितपुस्तकपाठः ।

३ मूलाग्निपदकल्पितमिति ख, चिह्नितपुस्तकपाठः, मुखभागं प्रकर्त्तव्यं मूलाग्निपद-कल्पितमिति ङ, चिह्नितपुस्तकपाठः ।

४ कर्णाभ्यां कुण्डलीकृत्येति ग, चिह्नितपुस्तकपाठः ।

भुजाश्च पञ्चमांशेन(१) भुजस्तीनं विवर्त्तयेत् ॥ ४७ ॥
विस्तारस्य षडंशेन मुखे निर्गमनं स्मृतं ।
सर्वेषां मुखलिङ्गानां त्रपुषं वाथ कुक्कुट ॥ ४८ ॥

इत्यादिमहापुराणे आग्नेये व्यक्ताव्यक्तलक्षणं नाम
चतुःपञ्चाशत्तमोऽध्यायः ।

---

## अथ पञ्चपञ्चाशत्तमोऽध्यायः ।

### पिण्डिकालक्षणकथनं ।

भगवानुवाच । अतः परं प्रवक्ष्यामि प्रतिमानान्तु पिण्डिकाम् ।
दैर्घ्येण प्रतिमातुल्या तदर्द्धेन तु विस्तृता ॥ १ ॥
उच्छ्रितायामतोऽर्द्धेन सुविस्तारार्द्धभागतः ।
तृतीयेन तु वा तुल्यं(२) तत्त्रिभागेण मेखला ॥ २ ॥
खातं च तत्प्रमाणं तु किञ्चिदुत्तरतो नतम् ।
विस्तारस्य चतुर्थेन प्रणालस्य विनिर्गमः ॥ ३ ॥
सममूलस्य विस्तारमग्रे कुर्य्यात्तदर्द्धतः ।
विस्तारस्य तृतीयेन तोयमार्गन्तु कारयेत् ॥ ४ ॥
पिण्डिकार्द्धेन वा तुल्यं(३) दैर्घ्यमीशस्य(४) कीर्त्तितम् ।
ईशं वा(५) तुल्यदीर्घञ्च ज्ञात्वा सूत्रं प्रकल्पयेत् ॥ ५ ॥

---

१ भुजार्द्धपञ्चमांशेनेति ङ, चिह्नितपुस्तकपाठः ।
२ त्रिभागेण तु बाहुल्यमिति ङ, चिह्नितपुस्तकपाठः ।
३ पिण्डिकार्द्धेन बाहुल्यमिति ङ, चिह्नितपुस्तकपाठः ।
४ दैर्घ्यं कुम्भस्येति ग, ङ, चिह्नितपुस्तकपाठः ।
५ कुम्भमाङ्गल्यदीर्घस्येति ङ, चिह्नितपुस्तकपाठः ।

उच्छ्रायं पूर्ववत् कुर्य्याद्भागषोडशसङ्ख्यया।
अधः षट्कं द्विभागन्तु कण्ठं कुर्यात्त्रिभागकम् ॥ ६ ॥
शेषास्त्वेकैकशः कार्याः प्रतिष्ठानिर्गमास्तथा।
पट्टिका पिण्डिका चेयं सामान्यप्रतिमासु च ॥ ७ ॥
प्रासादद्वारमानेन प्रतिमाद्वारमुच्यते(१)।
गजव्यालकसंयुक्ता प्रभा स्यात् प्रतिमासु च ॥ ८ ॥
पिण्डिकापि यथाशोभं कर्त्तव्या सततं हरेः।
सर्वेषामेव देवानां विष्णूक्तं मानमुच्यते।
देवीनामपि सर्वासां लक्ष्म्युक्तं मानमुच्यते ॥ ९ ॥

इत्यादिमहापुराणे आग्नेये पिण्डिकालक्षणं नाम
पञ्चपञ्चाशत्तमोऽध्यायः ॥

---

## अथ षट्पञ्चाशत्तमोऽध्यायः।

### दिक्पालयागकथनं।

भगवानुवाच। प्रतिष्ठापञ्चकं वक्ष्ये प्रतिमात्मा तु पूरुषः।
प्रकृतिः पिण्डिका लक्ष्मीः प्रतिष्ठा योगकस्तयोः ॥ १ ॥
इच्छाफलार्थिभिस्तस्मात्प्रतिष्ठा क्रियते नरैः।
गर्भसूत्रं तु निःसार्य(२) प्रासादस्यायतो गुरुः ॥ २ ॥
अष्टषोडशविंशान्तं मण्डपञ्चाश्रमादिकम्।
स्नानार्थं कलशार्थञ्च यागद्रव्यार्थमर्द्धतः ॥ ३ ॥
त्रिभागेणार्द्धभागेन वेदिं कुर्यात्तु शोभनाम्।

---

१ प्रतिमाद्वयमुच्यते इति ख, ङ, चिह्नितपुस्तकपाठः।
२ गर्भसूत्रन्तु निर्म्मायेति ङ, चिह्नित पुस्तकपाठः।

कलशैर्घण्टिकाभिश्च वितानाद्यैश्च भूषयेत् ॥ ४ ॥
पञ्चगव्येन सम्प्रोक्ष्य सर्वद्रव्याणि धारयेत् ।
अलङ्कृतो गुरुर्विष्णुं ध्यात्वात्मानं प्रपूजयेत् ॥ ५ ॥
अङ्गुलीयप्रभृतिभिर्मूर्त्तिपान् वलयादिभिः ।
कुण्डे कुण्डे स्थापयेच्च मूर्त्तिपांस्तत्र पारगान् ॥ ६ ॥
चतुष्कोणे चार्द्धकोणे वर्त्तुले पद्मसन्निभे ।
पूर्वादौ तोरणार्थन्तु पिप्पलोडुम्बरौ वट ॥ ७ ॥
प्लक्षं सुशोभनं पूर्वं सुभद्रन्दक्षतोरणं ।
सुकर्म च सुहोत्रञ्च आप्ये सौम्ये समुच्छ्रयम् ॥ ८ ॥
पञ्चहस्तं तु संस्थाप्य स्योनापृथ्वीति पूजयेत् ।
तोरणस्तम्भमूले तु कलशाम्मङ्गलाङ्कुरान् ॥ ९ ॥
प्रदद्यादुपरिष्टाच्च कुर्य्याच्चक्रं सुदर्शनं ।
पञ्चहस्तप्रमाणन्तु ध्वजं कुर्य्याद्विचक्षणः ॥ १० ॥
वैपुल्यं चास्य कुर्वीत षोडशाङ्गुलसम्मितं ।
सप्तहस्तोच्छ्रितं वास्य कुर्य्यात् कुण्डं सुरोत्तम(१) ॥ ११ ॥
अरुणोग्निनिभश्चैव कृष्णः शुक्लोथ पीतकः ।
रक्तावर्णस्तथा श्वेतः श्वेतवर्णादिकक्रमात् (२) ॥ १२ ॥
कुमुदः कुमुदाक्षश्च पुण्डरीकोथ वामनः ।
शङ्कुकर्णः सर्व्वनेत्रः सुमुखः सुप्रतिष्ठितः ॥ १३ ॥
पूज्या कोटिगुणैर्युक्ताः पूर्व्वाद्या ध्वजदेवताः ।
जलाढकसपूरास्तु पक्वबिम्बोपमा घटाः ॥ १४ ॥

---

१ समाहित इति ङ, चिह्नितपुस्तकपाठः ।

२ श्वेतवर्णक्रमात् ध्वजा इति ङ, चिह्नितपुस्तकपाठः । कृष्णवर्णः क्रमाद्ध्वजा इति ङ, चिह्नितपुस्तकपाठः ।

अष्टाविंशाधिकशतं कालमण्डनवर्जिताः ।
सहिरण्या वस्त्रकण्ठाः सोदकाक्षीरशाखिनः ॥ १५ ॥
घटाः स्थाप्याश्च पूर्वादौ वेदिकायाश्च कोणगान् ।
चतुरः स्थापयेत् कुम्भानाजिघ्रेति च मन्त्रतः ॥ १६ ॥
कुम्भेष्वावाह्य शक्रादीन् पूर्वादौ पूजयेत् क्रमात् ।
इन्द्रागच्छ देवराज वज्रहस्त गजास्थित ॥ १७ ॥
पूर्वद्वारञ्च मे रक्ष देवैः सह नमोऽस्तु ते ।
त्रातारमिन्द्रमन्त्रेण अर्चयित्वा यजेद् बुधः ॥ १८ ॥
आगच्छाग्ने शक्तियुत(१) छागस्थ बलसंयुत ।
रक्षाग्नेयीं दिशं देवैः पूजां गृह्ण नमोऽस्तु ते ॥ १९ ॥
अग्निर्मूर्द्धेतिमन्त्रेण(२) यजेद्वा अग्नये नमः ।
महिषस्थ यमागच्छ दण्डहस्त महाबल ॥ २० ॥
रक्ष त्वं दक्षिणद्वारं वैवस्वत नमोऽस्तु ते ।
वैवस्वतं सङ्गमनमित्यनेन यजेद्यमं ॥ २१ ॥
नैर्ऋतागच्छ खड्गाढ्य बलवाहनसंयुत(३) ।
इदमर्घ्यमिदं पाद्यं रक्ष त्वं नैर्ऋतीं दिशं ॥ २२ ॥
एष ते नैर्ऋते मन्त्रेण यजेदर्घ्यादिभिर्नरः ।
मकरारूढ वरुण पाशहस्त महाबल ॥ २३ ॥
आगच्छ पश्चिमं द्वारं रक्ष रक्ष नमोऽस्तु ते ।
उरुं हि राजा वरुणं यजेदर्घ्यादिभिर्गुरुः ॥ २४ ॥
आगच्छ वायो सबल ध्वजहस्त सवाहन ।
वायव्यं रक्ष देवैस्त्वं समरुद्भिर्नमोऽस्तु ते ॥ २५ ॥

१ शक्तिहस्तेति क, चिह्नितपुस्तकपाठः ।
२ अग्निमूर्द्धेति चतुर्थ्याद्यैरिति ख, चिह्नितपुस्तकपाठः ।
३ नरवाहनसंयुत इति ख, क, चिह्नितपुस्तकपाठः ।

वात इत्यादिभिर्वायोर्वेदोक्तमो वायवेपि वा ।
आगच्छ सोम सबल गदाहस्त सवाहन ॥ २६ ॥
रक्ष त्वमुत्तरद्वारं सकुबेर नमोस्तु ते ।
सोमं राजानमिति वा यजेत्सोमाय वै नमः ॥ २७ ॥
आगच्छेशान सबल शूलहस्त वृषस्थित ।
यज्ञमण्डपस्यैशानीं दिशं रक्ष नमोस्तु ते ॥ २८ ॥
ईशानमस्येति यजेदीशानाय नमोपि वा ।
ब्रह्मन्नागच्छ हंसस्थ स्रुक्स्रुवव्यग्रहस्तक ॥ २९ ॥
सलोकोर्द्ध्वां दिशं रक्ष यज्ञस्याज नमोस्तु ते ।
हिरण्यगर्भेति यजेन्नमस्ते ब्रह्मणेपि वा ॥ ३० ॥
अनन्तागच्छ चक्राढ्य कूर्मस्थाहिगणेश्वर ।
अधोदिशं रक्ष रक्ष अनन्तेश नमोस्तु ते ।
नमोस्तु सर्पेति यजेदनन्ताय नमोपि वा ॥ ३१ ॥

इत्यादिमहापुराणे आग्नेये दिक्पतियागो नाम
षट्पञ्चाशत्तमोध्यायः ॥

---

## अथ सप्तपञ्चाशोध्यायः ।

### कुम्भाधिवासविधिः ।

भगवानुवाच । भूमेः परिग्रहं कुर्य्यात् क्षिपेद्व्रीहींश्च सर्षपान् ।
नारसिंहेन रक्षोघ्नान् प्रोक्षयेत् पञ्चगव्यतः ॥ १ ॥
भूमिं घटे तु सम्पूज्य सरत्ने साङ्कके हरिं ।
अस्त्रमन्त्रेण करकं(१) तत्र चाष्टशतं यजेत् ॥ २ ॥
अच्छिन्नधारया सिञ्चन् व्रीहीन् संस्कृत्य धारयेत् ।

---

१ अस्त्रमन्त्रेण कवचमिति ङ, चिह्नितपुस्तकपाठः ।

प्रदक्षिणं परिभ्राम्य कलशं विकिरोपरि ॥ ३ ॥
सवस्त्रे कलशे भूयः पूजयेदच्युतं श्रियं ।
योगे योगेति मन्त्रेण न्यसेच्छय्यान्तु मण्डले ॥ ४ ॥
कुशोपरि तूलिकाञ्च शय्यायां दिग्विदिक्षु च ।
विद्याधिपान् यजेद्विष्णुं मधुघातं त्रिविक्रमं ॥ ५ ॥
वामनं दिक्षु वाय्वादौ(१) श्रीधरञ्च हृषीकपं ।
पद्मनाभं दामोदरमैशान्यां स्नानमण्डपे ॥ ६ ॥
अभ्यर्च्य पश्चादैशान्यां चतुष्कुम्भे(२) सवेदिके ।
स्नानमण्डपके सर्वद्रव्याण्यानीय निक्षिपेत् ॥ ७ ॥
स्नानकुम्भेषु कुम्भांस्तांश्चतुर्दिक्ष्वधिवासयेत् ।
कलशाः स्थापनीयास्तु अभिषेकार्थमादरात् ॥ ८ ॥
वटोदुम्बरकाश्वत्थांश्चम्पकाशोकश्रीद्रुमान्(३) ।
पलाशार्जुनप्लक्षांस्तु कदम्बवकुलाम्रकान् ॥ ९ ॥
पल्लवांस्तु समानीय पूर्वकुम्भे(४) विनिक्षिपेत् ।
पद्मकं रोचनां दूर्व्वां दर्भपिञ्जलमेव च ॥ १० ॥
जातीपुष्पं कुन्दपुष्पञ्चन्दनं रक्तचन्दनं ।
सिद्धार्थं तगरञ्चैव तण्डुलं दक्षिणे न्यसेत् ॥ ११ ॥
सुवर्णं रजतञ्चैव कूलद्वयमृदन्तथा ।
नद्याः समुद्रगामिन्या विशेषात् जाह्नवीमृदं ॥ १२ ॥
गोमयञ्च यवान् शालींस्तिलांश्चैवापरे न्यसेत् ।
विष्णुपर्णीं श्यामलतां भृङ्गराजं शतावरीं ॥ १३ ॥

---

१ दिक्षु यक्षाद्याविति ङ, चिह्नितपुस्तकपाठः ।

२ चतुस्तम्भे इति ग, चिह्नितपुस्तकपाठः ।

३ पद्मकाशोकश्रीद्रुमानिति ग, चिह्नितपुस्तकपाठः ।

४ पर्णकुम्भ इति ङ, चिह्नितपुस्तकपाठः ।

सहदेवां महादेवीं(१) बलां व्याघ्रीं सलक्ष्मणां ।
ऐशान्यामपरे कुम्भे मङ्गल्याश्चिनिवेशयेत् ॥ १४ ॥
वल्मीकमृत्तिका सप्तस्थानोत्थामपरे न्यसेत् ।
जाह्नवीवालुकातोयं विन्यसेदपरे घटे ॥ १५ ॥
वराहवृषनागेन्द्रविषाणोद्धृतमृत्तिकां ।
मृत्तिकां पद्ममूलस्य कुशस्य त्वपरे न्यसेत् ॥ १६ ॥
तीर्थपर्वतमृद्भिश्च युक्तमप्यपरे न्यसेत् ।
नागकेशरपुष्पञ्च काश्मीरमपरे न्यसेत् ॥ १७ ॥
चन्दनागुरुकर्पूरैः पुष्पं चैवापरे न्यसेत् ।
वैदूर्यं विद्रुमं मुक्तां स्फटिकं वज्रमेव च ॥ १८ ॥
एतान्येकत्र निक्षिप्य स्थापयेद्देवसत्तम ।
नदीनदतडागानां सलिलैरपरं न्यसेत् ॥ १९ ॥
एकाशीतिपदे धान्यान्मण्डपे कलशान् न्यसेत् ।
गन्धोदकाद्यैः सम्पूर्णान् श्रीसूक्तेनाभिमन्त्रयेत् ॥ २० ॥
यवं सिद्धार्थकं गन्धं कुशाग्रं चाक्षतं तथा ।
तिलान् फलं तथा पुष्पमर्घ्यार्थं पूर्वतो न्यसेत् ॥ २१ ॥
पद्मं श्यामलतां दूर्वां विष्णुपर्णीं कुशांस्तथा ।
पाद्यार्थं दक्षिणे भागे मधुपर्कं तु दक्षिणे(२) ॥ २२ ॥
कक्कोलकं लवङ्गञ्च तथा जातीफलं शुभं ।
उत्तरे ह्याचमनाय अग्नौ दूर्वाक्षतान्वितं ॥ २३ ॥
पात्रं नीराजनार्थं च तथोद्वर्त्तनमानिले ।
गन्धपुष्पान्वितं पात्रमैशान्यां पात्रके न्यसेत् ॥ २४ ॥

---

१ सहदेवां सिंहपुच्छीमिति ख, चिह्नितपुस्तकपाठः। सहदेवां जयां सिंहीमिति ङ, चिह्नितपुस्तकपाठः।

२ मधुपर्कन्तु पश्चिमे इति ङ, चिह्नितपुस्तकपाठः।

सुरामांसीं चामलकं सहदेवां निशादिकं ।
षष्टिदीपान्नरसेदष्टौ न्यसेन्नीराजनाय च ॥ २५ ॥
शङ्खं चक्रञ्च श्रीवत्सं कुलिशं पङ्कजादिकं ।
हेमादिपात्रे कृत्वा तु नानावर्णादिपुष्पकं ॥ २६ ॥

इत्यादिमहापुराणे आग्नेये कलशाधिवासो नाम
सप्तपञ्चाशत्तमोऽध्यायः ॥

---

## अथ अष्टपञ्चाशत्तमोऽध्यायः ।

### स्नानादिविधिः ।

भगवानुवाच । ऐशान्यां जनयेत् कुण्डं गुरुर्व्वह्निञ्च वैष्णवं ।
गायत्र्याष्टशतं कृत्वा सम्पातविधिना घटान् ॥ १ ॥
प्रोक्षयेत् कारुशालायां शिल्पिभिर्मूर्त्तिपैर्व्रजेत् ।
तूर्य्यशब्दैः कौतुकञ्च बन्धयेद्दक्षिणे करे ॥ २ ॥
विष्णवे शिपिविष्टेति ऊर्णासूत्रेण सर्षपैः ।
पट्टवस्त्रेण कर्त्तव्यं देशिकस्यापि कौतुकं ॥ ३ ॥
मण्डपे(१) प्रतिमां स्थाप्य सवस्त्रां पूजितां स्तुवन् ।
नमस्तेऽर्च्चे सुरेशानि प्रणीते विश्वकर्म्मणा ॥ ४ ॥
प्रभाविताशेषजगद्धात्रि तुभ्यं नमो नमः ।
त्वयि सम्पूजयामीशे नारायणमनामयं ॥ ५ ॥
रहिता शिल्पिदोषैस्त्वमृद्धियुक्ता सदा भव ।
एवं विज्ञाप्य प्रतिमां नयेत्तां स्नानमण्डपं ॥ ६ ॥
शिल्पिनन्तोषयेद्द्रव्यैर्गुरवे गां प्रदापयेत् ।
चित्रं देवेति मन्त्रेण नेत्रे चोन्मीलयेत्ततः ॥ ७ ॥

---

१ मण्डले इति ग, चिह्नितपुस्तकपाठः ।

अग्निर्ज्योतीति दद्दिग्व दद्याद्वै भद्रपीठके ।
ततः शुक्लानि पुष्पाणि घृतं सिद्धार्थकं तथा ॥ ८ ॥
दूर्व्वां कुशाग्रं देवस्य दद्याच्छिरसि देशिकः ।
मधुवातेति मन्त्रेण नेत्रे चाभ्यञ्जयेद् गुरुः ॥ ९ ॥
हिरण्यगर्भमन्त्रेण इमं मेति च कीर्त्तयेत् ।
घृतेनाभ्यञ्जयेत् पश्चात् पठन् घृतवतीं पुनः ॥ १० ॥
मसूरपिष्टेनोद्वर्त्य(१) अतो देवेति कीर्त्तयन् ।
क्षालयेदुष्णतोयेन सप्त तेऽग्नेति देशिकः ॥ ११ ॥
द्रुपदादिवेत्यनुलिम्पेदापो हि ष्ठेति सेचयेत् ।
नदीजैस्तीर्थजैः स्नानं पावमानीति रत्नजैः ॥ १२ ॥
समुद्रं गच्छ चन्दनैस्तीर्थमृत्कलशेन च ।
शन्नो देवीः स्नापयेच्च गायत्र्याप्युष्णवारिणा(२) ॥ १३ ॥
पञ्चमृद्भिर्हिरण्येति स्नापयेत्परमेश्वरं ।
सिकताद्भिरिमं मेति वल्मीकोदघटेन च ॥ १४ ॥
तद्विष्णोरिति चौषध्यद्भिर्या ओषधीति मन्त्रतः ।
यज्ञायज्ञेति काषायैः पञ्चभिर्गव्यकैस्ततः ॥ १५ ॥
पयः पृथिव्यां मन्त्रेण याः फलिनी फलाम्बुभिः ।
विश्वतश्चक्षुः सौम्येन पूर्व्वेण कलसेन च ॥ १६ ॥
सोमं राजानमित्येवं विष्णो रराटं दक्षतः ।
हंसः शुचिः पश्चिमेन कुर्य्यादुद्वर्त्तनं हरेः ॥ १७ ॥
मूर्द्धानन्दिवमन्त्रेण धात्रीं मांसीं च के ददेत्(३) ।
मानस्तोकेति मन्त्रेण गन्धद्वारेति गन्धकैः ॥ १८ ॥

१ मयूरपिच्छेनोद्वर्त्य इति घ, चिह्नितपुस्तकपाठः ।
२ गायत्र्या गन्धवारिणा इति ग, घ, ङ, चिह्नितपुस्तकत्रयपाठः ।
३ धात्रीमांस्युदकेन चेति घ, चिह्नितपुस्तकपाठः ।

इदमापेति च घटैरेकाशीतिपदस्थितैः।
एह्येहि भगवन् विष्णो लोकानुग्रहकारक ॥ १९ ॥
यज्ञभागं गृहाणेमं वासुदेव नमोऽस्तु ते।
अनेनावाह्य देवेशं कुर्यात् कौतुकमोचनं ॥ २० ॥
मुञ्चामि त्वेति सूक्तेन देशिकस्यापि मोचयेत्।
हिरण्मयेन पाद्यं दद्यादतो देवेति चार्घ्यकं ॥ २१ ॥
मधुवाता मधुपर्कं मयि गृह्णामि चाचमेत्।
अक्षन्नमीमदन्तेति किरेद्दर्वाक्षतं बुधः ॥ २२ ॥
काण्डान्निर्मञ्जनं कुर्याद्गन्धं गन्धवतीति च।
उन्नयामीति(१) माल्यञ्च इदं विष्णुः पवित्रकं ॥ २३ ॥
बृहस्पते वस्त्रयुग्मं वेदाहमित्युत्तरीयकं।
महाव्रतेन सकलीपुष्पं चौषधयः क्षिपेत् ॥ २४ ॥
धूपं दद्याद्धूरसीति विभ्राट्सूक्तेन चाञ्जनं।
युञ्जन्तीति च तिलकं दीर्घायुष्ट्वेति माल्यकं ॥ २५ ॥
इन्द्रच्छत्रेति छत्रन्तु आदर्शन्तु विराजतः।
चामरन्तु विकर्णेन भूषां रथन्तरेण च ॥ २६ ॥
व्यजनं वायुदेवत्यैर्मुञ्चामि त्वेति पुष्पकं।
वेदाद्यैः संस्तुतिं कुर्याद्धरेः पुरुषसूक्ततः ॥ २७ ॥
सर्वमेतत्समं कुर्यात् पिण्डिकादौ हरादिके।
देवस्योत्थानसमये सौपर्णं सूक्तमुच्चरेत् ॥ २८ ॥
उत्तिष्ठेति समुत्थाप्य शय्याया मण्डपे नयेत्।
शाकुनेनैव सूक्तेन देवं ब्रह्मरथादिना ॥ २९ ॥
अतो देवेति सूक्तेन प्रतिमां पिण्डिकां तथा।
श्रीसूक्तेन च शय्यायां विष्णोस्तु शकलीकृतिः ॥ ३० ॥

---

१ तच्छायामीति इति च, चिह्नितपुस्तकपाठः।

मृगराजं वृषं नागं व्यजनं कलशं तथा।
वैजयन्तीं तथा भेरीं दीपमित्यष्टमङ्गलं॥ ३१॥
दर्शयेदश्वसूक्तेन पाददेशे त्रिपादिति।
उखां पिधानकं पात्रमम्बिकां दर्व्विकां ददेत्॥ ३२॥
मुषलोलूखलं दद्याच्छिलां सम्मार्जनीं तथा।
तथा भोजनभाण्डानि गृहोपकरणानि च॥ ३३॥
शिरोदेशे च निद्राख्यं वस्त्ररत्नयुतं घटं।
खण्डखाद्यैः पूरयित्वा स्नपनस्य विधिः स्मृतः॥ ३४॥

इत्यादिमहापुराणे आग्नेये स्नपनादिविधानं नाम अष्टपञ्चाशोऽध्यायः॥

---

## अथोनषष्टितमोऽध्यायः।

### अधिवासनकथनं।

भगवानुवाच। हरेः सान्निध्यकरणमधिवासनमुच्यते।
सर्व्वज्ञं सर्वगं ध्यात्वा आत्मानं पुरुषोत्तमं॥ १॥
ओंकारेण समायोज्य चिच्छक्तिमभिमानिनीं(१)।
निःसार्य्यात्मैकतां कृत्वा खस्मिन्(२) सर्वगते विभौ॥ २॥
योजयेन्मरुता पृथ्वीं वह्निबीजेन दीपयेत्।
संहरेद्वायुना चाग्निं वायुमाकाशतो नयेत्॥ ३॥

---

१ मतिशालिनीमिति ख, चिह्नितपुस्तकपाठः।
२ तत्त्वा पुंसीति क, चिह्नितपुस्तकपाठः।

अधिभूतादिदेवैस्तु साध्याख्यैर्विभवैः(१) सह ।
तन्मात्रपात्रकान् कृत्वा संहरेत्तत् क्रमाद् बुधः ॥ ४ ॥
आकाशं मनसाहृत्य मनोऽहङ्करणे कुरु(२) ।
अहङ्कारञ्च महति तञ्चाप्यव्याकृते नयेत् ॥ ५ ॥
अव्याकृतं ज्ञानरूपे वासुदेवः स ईरितः (३) ।
स तामव्याकृतिं मायामवष्टभ्य सिसृक्षया ॥ ६ ॥
सङ्कर्षणं स शब्दात्मा स्पर्शाख्यमसृजत् प्रभुः ।
क्षोभ्य मायां स प्रद्युम्नं तेजोरूपं सञ्चासृजत् ॥ ७ ॥
अनिरुद्धं रसमात्रं ब्रह्माणं गन्धरूपकं ।
अनिरुद्धः स च ब्रह्मा अप आदौ ससर्ज ह ॥ ८ ॥
तस्मिन् हिरण्मयञ्चाण्डं सोऽसृजत् पञ्चभूतवत् ।
तस्मिन् सङ्क्रामिते जीवे(४) शक्तिरात्मोपसंहृता ॥ ६ ॥
प्राणो जीवेन संयुक्तो वृत्तिमानिति शब्द्यते ।
जीवोव्याहृतिसञ्ज्ञस्तु प्राणेष्वाध्यात्मिकः स्मृतः ॥ १० ॥
प्राणैर्युक्ता ततो बुद्धिः सञ्जाता चाष्टमूर्त्तिकी(५) ।
अहङ्कारस्ततो जज्ञे मनस्तस्मादजायत ॥ ११ ॥
अर्थाः प्रजज्ञिरे पञ्च सङ्कल्पादियुतास्ततः ।
शब्दः स्पर्शश्च रूपञ्च रसो गन्ध इति स्मृता ॥ १२ ॥
ज्ञानशक्तियुतान्येतैरारब्धानीन्द्रियाणि तु ।

---

१ साध्यार्थैर्विभवैरिति ख, ग, चिह्नितपुस्तकद्वयपाठः । साध्याद्यैर्विभवैरिति ङ, चिह्नितपुस्तकपाठः ।

२ मनसाहृत्य मनोऽहङ्करणे चरे इति घ, चिह्नितपुस्तकपाठः ।

३ वासुदेवे समाहित इति ङ, चिह्नितपुस्तकपाठः ।

४ सङ्क्रमते जीव इति ख, चिह्नितपुस्तकपाठः ।

५ चाष्टवृत्तिकीति ङ, चिह्नितपुस्तकपाठः ।

त्वक्श्रोत्रघ्राणचक्षूंषि जिह्वाबुद्धीन्द्रियाणि तु ॥ १३ ॥
पादौ पायुस्तथा पाणी वागुपस्थश्च पञ्चमः।
कर्म्मेन्द्रियाणि चैतानि पञ्चभूतान्यतः शृणु ॥ १४ ॥
आकाशवायुतेजांसि सलिलं पृथिवी तथा।
स्थूलमेभिः शरीरन्तु सर्वाधारं प्रजायते ॥ १५ ॥
एतेषां वाचका मन्त्रा न्यासायोक्तास्त उत्तमाः।
जीवभूतं मकारन्तु देवस्य(१)व्यापकं न्यसेत् ॥ १६ ॥
प्राणतत्त्वं भकारन्तु जीवोपाधिगतं न्यसेत्।
हृदयस्थं बकारन्तु बुद्धितत्त्वं न्यसेद् बुधः ॥ १७ ॥
फकारमपि तत्रैव अहङ्कारमयं न्यसेत्।
मनस्तत्त्वं पकारन्तु न्यसेत्सङ्कल्पसम्भवं ॥ १८ ॥
शब्दतन्मात्रतत्त्वन्तु नकारं मस्तके न्यसेत्।
स्पर्शात्मकं धकारन्तु वक्त्रदेशे तु विन्यसेत् ॥ १९ ॥
दकारं रूपतत्त्वन्तु हृद्देशे विनिवेशयेत् (२)।
थकारं वस्तिदेशे तु रसतन्मात्रकं न्यसेत् ॥ २० ॥
तकारं गन्धतन्मात्रं जङ्घयोर्व्विनिवेशयेत्।
णकारं श्रोत्रयोर्न्न्यस्य ढकारं विन्यसेत्त्वचि ॥ २१ ॥
डकारं नेत्रयुग्मे तु रसनायां ठकारकं।
टकारं नासिकायान्तु ञकारं वाचि विन्यसेत् ॥ २२ ॥
झकारं करयोर्न्न्यस्य पाणितत्त्वं विचक्षणः।
जकारं पदयोर्न्न्यस्य छं पायौ चमुपस्थके ॥ २३ ॥
विन्यसेत् पृथिवीतत्त्वं ङकारं पादयुग्मके।
वस्तौ घकारं गं तत्त्वं तैजसं हृदि विन्यसेत् ॥ २४ ॥

---

१ मकारन्तु देवस्येति ङ, चिह्नितपुस्तकपाठः।

२ विनियोजयेदिति ङ, चिह्नितपुस्तकपाठः।

खकारं वायुतत्त्वञ्च नासिकायां निवेशयेत् ।
ककारं विन्यसेन्नित्यं खतत्त्वं मस्तके बुधः ॥ २५ ॥
हृत्पुण्डरीके विन्यस्य यकारं सूर्य्यदैवतं ।
द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः ॥ २६ ॥
कलाषोडशसंयुक्तं मकारं तत्र विन्यसेत् ।
तन्मध्ये चिन्तयेन्मन्त्री विन्दुं वह्निस्तु मण्डलं ॥ २७ ॥
हकारं (१) विन्यसेत्तत्र प्रणवेन सुरोत्तमः ।
ओं आं परमेष्ठ्यात्मने आं नमः पुरुषात्मने ॥ २८ ॥
ओं वां मनोनिवृत्त्यात्मने नाम्न विश्वात्मने नमः ।
ओं वं नमः सर्वात्मने इत्युक्ताः पञ्च शक्तयः (२) ॥ २९ ॥
स्थाने तु प्रथमा योज्या द्वितीया आसने मता ।
तृतीया शयने तद्वच्चतुर्थी यानकर्म्मणि (३) ॥ ३० ॥
प्रत्यर्चायां (४) पञ्चमी स्यात्पञ्चोपनिषदः स्मृताः ।
हुङ्कारं (५) विन्यसेन्मध्ये ध्यात्वा मन्त्रमयं हरिं ॥ ३१ ॥
यां मूर्त्तिं स्थापयेत्तस्मात् (६) मूलमन्त्रं न्यसेत्ततः ।
ओं नमो भगवते वासुदेवाय मूलकं ॥ ३२ ॥
शिरोघ्राणललाटेषु मुखकण्ठहृदि क्रमात् ।
भुजयोर्जङ्घयोरङ्घ्र्योः केशवं शिरसि न्यसेत् ॥ ३३ ॥
नारायणं न्यसेद्वक्त्रे ग्रीवायां माधवं न्यसेत् ।

---

१ क्षुंकारमिति ङ, चिह्नितपुस्तकपाठः ।

२ ओं षं परमेष्ठ्यात्मने यन्नमः पुरुषात्मने । लं नमो विश्वात्मने वं निवृत्त्यात्मने नमः ॥ मं नमः सर्वात्मने इत्युक्ताः पञ्च शक्तयः इति ङ, चिह्नितपुस्तकपाठः ।

३ दानकर्म्मणि इति ङ, चिह्नितपुस्तकपाठः ।

४ अभ्यर्च्चायामिति ख, चिह्नितपुस्तकपाठः ।

५ क्षकारमिति ख, चिह्नितपुस्तकपाठः ।

६ या मूर्त्तिः स्थाप्यते तस्यामिति ख, चिह्नितपुस्तकपाठः ।

गोविन्दं भुजयोर्न्यस्य विष्णुं च हृदये न्यसेत् ॥ ३४ ॥
मधुसूदनकं पृष्ठे वामनं जठरे न्यसेत् ।
कट्यान्त्रिविक्रमं न्यस्य जङ्घायां श्रीधरं न्यसेत् ॥ ३५ ॥
हृषीकेशं दक्षिणायां पद्मनाभं तु गुल्फके ।
दामोदरं पादयोश्च हृदयादिषडङ्गकं ॥ ३६ ॥
एतत् साधारणं प्रोक्तमादिमूर्त्तेस्तु सत्तम ।
अथवा यस्य देवस्य प्रारब्धं स्थापनं भवेत् ॥ ३७ ॥
तस्यैव मूलमन्त्रेण सजीवकरणं भवेत् ।
यस्या मूर्त्तेस्तु यन्नाम तस्याद्यं चाक्षरं च यत् ॥ ३८ ॥
तत् स्वरैर्द्वादशैर्भेद्य ह्यङ्गानि परिकल्पयेत् ।
हृदयादीनि देवेश मूलञ्च दशमाक्षरं ॥ ३९ ॥
यथा देवे तथा देहे(१) तत्त्वानि विनियोजयेत् ।
चक्राब्जमण्डले विष्णुं यजेद्गन्धादिना तथा (२) ॥ ४० ॥
पूर्व्ववच्चासनं ध्यायेत्सगात्रं(३) सपरिच्छदं ।
शुभचक्रं द्वादशारं ह्युपरिष्टाद्विचिन्तयेत् ॥ ४१ ॥
त्रिनाभिचक्रं द्विनेमि स्वरैस्तच्च समन्वितं ।
पृष्ठदेशे ततः प्राज्ञः प्रकृत्यादीन्निवेशयेत् ॥ ४२ ॥
पूजयेदारकाग्रेषु(४) सूर्य्यं द्वादशधा पुनः ।

---

१ यथा तत्त्वे तथा देहे इति ख, ग, घ, ङ, चिह्नितपुस्तकचतुष्टयपाठः ।

२ यजेद् गन्धादिना तत इति ख, चिह्नितपुस्तकपाठः । यजेदाकृतिभिस्तथा इति ग, चिह्नितपुस्तकपाठः ।

३ ध्यायेत् तन्मात्रमिति ग, चिह्नितपुस्तकपाठः । ध्यायेत् समात्रमिति ख, चिह्नित-पुस्तकपाठः ।

४ पूजयेद् द्वादशाग्रेषु इति ख, चिह्नितपुस्तकपाठः । पूजयेद् द्वादशारेषु इति घ, चिह्नितपुस्तकपाठः ।

कलाषोडशसंयुक्तं सोममन्त्र विचिन्तयेत् ॥ ४३ ॥
सबलं त्रितयं नाभौ चिन्तयेद्देशिकोत्तमः।
पद्मञ्च द्वादशदलं पद्ममध्ये विचिन्तयेत् ॥ ४४ ॥
तन्मध्ये पौरुषीं शक्तिं ध्यात्वाभ्यर्च्य च देशिकः (१)।
प्रतिमायां हरिं न्यस्य तत्र तं पूजयेत् सुरान् (२) ॥ ४५ ॥
गन्धपुष्पादिभिः सम्यक् साङ्गं सावरणं क्रमात्।
द्वादशाक्षरबीजैस्तु केशवादीन् समर्चयेत् ॥ ४६ ॥
द्वादशारे मण्डले तु लोकपालादिकं क्रमात्।
प्रतिमामर्चयेत् पश्चाद्गन्धपुष्पादिभिर्द्विजः ॥ ४७ ॥
पौरुषेण तु सूक्तेन श्रियाः सूक्तेन पिण्डिकां।
जननादिक्रमात् पश्चाज्जनयेद्वैष्णवानलं ॥ ४८ ॥
कृत्वाग्निं वैष्णवैर्मन्त्रैः कुर्य्याच्चान्त्युदकं बुधः।
तत् सिक्त्वा प्रतिमामूर्द्ध्नि वह्निप्रणयनं चरेत् ॥ ४९ ॥
दक्षिणाग्निं कृतमिति कुण्डेऽग्निं प्रणयेद्बुधः।
अग्निमग्नीति पूर्वे तु कुण्डेऽग्निं प्रणयेद्बुधः ॥ ५० ॥
उत्तरे प्रणयेदग्निमग्निमग्नी हवामहे।
अग्निप्रणयने मन्त्रस्त्वमग्ने ह्यग्निरुच्यते ॥ ५१ ॥
पलाशसमिधानान्तु अष्टोत्तरसहस्रकं।
कुण्डे कुण्डे होमयेच्च व्रीहीन् वेदादिकैस्तथा ॥ ५२ ॥
साज्यांस्तिलान् व्याहृतिभिर्मूलमन्त्रेण वै घृतं।
कुर्य्यात्ततः शान्तिहोमं मधुरत्रितयेन च ॥ ५३ ॥
द्वादशार्णैः स्पृशेत् पादौ नाभिं हृन्मस्तकं ततः।
घृतं दधि पयो हुत्वा स्पृशेन्मूर्द्धन्यथो ततः ॥ ५४ ॥

---

१ ध्यात्वा पश्चात् देशिक इति ङ. चिह्नितपुस्तकपाठः।
२ तत्र तान् पूजयेत् सुरानिति ग. चिह्नितपुस्तकपाठः।

स्पृष्ट्वा शिरोनाभिपादांश्चतस्रः स्थापयेन्नदीः (१)।
गङ्गा च यमुना गोदा क्रमान्नाम्ना सरस्वती ॥ ५५ ॥
दहेत्तु विष्णुगायत्र्या गायत्र्या श्रपयेच्चरुं।
होमयेच्च बलिं दद्यादुत्तरे भोजयेद्द्विजान् ॥ ५६ ॥
सामाधिपानां तुष्ट्यर्थं हेम गां गुरवे ददेत्।
दिक्पतिभ्यो बलिं दत्वा रात्रौ कुर्य्याच्च जागरं।
ब्रह्मगीतादिशब्देन सर्वभागधिवासनात् (२) ॥ ५७ ॥

इत्यादिमहापुराणे आग्नेये अधिवासनं नाम
ऊनषष्टितमोऽध्यायः ॥

---

## अथ षष्टितमोऽध्यायः।

### वासुदेवप्रतिष्ठादिविधिः।

भगवानुवाच। पिण्डिकास्थापनार्थन्तु गर्भागारं तु सप्तधा।
विभजेद् ब्रह्मभागे तु प्रतिमां स्थापयेद् बुधः ॥ १ ॥
देवमानुषपैशाचभागेषु न कदाचन।
ब्रह्मभागं परित्यज्य किञ्चिदाश्रित्य चाण्डज ॥ २ ॥
देवमानुषभागाभ्यां स्थाप्या यत्नात्तु पिण्डिका (३)।
नपुंसकशिलायान्तु रत्नन्यासं समाचरेत् ॥ ३ ॥
नारसिंहेन हुत्वाथ रत्नन्यासं (४) च तेन वै।

---

१ चतस्रः स्थापयेच्च गा इति ग, घ, ङ, चिह्नितपुस्तकत्रयपाठः।
२ घोषयेच्च ततो मखे इति ग, चिह्नितपुस्तकपाठः।
३ स्थापयेदाशु पिण्डिकामिति ङ, चिह्नितपुस्तकपाठः।
४ वर्णन्यासमिति ग, चिह्नितपुस्तकपाठः।

व्रीहीन् रत्नांस्त्रिधातूंश्च लोहादींश्चन्दनादिकान् ॥ ४ ॥
पूर्वादिनवगर्त्तेषु न्यसेन् मध्ये यथारुचि ।
अथ चेन्द्रादिमन्त्रैश्च गर्त्ता गुग्गुलुनावृतः ॥ ५ ॥
रत्नन्यासविधिं कृत्वा प्रतिमामालभेद्गुरुः ।
सशलाकैर्दर्भपुञ्जैः सहदेवैः समन्वितैः ॥ ६ ॥
सवाह्यान्तैश्च संस्कृत्य पञ्चगव्येन शोधयेत् ।
प्रोक्षयेद्दर्भतोयेन(१) नदीतीर्थोदकेन च ॥ ७ ॥
होमार्थे स्थण्डिलं कुर्य्यात् सिकताभिः समन्ततः ।
सार्द्धहस्तप्रमाणं तु चतुरस्रं सुशोभनं ॥ ८ ॥
अष्टदिक्षु यथान्यासं कलशानपि विन्यसेत् ।
पूर्वाद्यानष्टवर्णेन अग्निमानीय संस्कृतं ॥ ९ ॥
त्वमग्नेद्युभिरिति गायत्र्या समिधो हुनेत् ।
अष्टार्णेनाष्टशतकं(२) आज्यं पूर्णां प्रदापयेत् ॥ १० ॥
शान्त्युदकं आम्रपत्रैः (३) मूलेन शतमन्त्रितं ।
सिञ्चेद्देवस्य तन्मूर्द्ध्नि श्रीश्च ते ह्यनया ऋचा ॥ ११ ॥
ब्रह्मयानेन(४) चोद्धृत्य उत्तिष्ठ ब्रह्मणस्पते ।
तद्विष्णोरिति मन्त्रेण प्रासादाभिमुखं नयेत् ॥ १२ ॥
शिविकायां हरिं स्थाप्य भ्रामयीत पुरादिकं ।
गीतवेदादिशब्दैश्च(५) प्रासादद्वारि धारयेत् ॥ १३ ॥

---

१ प्रोक्षयेद् मन्त्रतोयेनेति ख, घ, ङ, चिह्नितपुस्तकत्रयपाठः ।
२ अष्टार्णेनाष्टशतकमिति ख, घ, चिह्नितपुस्तकद्वयपाठः ।
३ शान्त्युदकमाज्यपात्रैरिति ख, चिह्नितपुस्तकपाठः ।
४ ब्रह्मपात्रेणेति ङ, चिह्नितपुस्तकपाठः ।
५ गीतवाद्यादिशब्दैश्च इति ङ, चिह्नितपुस्तकपाठः ।

स्त्रीभिर्विप्रैर्मङ्गलाष्टघटैः(१) संस्नापयेद्धरिं।
ततो गन्धादिनाभ्यर्च्य मूलमन्त्रेण देशिकः ॥ १४ ॥
अतो देवेति वस्त्राद्यमष्टाङ्गार्घ्यं निवेद्य च।
स्थिरे लग्ने पिण्डिकायां देवस्य त्वेति धारयेत् ॥ १५ ॥
ओं त्रैलोक्यविक्रान्ताय नमस्तेऽस्तु त्रिविक्रम।
संस्थाप्य पिण्डिकायान्तु स्थिरं कुर्य्याद्विचक्षणः ॥ १६ ॥
ध्रुवा द्यौरिति मन्त्रेण विश्वतश्चक्षुरित्यपि।
पञ्चगव्येन संस्नाप्य क्षाल्य मन्धदकेन च ॥ १७ ॥
पूजयेत् सकलीकृत्य साङ्गं सावरणं हरिं।
ध्यायेत् खं तस्य मूर्त्तिन्तु पृथिवी तस्य पीठिका ॥ १८ ॥
कल्पयेद्विग्रहं तस्य तैजसैः परमाणुभिः।
जीवमावाहयिष्यामि पञ्चविंशतितत्त्वगं ॥ १९ ॥
चैतन्यं परमानन्दं जाग्रत्स्वप्नविवर्जितं।
देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितं ॥ २० ॥
ब्रह्मादिस्तम्बपर्य्यन्तं हृदयेषु व्यवस्थितं।
हृदयात् प्रतिमाबिम्बे स्थिरो भव परेश्वर ॥ २१ ॥
सजीवं कुरु बिम्बं त्वं सबाह्याभ्यन्तरस्थितः।
अङ्गुष्ठमात्रः पुरुषो देहोपाधिषु संस्थितः ॥ २२ ॥
ज्योतिर्ज्ञानं परं ब्रह्म एकमेवाद्वितीयकं।
सजीवीकरणं कृत्वा प्रणवेन निबोधयेत् ॥ २३ ॥
सान्निध्यकरणन्नाम हृदयं स्पृश्य वै जपेत्।
सूक्तन्तु पौरुषं ध्यायन् इदं गुह्यमनुं जपेत् ॥ २४ ॥
नमस्तेऽस्तु सुरेशाय सन्तोषविभवात्मने।

---

१ मङ्गलाष्टघटे इति ख, ग, चिह्नितपुस्तकद्वयपाठः।

ज्ञानविज्ञानरूपाय ब्रह्मतेजोनुयायिने ॥ २५ ॥
गुणातिक्रान्तवेशाय(१) पुरुषाय महात्मने ।
अक्षयाय पुराणाय विष्णो सन्निहितो भव ॥ २६ ॥
यच्च ते परमं तत्त्वं(२) यच्च ज्ञानमयं वपुः ।
तत् सर्वमेकतो लीनमस्मिन्देहे विबुध्यतां ॥ २७ ॥
आत्मानं सन्निधीकृत्य ब्रह्मादिपरिवारकान् ।
स्वनाम्ना स्थापयेदन्यानायुधादीन् स्वमुद्रया ॥ २८ ॥
यात्रावर्षादिकं दृष्ट्वा (३) ज्ञेयः सन्निहितो हरिः ।
नत्वा स्तुत्वा स्तवाद्यैश्च जप्त्वा चाष्टाक्षरादिकं ॥ २९ ॥
चण्डप्रचण्डौ द्वारस्थौ निर्गत्याभ्यर्चयेद्गुरुः ।
अग्रिमण्डपमासाद्य गरुडं स्थाप्य पूजयेत् ॥ ३० ॥
दिगीशान् दिक्षु देवांश्च स्थाप्य सम्पूज्य देशिकः ।
विश्वक्सेनं तु संस्थाप्य शङ्खचक्रादि पूजयेत् ॥ ३१ ॥
सर्वपार्षदकेभ्यश्च बलिं भूतेभ्य अर्पयेत् ।
ग्रामवस्त्रसुवर्णादि गुरवे दक्षिणां ददेत् ॥ ३२ ॥
यागोपयोगिद्रव्याद्यमाचार्य्याय नरोर्पयेत् ।
आचार्य्यदक्षिणार्द्धन्तु ऋत्विग्भ्यो दक्षिणां ददेत् ॥ ३३ ॥
अन्येभ्यो दक्षिणां दद्याद्भोजयेद् ब्राह्मणांस्ततः ।
अवारितान् फलान्(४) दद्याद्यजमानाय वै गुरुः ॥ ३४ ॥
विष्णुं नयेत् प्रतिष्ठाता (५) चात्मना सकलं कुलं ।

१ गुणातिक्रान्तरूपाय इति ख, चिह्नितपुस्तकपाठः ।
२ यच्च ते परमं गुह्यमिति ङ, चिह्नितपुस्तकपाठः ।
३ यात्रावर्षादिकं कृत्वेति ख, चिह्नितपुस्तकपाठः ।
४ अवारितफलमिति ङ, चिह्नितपुस्तकपाठः ।
५ प्रतिष्ठाकृदिति ख ग, घ, ङ, चिह्नितपुस्तकचतुष्टयपाठः ।

सर्व्वेषामेव देवानामेष साधारणो विधिः ।
मूलमन्त्राः पृथक् तेषां शेषं कार्य्यं समानकं ॥ ३५ ॥

इत्यादिमहापुराणे आग्नेये वासुदेवप्रतिष्ठादिकथनं नाम षष्टितमोऽध्यायः ॥

---

## अथ एकषष्टितमोऽध्यायः ।

### द्वारप्रतिष्ठाध्वजारोहणादिविधिः ।

भगवानुवाच । वक्ष्ये चावभृथस्नानं विष्णोर्म्नं त्वेति(१) होमयेत् ।
एकाशीतिपदे कुम्भान् स्थाप्य संस्थापयेद्धरिं ॥ १ ॥
पूजयेद् गन्धपुष्पाद्यै र्बलिं दत्वा गुरुं यजेत् ।
द्वारप्रतिष्ठां वक्ष्यामि द्वाराधो हेम वै ददेत् ॥ २ ॥
अष्टभिः कलशैः स्थाप्य शाखोदुम्बरकौ गुरुः ।
गन्धादिभिः समभ्यर्च्य मन्त्रैर्वेदादिभिर्गुरुः ॥ ३ ॥
कुण्डेषु होमयेद्वह्निं समिद्गाजतिलादिभिः (२) ।
दत्वा शय्यादिकञ्चाधो दद्यादाधारशक्तिकां ॥ ४ ॥
शाखयोर्विन्यसेन्मूले देवौ चण्डप्रचण्डकौ ।
ऊर्द्ध्वोदुम्बरके देवीं लक्ष्मीं सुरगणार्च्चितां ॥ ५ ॥
न्यस्याभ्यर्च्य(३) यथान्यायं श्रीसूक्तेन चतुर्मुखं ।
दत्वा तु श्रीफलादीनि आचार्य्यादेस्तु दक्षिणां ॥ ६ ॥
प्रतिष्ठासिद्धद्वारस्य त्वाचार्य्यः स्थापयेद्धरिं ।

---

१ विष्णुर्न्नकेति घ, ङ, चिह्नितपुस्तकद्वयपाठः ।
२ समिदाज्यतिलादिभिरिति ङ, चिह्नितपुस्तकपाठः ।
३ यथाभ्यर्च्येति ङ, चिह्नितपुस्तकपाठः ।

प्रासादस्य प्रतिष्ठन्तु कृतप्रतिष्ठेति तां शृणु ॥ ७ ॥
समाप्तौ शुकनाशायाः(१) वेद्याः प्राग्दर्भमस्तके ।
सौवर्णं राजतं कुम्भमथवा शुल्बनिर्म्मितं (२) ॥ ८ ॥
अष्टरत्नौषधीधातुवीजलौहान्वितं शुभं ।
सवस्त्रं पूरितं चाद्भिर्म्मण्डले चाधिवासयेत् ॥ ९ ॥
सपल्लवं नृसिंहेन हुत्वा सम्पातसञ्चितं ।
नारायणाख्यतत्त्वेन प्राणभूतं न्यसेत्ततः ॥ १० ॥
वैराजभूतन्तं(३) ध्यायेत् प्रासादस्य सुरेश्वर ।
ततः पुरुषवत्सर्व्वं प्रासादं चिन्तयेद् बुधः ॥ ११ ॥
अधो दत्वा सुवर्णं तु तद्वद् भूतं(४) घटं न्यसेत् ।
गुर्व्वादौ दक्षिणां दद्याद् ब्राह्मणादेश्च भोजनं ॥ १२ ॥
ततः पश्चाद्वेदिवन्धं तदूर्ध्वं कण्ठबन्धनं ।
कण्ठोपरिष्टात् कर्त्तव्यं विमलामलसारकं ॥ १३ ॥
तदूर्द्ध्वं वृककं (५) कुर्य्याच्चक्राद्यं सुदर्शनं ।
मूर्त्तिं श्रीवासुदेवस्य यद्दगुप्तां निवेदयेत् ॥ १४ ॥
कलशं वाथ कुर्व्वीत तदूर्द्ध्वं चक्रमुत्तमं ।
वेद्याश्च परितः स्थाप्या अष्टौ विघ्नेश्वराख्वज (६) ॥ १५ ॥

---

१ वनमालायामिति ङ, चिह्नितपुस्तकपाठः ।

२ शुक्लनिर्म्मलमिति ग, घ, चिह्नितपुस्तकद्वयपाठः । शुल्वनिर्म्मितमिति ङ, चिह्नित-पुस्तकपाठः ।

३ वैराजरूपं तमिति ङ, चिह्नितपुस्तकपाठः ।

४ तत्त्वभूतमिति घ, ङ, चिह्नितपुस्तकपाठः ।

५ तदूर्द्ध्वं चूर्णकं कुर्य्यादिति ग, ङ, चिह्नितपुस्तकपाठः । तदूर्द्ध्वं चुल्लकं कुर्य्यादिति ख, घ, चिह्नितपुस्तकद्वयपाठः ।

६ अष्टौ विघ्नेश्वराध्वज इति ग, घ, ङ, चिह्नितपुस्तकत्रयपाठः ।

चत्वारो वा चतुर्दिक्षु स्थापनीया गरुत्मतः।
ध्वजारोहं च वक्ष्यामि येन भूतादि नश्यति॥ १६॥
प्रासादविम्बद्रव्याणां यावन्तः परमाणवः।
तावद्वर्षसहस्राणि तत्कर्त्ता विष्णुलोकभाक्॥ १७॥
कुम्भाण्डवेदिविम्बानां भ्रमणाद्वायुनानघ।
कण्ठस्यावेष्टनाज् ज्ञेयं फलं कोटिगुणं ध्वजात्॥ १८॥
पताकां प्रकृतिं विद्धि दण्डं पुरुषरूपिणं।
प्रासादं वासुदेवस्य मूर्त्तिभेदं (१) निबोध मे॥ १९॥
धारणाद्धरणीं (२) विद्धि आकाशं सुषिरात्मकं।
तेजस्तत् पावकं विद्धि वायुं स्पर्शगतं तथा॥ २०॥
पाषाणादिष्वेव जलं पार्थिवं पृथिवीगुणं (३)।
प्रतिशब्दोद्भवं शब्दं स्पर्शं स्यात् कर्कशादिकं॥ २१॥
शुक्लादिकं भवेद्रूपं रसमन्नादिदर्शनं (४)।
धूपादिगन्धं गन्धन्तु वाग् भेर्य्यादिषु संस्थिता॥ २२॥
शुकनासाश्रिता नासा बाहू तद्रथकौ स्मृतौ।
शिरस्त्वण्डं निगदितं कलशं मूर्द्धजं स्मृतम्॥ २३॥
कण्ठं कण्ठमिति ज्ञेयं स्कन्धं वेदी निगद्यते।
पायूपस्थे प्रणाले तु त्वक् सुधा परिकीर्त्तिता॥ २४॥
मुखं द्वारं भवेदस्य प्रतिमा जीव उच्यते।
तच्छक्तिं पिण्डिकां विद्धि प्रकृतिं च तदाकृतिं॥ २५॥

---

१ मूर्त्तिभूतमिति ख, ङ, चिह्नितपुस्तकपाठः।

२ धरणाद्धारणीं विद्धि इति ख, चिह्नितपुस्तकपाठः। धरणाद्धारणीं देवीमिति ग, चिह्नितपुस्तकपाठः। धारणीं धरणीं विद्धि इति ङ, चिह्नितपुस्तकपाठः।

३ पार्थिवं पृथिवीतलमिति ख, चिह्नितपुस्तकपाठः। पार्थिवं पृथिवीजलमिति ग, चिह्नितपुस्तकपाठः।

४ रसमास्वाय दर्शनं रसमाक्लादि दर्शनमितिच ख, चिह्नितपुस्तकपाठः।

निश्चलत्वञ्च गर्भोऽस्या अधिष्ठाता तु केशवः।
एवमेष हरिः साक्षात्प्रासादत्वेन संस्थितः ॥ २६ ॥
जङ्घा त्वस्य शिवो ज्ञेयः स्कन्धे धाता व्यवस्थितः।
ऊर्द्ध्वभागे स्थितो विष्णुरेवं तस्य स्थितस्य हि ॥ २७ ॥
प्रासादस्य प्रतिष्ठान्तु ध्वजरूपेण मे शृणु।
ध्वजं दृष्ट्वा सुरैर्दैत्या जिताः शस्त्रादिचिह्नितं(१) ॥ २८ ॥
अण्डोर्द्ध्वं कलशं न्यस्य तदूर्द्ध्वं विन्यसेद्ध्वजं।
विम्बार्द्धमानं दण्डस्य (२) त्रिभागेनाथ कारयेत् ॥ २९ ॥
अष्टारं द्वादशारं वा मध्ये मूर्त्तिमतान्वितं।
नारसिंहेन तार्क्ष्येण ध्वजदण्डस्तु निर्व्रणः ॥ ३० ॥
प्रासादस्य तु विस्तारो मानं दण्डस्य कीर्त्तितं।
शिखरार्द्धेन वा कुर्य्यात् तृतीयार्द्धेन वा पुनः ॥ ३१ ॥
द्वारस्य दैर्घ्याद् द्विगुणं दण्डं वा परिकल्पयेत्।
ध्वजयष्टिं देवगृहे ऐशान्यां वायवेऽथवा ॥ ३२ ॥
क्षौमाद्यैश्च ध्वजं कुर्य्याद्विचित्रं वैकवर्णकं(३)।
घण्टाचामरकिङ्किण्या भूषितं पापनाशनं ॥ ३३ ॥
दण्डाग्राद्धरणीं यावद्धस्तैकं विस्तरेण तु।
महाध्वजः सर्व्वदः स्यात्तुर्य्यांशाद्धीनतोऽर्चितः ॥ ३४ ॥
ध्वजे चार्द्धेन विज्ञेया पताका मानवर्ज्जिता।
विस्तारेण ध्वजः कार्य्यो विंशदङ्गुलसन्निभः ॥ ३५ ॥
अधिवासविधानेन चक्रं दण्डं ध्वजं तथा।

---

१ जिताः शक्त्यादिचिह्नितमिति ख, चिह्नितपुस्तकपाठः। जिताः शक्त्रादिचिह्नितमिति ग, चिह्नितपुस्तकपाठः।

२ विम्बार्द्धमानं चक्रन्तु इति ख. ङ, चिह्नितपुस्तकपाठः।

३ विचित्रञ्चैव वर्णकमिति ख, चिह्नितपुस्तकपाठः।

देववत् सकलं कृत्वा मण्डपस्नपनादिकं ॥ ३६ ॥
नेत्रोन्मीलनकं त्यक्त्वा पूर्वोक्तं सर्वमाचरेत् ।
अधिवासयेच्च विधिना शय्यायां स्थाप्य देशिकः ॥ ३७ ॥
ततः सहस्रशीर्षेति सूक्तं चक्रे न्यसेद् बुधः ।
तथा सुदर्शनं मन्त्रं मनस्तत्त्वं निवेशयेत् ॥ ३८ ॥
मनोरूपेण तस्यैव सजीवकरणं स्मृतं ।
अरेषु मूर्त्तयो न्यस्याः केशवाद्याः सुरोत्तम ॥ ३९ ॥
नाभ्यज्ञप्रतिनेमीषु न्यसेत्तत्त्वानि देशिकः ।
नृसिंहं विश्वरूपं वा अज्ञमध्ये निवेशयेत् ॥ ४० ॥
सकलं विन्यसेद्दण्डे सूत्रात्मानं सजीवकं ।
निष्कलं परमात्मानं ध्वजे ध्यायन् न्यसेद्धरिं ॥ ४१ ॥
तच्छक्तिं व्यापिनीं ध्यायेद् ध्वजरूपां बलाबलां (१) ।
मण्डपे(२) स्थाप्य चाभ्यर्च्य होमं कुण्डेषु कारयेत् ॥ ४२ ॥
कलशे स्वर्णकलशं न्यस्य रत्नानि पञ्च च ।
स्थापयेच्चक्रमन्त्रेण स्वर्णचक्रमधस्ततः(३) ॥ ४३ ॥
पारदेन तु सम्प्लाव्य नेत्रपट्टेन छादयेत् (४) ।
ततो निवेशयेच्चक्रं तन्मध्ये तु हरिं स्मरेत् ॥ ४४ ॥
ओं क्षौं नृसिंहाय(५) नमः पूजयेत् स्थापयेद्धरिं ।
ततो ध्वजं गृहीत्वा तु यजमानः सबान्धवः ॥ ४५ ॥

---

१ चलाचलामिति ख, ङ, चिह्नितपुस्तकपाठः, सुलोचनामिति ग, चिह्नितपुस्तकपाठः ।

२ मण्डले इति ग, ङ, चिह्नितपुस्तकद्वयपाठः ।

३ स्वर्णचक्रन्तु मध्यत इति ङ, चिह्नितपुस्तकपाठः ।

४ नेत्रं यत्नेन च्छादयेदिति ङ, चिह्नितपुस्तकपाठः ।

५ ओं क्षौं नृसिंहाय नम इति ख, चिह्नितपुस्तकपाठः ।

दधिभक्तयुते पात्रे ध्वजस्याग्रं निवेशयेत् ।
ध्रुवाद्येन फडन्तेन ध्वजं मन्त्रेण पूजयेत् ॥ ४६ ॥
शिरस्याधाय तत् पात्रं नारायणमनुस्मरन् ।
प्रदक्षिणं तु कुर्व्वीत तूर्य्यमङ्गलनिःस्वनैः ॥ ४७ ॥
ततो निवेशयेत् दण्डं मन्त्रेणाष्टाक्षरेण तु ।
मुञ्चामि त्वेति सूक्तेन ध्वजं मुञ्चेद्विचक्षणः ॥ ४८ ॥
पात्रं ध्वजं कुञ्जरादि दद्यादाचार्य्यके द्विजः ।
एष साधारणः प्रोक्तो ध्वजस्यारोहणे विधिः ॥ ४९ ॥
यस्य देवस्य यच्चिह्नं तन्मन्त्रेण स्थिरं चरेत् ।
स्वर्गत्वा ध्वजदानात्तु भुवि राजा बली भवेत् ॥ ५० ॥

इत्यादिमहापुराणे आग्नेये ध्वजारोहणं नाम
एकषष्टितमोऽध्यायः ।

---

## अथ द्विषष्टितमोऽध्यायः ।

### लक्ष्मीप्रतिष्ठाविधिः ।

भगवानुवाच । समुदायेन देवादेः प्रतिष्ठां प्रवदामि ते ।
लक्ष्म्याः प्रतिष्ठा प्रथमं तथा देवीगणस्य च ॥ १ ॥
पूर्ववत् सकलं कुर्य्यान्मण्डपस्नपनादिकं(१) ।
भद्रपीठे श्रियं न्यस्य स्थापयेदष्ट वै घटान् (२) ॥ २ ॥
घृतेनाभ्यज्य मूलेन स्नपयेत् पञ्चगव्यकैः ।
हिरण्यवर्णां हरिणीं नेत्रे चोन्मीलयेच्छ्रियाः ॥ ३ ॥

---

१ मण्डलस्नपनादिकमिति ङ, चिह्नितपुस्तकपाठः ।
२ स्थापयेद्व्रणे घटानिति घ, ङ, चिह्नितपुस्तकद्वयपाठः ।

तन्म आवह(१) इत्येवं प्रदद्यान्मधुरत्रयम्।
अश्वपूर्वेति पूर्वेण तां कुम्भेनाभिषेचयेत्(२) ॥ ४ ॥
कामोऽस्मितेति याम्येन पश्चिमेनाभिषेचयेत्।
चन्द्रं प्रभासामुत्तार्य्यादित्यवर्णेति चोत्तरात् ॥ ५ ॥
उपैतु मेति चाग्नेयात् क्षुत्पिपासेति नैर्ऋतात्।
गन्धद्वारेति वायव्यां मनसः काममाकूतिम् ॥ ६ ॥
ईशानकलशेनैव शिरः सौवर्णकर्द्दमात्।
एकाशीतिघटैः स्नानं मन्त्रेणापः सृजन् क्षितिम्(३) ॥ ७ ॥
आर्द्रां पुष्करिणीं गन्धैराद्रामित्यादिपुष्पकैः।
तन्मयावह मन्त्रेण य आनन्द ऋचाखिलं(४) ॥ ८ ॥
शायन्तीयेन शय्यायां श्रीसूक्तेन च सन्निधिम्।
लक्ष्मीबीजेन चिच्छक्तिं विन्यस्याभ्यर्चयेत् पुनः ॥ ९ ॥
श्रीसूक्तेन मण्डपेय कुण्डेष्वज्ञानि होमयेत्।
करवीराणि वा कृत्वा सहस्रं शतमेव वा ॥ १० ॥
गृहोपकरणान्तादि श्रीसूक्तेनैव चार्पयेत्।
ततः प्रासादसंस्कारं सर्वं कृत्वा तु पूर्ववत् ॥ ११ ॥
मन्त्रेण पिण्डिकां कृत्वा प्रतिष्ठानं ततः श्रियः(५)।
श्रीसूक्तेन च सान्निध्यं पूर्ववत् प्रत्यृचं जपेत्(६) ॥ १२ ॥
चिच्छक्तिं बोधयित्वा तु मूलात् सान्निध्यकं चरेत्।

---

१ अग्निमावह इति ख, चिह्नितपुस्तकपाठः।
२ अश्वमूर्द्धेति मन्त्रेण तां कुम्भेभिनिवेशयेदिति ङ, चिह्नितपुस्तकपाठः।
३ मन्त्रेण चासृजत् चितिमिति ख, चिह्नितपुस्तकपाठः।
४ य आनन्देति वाससमिति ङ, चिह्नितपुस्तकपाठः।
५ मन्त्रेण पिण्डिकां कृत्वा प्रतिमां स्थापयन् श्रिय इति ङ, चिह्नितपुस्तकपाठः।
६ प्रत्यृचं यजेदिति ङ, चिह्नितपुस्तकपाठः।

भूस्वर्णवस्त्रगोमादि(१) गुरवे ब्रह्मणेऽर्पयेत् ।
एवं देव्योऽखिलाः स्थाप्यावाह्य स्वर्गादि भावयेत् ॥ १३ ॥

इत्यादिमहापुराणे आग्नेये लक्ष्मीस्थापनं नाम
द्विषष्टितमोऽध्यायः ।

---

## अथ त्रिषष्टितमोऽध्यायः ।

### सुदर्शनचक्रादिप्रतिष्ठाकथनं ।

भगवानुवाच । एवं तार्क्ष्यस्य चक्रस्य ब्रह्मणो न्हहरेस्तथा ।
प्रतिष्ठा विष्णुवत् कार्या स्वस्वमन्त्रेण तां शृणु ॥ १ ॥
सुदर्शन महाचक्र शान्त दुष्टभयङ्कर ।
छिन्द छिन्द भिन्द भिन्द विदारय विदारय
परमन्त्रान् ग्रस ग्रस भक्षय भक्षय भूतान्
त्रासय त्रासय हूं फट् सुदर्शनाय नमः ॥
अभ्यर्च्य चक्रं चानेन रणे दारयते रिपून् ॥ २ ॥
ओं क्षौं नरसिंह उग्ररूप ज्वल ज्वल प्रज्वल प्रज्वल स्वाहा ॥
नरसिंहस्य मन्त्रोयं पातालाख्यस्य वच्मि ते (२) ।

ओं क्षौं नमो भगवते नरसिंहाय प्रदीप्तसूर्यकोटिसहस्रसमतेजसे वज्रनखदंष्ट्रायुधाय स्फुटविकटविकीर्णकेसरसटाप्रक्षुभितमहार्णवाम्भोदन्दुभिनिर्घोषाय सर्वमन्त्रोत्तारणाय एह्येहि भगवन्नरसिंह पुरुषपरापरब्रह्मसत्येन स्फुर स्फुर विजृम्भ विजृम्भ आक्रम आक्रम गर्ज गर्ज मुञ्च मुञ्च सिंहनादान् विदारय विदारय विद्रावय विद्रावय आविश

१ भूसुवर्णमवाम्रादि इति ङ, चिह्नितपुस्तकपाठः ।
२ पातालाख्यस्य वक्ष्यते इति ङ, चिह्नितपुस्तकपाठः ।

आविश सर्वमन्त्ररूपाणि सर्व्वमन्त्रजातयश्च हन हन छिन्द छिन्द सङ्क्षिप सङ्क्षिप सर सर(१) दारय दारय स्फुट स्फुट स्फोटय स्फोटय ज्वालामाला-सङ्घातमय सर्वतोऽनन्तज्वालावज्राग्रनिचक्रेण सर्वपातालान् उत्सादय उत्सादय सर्वतोऽनन्तज्वालावज्रशरपञ्जरेण सर्वपातालान् परिवारय परिवारय सर्वपातालासुरवासिनां हृदयान्याकर्षय आकर्षय शीघ्रं दह दह पच पच मथ मथ शोषय शोषय निकृन्तय निकृन्तय याव-द्यावन्मे वशमागताः पातालेभ्यः फट् असुरेभ्यः फट् मन्त्ररूपेभ्यः फट् मन्त्रजातिभ्यः फट् संशयान्मां भगवन्नरसिंहरूप विष्णो सर्वापद्भ्यः सर्वमन्त्ररूपेभ्यो रक्ष रक्ष हूं फट् (२) नमोऽस्तु ते ॥

नरसिंहस्य विद्येयं हरिरूपार्थसिद्धिदा(३) ॥ ३ ॥
त्रैलोक्यमोहनैर्मन्त्रैः स्थाप्यस्त्रैलोक्यमोहनः।
गदी दक्षे शान्तिकरो द्विभुजो वा चतुर्भुजः ॥ ४ ॥
वामोर्द्ध्वे कारयेच्चक्रं पाञ्चजन्यमथो ह्यधः।
श्रीपुष्टिसंयुतं कुर्य्याद् बलेन सह भद्रया ॥ ५ ॥
प्रासादे स्थापयेद्विष्णुं गृहे वा मण्डपेऽपि वा।
वामनं चैव वैकुण्ठं हयास्यमनिरुद्धकं ॥ ६ ॥
स्थापयेज्जलशय्यास्थं मत्स्यादींश्चावतारकान्।
सङ्कर्षणं विश्वरूपं लिङ्गं वै रुद्रमूर्तिकं ॥ ७ ॥
अर्द्धनारीश्वरं तद्वद्धरिशङ्करमातृकाः।
भैरवं च तथा सूर्य्यं ग्रहांस्तद्वद्विनायकम् ॥ ८ ॥

---

१ दर दर इति ख, ग, ङ, चिह्नितपुस्तकपाठः।

२ रक्ष रक्ष ओं फट् इति ख, चिह्नितपुस्तकपाठः। रक्ष रक्ष हूँ फडिति ग, चिह्नितपुस्तकपाठः।

३ हरिरूपा सुसिद्धिदा इति ग, ङ, चिह्नितपुस्तकद्वयपाठः।

गौरीमिन्द्रादिकां लेख्यां (१) विजयां च बलाबलां ।
पुस्तकानां प्रतिष्ठां च वक्ष्ये लिखनतद्विधिं ॥ ९ ॥
स्वस्तिके मण्डलेऽभ्यर्च्य शरयन्त्रासने स्थितं (२) ।
लेख्यञ्च लिखितं पुस्तं गुरुर्व्विद्यां हरिं यजेत् ॥ १० ॥
यजमानो गुरुं विद्यां हरिं लिपिकृतं नरं ।
प्राङ्मुखः पद्मिनीं ध्यायेत् लिखित्वा श्लोकपञ्चकं ॥ ११ ॥
रौप्यस्थमस्या हैम्या च लेखन्या नागराक्षरं(३) ।
ब्राह्मणान् भोजयेच्छक्त्या शक्त्या दद्याच्च दक्षिणां(४) ॥ १२ ॥
गुरुं विद्यां हरिं प्रार्च्य पुराणादि लिखेन्नरः ।
पूर्ववन्मण्डलाद्ये(५) च ऐशानरां भद्रपीठके ॥ १३ ॥
दर्पणे पुस्तकं दृष्ट्वा सेचयेत् पूर्व्ववद् घटैः ।
नेत्रोन्मीलनकं कृत्वा शय्यायां तु न्यसेन्नरः ॥ १४ ॥
न्यसेत्तु पौरुषं सूक्तं वेदाद्यं तत्र पुस्तके ।
कृत्वा सजीवीकरणं प्रार्च्य हुत्वा चरुं ततः ॥ १५ ॥
सम्प्राप्य दक्षिणाभिस्तु गुर्व्वादीन् भोजयेद्द्विजान् ।
रथेन हस्तिना वापि भ्रामयेत् पुस्तकं नरैः (६) ॥ १६ ॥
गृहे देवालयादौ तु पुस्तकं स्थाप्य पूजयेत् ।
वस्त्रादिवेष्टितं पाठादावन्ते समर्च्चयेत् (७) ॥ १७ ॥

---

१ इन्द्रादिकां जय्यामिति ग, घ, चिह्नितपुस्तकपाठः ।
२ शरयन्त्रासने स्थितमिति ख, घ, चिह्नितपुस्तकद्वयपाठः ।
३ रौप्यमय्याऽथ हैम्या वा लेखन्याथ वराक्षरमिति ङ, चिह्नितपुस्तकपाठः ।
४ प्राङ्मुखः पद्मिनीं ध्यायेत् लिखित्वा च प्रदापयेत् । ब्राह्मणान् भोजयेच्छक्त्या शक्त्या-दद्याच्च दक्षिणामिति ग, चिह्नितपुस्तकपाठः ।
५ पूर्वमण्डपपार्श्वे इति ङ, चिह्नितपुस्तकपाठः ।
६ पुस्तकं नर इति ख, चिह्नितपुस्तकपाठः ।
७ अन्ते मदार्च्चयेदिति ख, ग, चिह्नितपुस्तकपाठः ।

जगच्छान्तिञ्चावधार्य्य पुस्तकं वाचयेन्नरः ।
अध्यायमेकं कुम्भाद्भिर्यजमानादि सेचयेत् ॥ १८ ॥
द्विजाय पुस्तकं दत्वा फलस्यान्तो न विद्यते ।
त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ॥ १९ ॥
विद्यादानफलं दत्वा मस्यन्तं पत्रसञ्चयं ।
यावत्तु पत्रसङ्ख्यानमक्षराणां तथाऽनघ ॥ २० ॥
तावद्वर्षसहस्राणि विष्णुलोके महीयते ।
पञ्चरात्रं पुराणानि भारतानि ददन्नरः ।
कुलैकविंशमुद्धृत्य परे तत्त्वे तु लीयते ॥ २१ ॥

इत्यादिमहापुराणे आग्नेये देवादिप्रतिष्ठापुस्तकप्रतिष्ठाकथनं नाम त्रिषष्टितमोऽध्यायः ।

---

## अथ चतुःषष्टितमोऽध्यायः ।

### कूपादिप्रतिष्ठाकथनं ।

भगवानुवाच । कूपवापीतडागानां प्रतिष्ठां वच्मि तां शृणु ।
जलरूपेण हि हरिः सोमो वरुण उत्तमः ॥ १ ॥
अग्नीषोममयं विश्वं विष्णुरापस्तु कारणं ।
हैमं रौप्यं रत्नजं वा वरुणं कारयेन्नरः ॥ २ ॥
द्विभुजं हंसपृष्ठस्थं दक्षिणेनाभयप्रदं ।
वामेन नागपाशं तं नदीनागादिसंयुतं ॥ ३ ॥
यागमण्डपमध्ये स्याद्वेदिका कुण्डमण्डिता ।
तोरणं वारुणं कुम्भं न्यसेच्च करकान्वितं ॥ ४ ॥
भद्रके चार्द्धचन्द्रे वा स्वस्तिके द्वारि कुम्भकान् ।
अग्न्याधानं चाप्यकुण्डे कृत्वा पूर्णां प्रदापयेत् ॥ ५ ॥

वरुणं स्नानपीठे तु ये ते शतेति संस्पृशेत् ।
घृतेनाभ्यञ्जयेत् पश्चान्मूलमन्त्रेण देशिकः ॥ ६ ॥
शन्नो देवीति प्रक्षाल्य शुद्धवत्या शिवोदकैः ।
अधिवासयेदष्टकुम्भान् सामुद्रं पूर्वकुम्भके ॥ ७ ॥
गाङ्गमग्नौ वर्षतोयं दक्षे रक्षस्तु नैर्झरं ।
नदीतोयं पश्चिमे तु वायव्ये तु नदोदकं ॥ ८ ॥
औद्भिज्जं चोत्तरे स्थाप्य ऐशान्यां तीर्थसम्भवं ।
अलाभे तु नदीतोयं(१) यासां राजेति मन्त्रयेत्(२) ॥ ९ ॥
देवं निर्म्माज्य निर्मञ्छ्य दुर्मित्रियेति विचक्षणः (३) ।
नेत्रे चोन्मीलयेच्चित्रं तच्चक्षुर्मधुरत्रयैः ॥ १० ॥
ज्योतिः सम्पूरयेद्धेम्यां गुरवे गामथार्प्पयेत् ।
समुद्रज्येष्ठेत्यभिषिञ्चेदग्नौ पूर्वकुम्भतः ॥ ११ ॥
समुद्रं गच्छ गाङ्गेयात् सोमो धेन्विति वर्षकात् ।
देवीरापो निर्झराद्भिर्नदाद्भिः पञ्चनद्यतः ॥ १२ ॥
उद्भिदद्भ्यश्चोद्भिदेन पावमान्याऽथ तीर्थकैः ।
आपो हि ष्ठा पञ्चगव्याद्धिरण्यवर्णेति स्वर्णजात् ॥ १३ ॥
आपो अस्मेति वर्षोत्थैर्ऽ‌हृत्या कूपसम्भवैः ।
वरुणञ्च तडागोत्थैर्वरुणाद्भिस्तु वह्नितः ॥ १४ ॥
आपो देवीति गिरिजैरेकाशीतिघटैस्ततः ।
स्नापयेद्वरुणस्येति त्वन्नो वरुण चार्घ्यकं ॥ १५ ॥
व्याहृत्या मधुपर्कन्तु बृहस्पतेति वस्त्रकं ।
वरुणेति पवित्रन्तु प्रणवेनोत्तरीयकं ॥ १६ ॥

---

१ नदीतोयमिति ख, चिह्नितपुस्तकपाठः ।
२ आपां वरेति कीर्त्तयेदिति ङ, ग, चिह्नितपुस्तकपाठः ।
३ दुर्मित्रियेति विचक्षण इति ग, घ, चिह्नितपुस्तकपाठः ।

यद्वारुणेन पुष्पादि प्रदद्याद्वरुणाय तु।
चामरं दर्पणं छत्रं व्यजनं वैजयन्तिकां ॥ १७ ॥
मूलेनोत्तिष्ठेत्युत्थाप्य तां रात्रिमधिवासयेत्।
वरुणञ्चेति सान्निध्यं यद्वारुणेन पूजयेत् ॥ १८ ॥
सजीवीकरणं मूलात् पुनर्गन्धादिना यजेत्।
मण्डपे(१) पूर्ववत् प्रार्च्य कुण्डेषु समिदादिकं ॥ १९ ॥
वेदादिमन्त्रैर्गन्धाद्यास्ततश्चो धेनवो दुहेत्।
दिक्षयो वै यवचरुं ततः संस्थाप्य होमयेत् (२) ॥ २० ॥
व्याहृत्या वाथ गायत्र्या मूलेनामन्त्रयेत्तथा।
सूर्याय प्रजापतये द्यौः स्वाहा चान्तरिक्षकः ॥ २१ ॥
तस्यै पृथिव्यै देहधृत्यै इह स्वधृतये ततः।
इह रत्यै चेह रमत्या उग्रो भीमश्च रौद्रकः ॥ २२ ॥
विष्णुश्च वरुणो धाता रायस्पोषो महेन्द्रकः (३)।
अग्निर्यमो नैर्ऋतोऽथ वरुणो वायुरेवच ॥ २३ ॥
कुवेर ईशोऽनन्तोऽथ ब्रह्मा राजा जलेश्वरः।
तस्मै स्वाहेदं विष्णुश्च तद्विप्रासेति होमयेत् ॥ २४ ॥
सोमो धेन्विति षट् कृत्वा इमं मेति च होमयेत्।
आपो हि ष्ठेति तिसृभिरिमा रुद्रेति होमयेत् ॥ २५ ॥
दशदिक्षु बलिं दद्यात् गन्धपुष्पादिनाऽर्चयेत्।
प्रतिमां तु समुत्थाप्य मण्डले विनत्रसेद् बुधः ॥ २६ ॥
पूजयेद्गन्धपुष्पाद्यैर्हैमपुष्पादिभिः क्रमात्।

---

१ मण्डले इति ख, ङ, चिह्नितपुस्तकद्वयपाठः।
२ मूले लग्नौ च होमयेदिति ङ, चिह्नितपुस्तकपाठः।
३ वायुः सोमो महेन्द्रक इति ङ, चिह्नितपुस्तकपाठः॥

जलाशयांस्तु दिग्भागे वितस्तिद्वयसम्मितान् ॥ २७ ॥
कृत्वाऽष्टौ स्थण्डिलान् रम्यान् सैकतान् देशिकोत्तमः ।
वरुणस्येति मन्त्रेण साज्यमष्टशतं ततः ॥ २८ ॥
चरुं यवमयं कृत्वा (१) शान्तितोयं समाचरेत् ।
सेचयेन्मूर्द्धि देवं तु सजीवकरणं चरेत् ॥ २९ ॥
ध्यायेत्तु वरुणं युक्तं गौर्या नदनदीगणैः ।
ओं वरुणाय नमोऽभ्यर्च्य ततः सान्निध्यमाचरेत् ॥ ३० ॥
उत्थाप्य (२) नागपृष्ठाद्यैर्भ्रामयेत्तैः समङ्गलैः ।
आपो हि ष्ठेति च क्षिपेत्त्रिमध्वाक्ते घटे जले ॥ ३१ ॥
जलाशये मध्यगतं सुगुप्तं विनिवेशयेत् ।
स्नात्वा ध्यायेच्च वरुणं सृष्टिं ब्रह्माण्डसञ्ज्ञिकां ॥ ३२ ॥
अग्निबीजेन सन्दग्ध्य तद्भस्म प्लावयेद्धरां ।
सर्वमापोमयं लोकं ध्यायेत् तत्र जलेश्वरं ॥ ३३ ॥
तोयमध्यस्थितं देवं ततो यूपं निवेशयेत् ।
चतुरस्रमथाष्टास्रं वर्त्तुलं वा प्रवर्तितं(३) ॥ ३४ ॥
आराध्य देवतालिङ्गं दशहस्तं तु कूपके ।
यूपं यज्ञीयवृक्षोत्थं मूले हैमं फलं न्यसेत् ॥ ३५ ॥
वाप्यां पञ्चदशकरं पुष्करिण्यां तु विंशकं ।
तडागे पञ्चविंशाख्यं जलमध्ये निवेशयेत् ॥ ३६ ॥
यागमण्डपाङ्गणे वा यूपव्रस्केति मन्त्रतः(४) ।
स्थाप्य तद्वेष्टयेद्वस्त्रैर्यूपोपरि पताकिकां ॥ ३७ ॥

---

१ चरुं सचरुसं कृत्वेति ख, चिह्नितपुस्तकपाठः ।
२ उत्थाय इति ख, ग, घ, चिह्नितपुस्तकपाठः ।
३ सुवर्त्तिर्तमिति ङ, चिह्नितपुस्तकपाठः ।
४ यूपस्थामेति मन्त्रत इति ग, घ, ङ, चिह्नितपुस्तकत्रयपाठः ।

तदभ्यर्च्य च गन्धाद्यैर्जगच्छान्तिं समाचरेत्।
दक्षिणां गुरवे दद्याद्भूगोहेमाम्बुपात्रकं ॥ ३८ ॥
द्विजेभ्यो दक्षिणा देया आगतान् भोजयेत्तथा।
आब्रह्मस्तम्बपर्य्यन्ता ये केचित्सलिलार्थिनः ॥ ३९ ॥
ते तृप्तिमुपगच्छन्तु तडागस्थेन वारिणा।
तोयमुत्सर्जयेदेवं(१) पञ्चगव्यं विनिक्षिपेत् ॥ ४० ॥
आपो हि ष्ठेति तिसृभिः शान्तितोयं द्विजैः कृतं।
तीर्थतोयं क्षिपेत् पुण्यं गोकुलञ्चार्पयेद्द्विजान् (२) ॥ ४१ ॥
अनिवारितमन्नाद्यं सर्व्वजन्यञ्च कारयेत्।
अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ॥ ४२ ॥
एकाहं स्थापयेत्तोयं तत्पुण्यमयुतायुतं।
विमाने मोदते स्वर्गे नरकं न स गच्छति ॥ ४३ ॥
गवादि पिवते यस्मात्तस्मात् कर्त्तुर्न्न पातकं।
तोयदानात्सर्वदानफलं प्राप्य दिवं व्रजेत् ॥ ४४ ॥

इत्यादिमहापुराणे आग्नेये कूपवापीतडागादिप्रतिष्ठाकथनं नाम चतुःषष्टितमोऽध्यायः ॥

---

## अथ पञ्चषष्टितमोऽध्यायः।

### सभास्थापनकथनं।

भगवानुवाच। सभादिस्थापनं वक्ष्ये तथैतेषां प्रवर्त्तनं।
भूमौ परीक्षितायाञ्च वास्तुयागं समाचरेत् ॥ १ ॥
स्वेच्छया तु सभां कृत्वा स्वेच्छया स्थापयेत् सुरान्।

---

१ तोयं समुत्सृजेदेवमिति ख, चिह्नितपुस्तकपाठः।
२ गोकुलं पाययेद्द्विजानिति ङ, चिह्नितपुस्तकपाठः।

चतुष्पथे ग्रामादौ(१) च न शून्ये कारयेत् सभां ॥ २ ॥
निर्मलः कुलमुद्धृत्य कर्त्ता स्वर्गे विमोदते ।
अनेन विधिना कुर्यात् सप्तभौमं हरेर्गृहं ॥ ३ ॥
यथा राज्ञां तथाऽन्येषां पूर्वाद्याश्च ध्वजादयः ।
कोणभुजान् वर्जयित्वा चतुःशालं तु वर्त्तयेत् ॥ ४ ॥
त्रिशालं वा द्विशालं वा एकशालमथापि वा ।
व्ययाधिकं न कुर्व्वीत व्ययदोषकरं हि तत् ॥ ५ ॥
आयाधिके भवेत् पीडा तस्मात् कुर्य्यात् समं द्वयं ।
कराशिं समस्तन्तु कुर्य्याद्वसुगुणं गुरुः ॥ ६ ॥
सप्तार्चिषा हृते भागे गर्गविद्याविचक्षणः ।
अष्टधा भाजिते तस्मिन् यच्छेषं स व्ययो गतः ॥ ७ ॥
अथवा कराशिं तु हनयात् सप्तार्चिषा बुधः ।
वसुभिः संहृते भागे ध्वजादि(२) परिकल्पयेत् ॥ ८ ॥
ध्वजो धूमस्तथा सिंहः श्वा वृषस्तु खरो गजः ।
तथा ध्वाङ्क्षस्तु पूर्व्वादावुद्भवन्ति विकल्पयेत् ॥ ९ ॥
त्रिशालकत्रयं शस्तं उदक्पूर्व्वविवर्जितं ।
याम्यां परगृहोपेतं द्विशालं लभ्यते सदा ॥ १० ॥
याम्ये शालैकशालं तु प्रत्यक्शालमथापि वा ।
एकशालद्वयं शस्तं शेषास्त्वन्ये भयावहाः ॥ ११ ॥
चतुःशालं सदा शस्तं सर्व्वदोषविवर्जितं ।
एकभौमादि कुर्वीत भवनं सप्तभौमकं ॥ १२ ॥
द्वारवेद्यादिरहितं पूरणेन विवर्जितं ।
देवगृहं देवतायाः प्रतिष्ठाविधिना सदा ॥ १३ ॥

१ पूश्चतुष्पथग्रामादाविति ख, चिह्नितपुस्तकपाठः ।
२ ध्वजादि इति ख,चिह्नितपुस्तकपाठः ।

संस्थाप्य मनुजानाथ समुदायोक्तकर्मणा ।
प्रातः सर्वौषधीस्नानं कृत्वा सुचिरतन्द्रितः ॥ १४ ॥
मधुरैस्तु द्विजान् भोज्य पूर्णकुम्भादिशोभितं ।
सतोरणं स्वस्ति वाच्य द्विजान् गोपृष्ठहस्तकः (१) ॥ १५ ॥
गृही गृहं प्रविश्येच्च देवज्ञान् प्रार्च्य(२) संविशेत् ।
गृहे पुष्टिकरं मन्त्रं पठेच्चेमं समाहितः ॥ १६ ॥
ओं नन्दे नन्दय वाशिष्ठे वसुभिः प्रजया सह ।
जये भार्गवदायादे प्रजानां विजयावहे ॥ १७ ॥
पूर्णेऽङ्गिरसदायादे पूर्णकामं कुरुष्व मां ।
भद्रे काश्यपदायादे कुरु भद्रां मतिं मम ॥ १८ ॥
सर्ब्बवीजौषधीयुक्ते सर्वरत्नौषधीवृते ।
रुचिरे नन्दने नन्दे वासिष्ठे रम्यतामिह ॥ १९ ॥
प्रजापतिसुते देवि चतुरस्रे महीयसि ।
सुभगे सुव्रते देवि गृहे काश्यपि रम्यतां ॥ २० ॥
पूजिते परमाचार्य्यैर्गन्धमाल्यैरलङ्कृते ।
भवभूतिकरे देवि गृहे भार्गवि रम्यतां ॥ २१ ॥
अव्यक्ते व्याकृते पूर्णे मुनेरङ्गिरसः सुते ।
इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहं ॥ २२ ॥
देशस्वामिपुरस्वामिगृहस्वामिपरिग्रहे ।
मनुष्यधनहस्त्यश्वपशुवृद्धिकरी भव ॥ २३ ॥

इत्यादिमहापुराणे आग्नेये सभागृहस्थापनं नाम
पञ्चषष्टितमोऽध्यायः ॥

---

१ गोपुच्छहस्तक इति घ, चिह्नितपुस्तकपाठः ।
२ देवार्च्चां प्राप्य इति ग, चिह्नितपुस्तकपाठः ।

## अथ षट्षष्टितमोऽध्यायः ।

### साधारणप्रतिष्ठाविधानं ।

भगवानुवाच । समुदायप्रतिष्ठाञ्च वक्ष्ये सा वासुदेववत् ।
आदित्या वसवो रुद्राः साध्या विश्वेऽश्विनौ तथा ॥ १ ॥
ऋषयश्च तथा सर्वे वक्ष्ये तेषां विशेषकं ।
यस्य देवस्य यन्नाम तस्याद्यं गृह्य चाक्षरं ॥ २ ॥
मात्राभिर्भेदयित्वा तु दीर्घाण्यङ्गानि भेदयेत्(१) ।
प्रथमं कल्पयेद्बीजं सबिन्दुं प्रणवं नतिं(२) ॥ ३ ॥
सर्वेषां मूलमन्त्रेण पूजनं स्थापनं तथा ।
नियमव्रतकृच्छ्राणां मठसङ्क्रमवेश्मनां ॥ ४ ॥
मासोपवासं द्वादश्यां इत्यादिस्थापनं वदे ।
शिलां पूर्णघटं कांस्यं सम्भारं स्थापयेत्ततः ॥ ५ ॥
ब्रह्मकूर्चं समाहृत्य श्रपेद् यवमयं चरुं ।
क्षीरेण कपिलायास्तु तद्विष्णोरिति साधकः ॥ ६ ॥
प्रणवेनाभिघार्य्यैव दर्व्वा सङ्घट्टयेत्ततः ।
साधयित्वाऽवतार्य्याथ विष्णुमभ्यर्च्य होमयेत् ॥ ७ ॥
व्याहृत्या चैव गायत्र्या तद्विप्रासेति होमयेत् ।
विश्वतश्चक्षुर्व्वेदाद्यैर्भूरग्नये तथैवच ॥ ८ ॥
सूर्य्याय प्रजापतये अन्तरिक्षाय होमयेत् ।
द्यौः स्वाहा ब्रह्मणे स्वाहा पृथिवी महाराजकः ॥ ९ ॥
तस्मै सोमञ्च राजानं इन्द्राद्यैर्होममाचरेत् ।

---

१ अङ्गानि कल्पयेदिति ख ङ, चिह्नितपुस्तकद्वयपाठः ।

२ प्रणवं गतिमिति ख, चिह्नितपुस्तकपाठः ।

एवं कृत्वा(१) चरोर्भागान् दद्याद्दिग्बलिमादरात् ॥ १० ॥
समिधोऽष्टशतं कृत्वा पालाशांश्चाज्यहोमकं ।
कुर्य्यात् पुरुषसूक्तेन इरावती तिलाष्टकं ॥ ११ ॥
कृत्वा तु ब्रह्मविष्ण्वीशदेवानामनुयायिनां ।
ग्रहाणामाहुतीर्हुत्वा लोकेशानामथो पुनः ॥ १२ ॥
पर्वतानां नदीनाञ्च समुद्राणां तथाऽऽहुतीः ।
कृत्वा च व्याहृतीर्दद्यात् स्रुवपूर्णाहुतित्रयं ॥ १३ ॥
वौषडन्तेन मन्त्रेण वैष्णवेन पितामह ।
पञ्चगव्यं चरुं प्राश्य दत्वाचार्य्याय दक्षिणां ॥ १४ ॥
तिलपात्रं हेमयुक्तं सवस्त्रं गामलङ्कृतां ।
प्रीयतां भगवान् विष्णुरित्युत्सृजेद्दतं बुधः ॥ १५ ॥
मासोपवासादेरन्यां प्रतिष्ठां वच्मि पूर्व्वतः ।
यज्ञेनातोष्य देवेशं श्रपयेद्वैष्णवं चरुं ॥ १६ ॥
तिलतण्डुलनीवारैः श्यामाकैरथवा यवैः ।
आज्येनाघार्य चोत्तार्य्य होमयेन्मूर्त्तिमन्त्रकैः ॥ १७ ॥
विष्ण्वादीनां मासपानां तदन्ते होमयेत् पुनः ।

ओँ विष्णवे स्वाहा । ओँ विष्णवे(२)निभूयपाय स्वाहा । ओँ विष्णवे शिपिविष्टाय स्वाहा । ओँ नरसिंहाय स्वाहा । ओँ पुरुषोत्तमाय स्वाहा ।

द्वादशाश्वत्थसमिधो होमयेद्घृतसम्प्लुताः ॥ १८ ॥
विष्णो रराटमन्त्रेण ततो द्वादश चाहुतीः ।

---

१ एवं दत्वा इति ख, ङ, चिह्नितपुस्तकद्वयपाठः । एतान् दत्वा इति घ, चिह्नित-पुस्तकपाठः ।

२ ओं विष्णवे प्रवृषाय स्वाहा इति घ, चिह्नितपुस्तकपाठः ।

इदं विष्णुरिरावती चरोर्द्वादश चाहुतीः ॥ १८ ॥
हुत्वा चाज्याहुतीस्तद्वत्तद्विप्रासेति होमयेत् ।
शेषहोमं ततः कृत्वा दद्यात् पूर्णाहुतित्रयं ॥ २० ॥
युञ्जतेत्यनुवाकन्तु (१) जप्त्वा प्राश्नीत वै चरुं ।
प्रणवेन स्वशब्दान्ते कृत्वा पात्रे तु पैप्पले ॥ २१ ॥
ततो मासाधिपानान्तु विप्रान् द्वादश भोजयेत् ।
त्रयोदशो गुरुस्तत्र तेभ्यो दद्यात्त्रयोदश ॥ २२ ॥
कुम्भान् स्वादम्बुसंयुक्तान् (२) सच्छत्रोपानहान्वितान् ।
सवस्त्रहेममाल्याढ्यान् व्रतपूर्त्यै त्रयोदश ॥ २३ ॥
गावः प्रीतिं समायान्तु प्रचरन्तु प्रहर्षिताः ।
इति गोपथमुत्सृज्य यूपं तत्र निवेशयेत् ॥ २४ ॥
दशहस्तं प्रपाऽऽराममठसङ्क्रमणादिषु ।
गृहे च होममेवन्तु कृत्वा सर्वं यथाविधि ॥ २५ ॥
पूर्वोक्तेन विधानेन प्रविशेच्च गृहं गृही ।
अनिवारितमन्नाद्यं सर्वेष्वेतेषु कारयेत् ॥ २६ ॥
द्विजेभ्यो दक्षिणा देया यथाशक्त्या विचक्षणैः ।
आरामं कारयेद्यस्तु नन्दने स चिरं वसेत् ॥ २७ ॥
मठप्रदानात् स्वर्लोके शक्रलोके वसेत्ततः ।
प्रपादानाद्वारुणेन सङ्क्रमेण वसेद्दिवि ॥ २८ ॥
इष्टकासेतुकारी च गोलोके मार्गकृद्भवां ।
नियमव्रतकृद्विष्णुः कृच्छ्रकृत्सर्वपापहा ॥ २९ ॥
गृहं दत्वा वसेत्स्वर्गे यावदाभूतसम्प्लवं ।

---

१ युञ्जतेत्यनुवाकस्तु इति ग, ङ, चिह्नितपुस्तकद्वयपाठः ।

२ स्वाद्वन्नसंयुक्तानिति ख, ग, घ, ङ, चिह्नितपुस्तकचतुष्टयपाठः ।

समुदायप्रतिष्ठेष्टा शिवादीनां महात्मनां ॥ ३० ॥

इत्यादिमहापुराणे आग्नेये समुदायप्रतिष्ठाकथनं नाम षट्षष्टितमोऽध्यायः ॥

—o0o—

## अथ सप्तषष्टितमोऽध्यायः ।

### जीर्णोद्धारविधानं ।

भगवानुवाच । जीर्णोद्धारविधिं वक्ष्ये भूषितां स्नपयेद्गुरुः (१) ।
अचलां विन्यसेद्गेहे अतिजीर्णां परित्यजेत् ॥ १ ॥
व्यङ्गां भग्नां च शैलाढ्यां न्यसेदन्यां च पूर्ववत् ।
संहारविधिना तत्र तत्त्वान् संहृत्य देशिकः ॥ २ ॥
सहस्रं नारसिंहेन हुत्वा तामुद्धरेद् गुरुः ।
दारवीं दारयेदग्नौ शैलजां प्रक्षिपेज्जले ॥ ३ ॥
धातुजां रत्नजां वापि अगाधे वा जलेऽम्बुधौ ।
यानमारोप्य जीर्णाङ्गं छाद्य वस्त्रादिना नयेत् ॥ ४ ॥
वादित्रैः प्रक्षिपेत्तोये गुरवे दक्षिणां ददेत् ।
यत्प्रमाणा च यद्द्रव्या तन्मानां स्थापयेद्दिने ।
कूपवापीतडागादेर्जीर्णोद्धारे महाफलं ॥ ५ ॥

इत्यादिमहापुराणे आग्नेये जीर्णोद्धारकथनं नाम सप्तषष्टितमोऽध्यायः ॥

———

१भूषिताञ्च यजेद् गुरुरिति घ, चिह्नितपुस्तकपाठः ।

# अथ अष्टषष्टितमोऽध्यायः।

## यात्रोत्सवविधिकथनं।

भगवानुवाच। वक्ष्ये विधिं चोत्सवस्य स्थापिते तु सुरे चरेत्।
तस्मिन्नब्दे चैकरात्रं त्रिरात्रञ्चाष्टरात्रकं ॥ १ ॥
उत्सवेन विना यस्मात् स्थापनं निष्फलं भवेत्।
अयने विषुवे चापि शयनोपवने गृहे(१) ॥ २ ॥
कारकस्यानुकूले वा यात्रान्देवस्य कारयेत्।
मङ्गलाङ्कुररोपैस्तु गीतनृत्यादिवाद्यकैः ॥ ३ ॥
शरावघटिकापालीस्त्वङ्कुरारोहणे हिताः।
यवाञ्छालींस्तिलान् मुद्गान् गोधूमान् सितसर्षपान् ॥ ४ ॥
कुलत्थमाषनिष्पावान् क्षालयित्वा तु वापयेत्।
पूर्वादौ च बलिं दद्यात् भ्रमन् दीपैः पुरं निशि ॥ ५ ॥
इन्द्रादेः कुमुदादेश्च सर्वभूतेभ्य एव च।
अनुगच्छन्ति ते तत्र प्रतिरूपधराः पुनः ॥ ६ ॥
पदे पदेऽश्वमेधस्य फलं तेषां न संशयः।
आगत्य देवतागारं देवं विज्ञापयेद् गुरुः ॥ ७ ॥
तीर्थयात्रा तु या देव श्वः कर्त्तव्या सुरोत्तम।
तस्यारम्भमनुज्ञातुमर्हसे देव सर्वथा ॥ ८ ॥
देवमेवन्तु विज्ञाप्य ततः कर्म्म समारभेत्(२)।
शरोद्घघटिकाभ्यान्तु वेदिकां भूषितां व्रजेत् ॥ ९ ॥

---

१ शयनोत्थापने गृहे इति ख, चिह्नितपुस्तकपाठः। शयनोत्थापने हरेरिति ङ, चिह्नितपुस्तकपाठः।

२ समाचरेदिति ग, चिह्नितपुस्तकपाठः।

चतुःस्तम्भान्तु तन्मध्ये स्वस्तिके प्रतिमां न्यसेत् ।
काम्यार्थां लेख्यचित्रेषु स्थाप्य तत्राधिवासयेत् ॥ १० ॥
वैष्णवैः सह कुर्वीत घृताभ्यङ्गन्तु मूलतः ।
घृतधाराभिषेकं वा सकलां शर्वरीं बुधः ॥ ११ ॥
दर्पणं दर्श्य नीराजं गीतवाद्यैश्च मङ्गलं ।
व्यजनं पूजनं दीपं गन्धपुष्पादिभिर्यजेत् ॥ १२ ॥
हरिद्रामुद्गकाश्मीरशुक्लचूर्णादि मूर्द्धनि ।
प्रतिमायाश्च भक्तानां सर्वतीर्थफलं धृते ॥ १३ ॥
स्नापयित्वा समभ्यर्च्य यात्राबिम्बं रथे स्थितं ।
नयेद्राष्ट्रं दीर्नादैश्छत्राद्यै राष्ट्रपालकाः ॥ १४ ॥
निम्नगायोजनादर्व्वाक् तत्र वेदीन्तु कारयेत् ।
वाहनादवतार्य्यैनं तस्यां वेद्यान्निवेशयेत् ॥ १५ ॥
चरुं वै श्रपयेत् तत्र पायसं होमयेत्ततः ।
अब्लिङ्गैः (१) वैदिकैर्मन्त्रैस्तीर्थानावाहयेत्ततः ॥ १६ ॥
आपो हिष्ठोपनिषदैः पूजयेदर्घ्यमुख्यकैः ।
पुनर्देवं समादाय तोये स्नात्वाऽघमर्षणं ॥ १७ ॥
स्नायान्महाजनैर्व्विप्रैर्वेद्यामुत्तार्य्य तं न्यसेत् ।
पूजयित्वा तदङ्गा च प्रासादं तु नयेत्ततः ।
पूजयेत् पावकस्थन्तु गुरुः स्याद्भुक्तिमुक्तिकृत् ॥ १८ ॥

इत्यादिमहापुराणे आग्नेये देवयात्रोत्सवकथनं नाम अष्टषष्टितमोऽध्यायः ॥

---

१ ऋषिकैरिति ग, चिह्नितपुस्तकपाठः ।

# अथोनसप्ततितमोऽध्यायः ।

## स्नानविधानं ।

अग्निरुवाच । ब्रह्मन् शृणु प्रवक्ष्यामि स्नपनोत्सवविस्तरं ।
प्रासादस्याग्रतः कुम्भान्मण्डपे मण्डले न्यसेत् ॥ १ ॥
कुर्य्याद् ध्यानार्चनं होमं हरेरादौ च कर्म्मसु ।
सहस्रं वा शतं वापि होमयेत् पूर्णया सह ॥ २ ॥
स्नानद्रव्याण्यथाहृत्य कलशांश्चापि विन्यसेत् ।
अधिवास्य सूत्रकण्ठान् धारयेन्मण्डले घटान् ॥ ३ ॥
चतुरस्रं पुरं कृत्वा रश्मिस्तं प्रविभाजयेत्(१) ।
मध्येन तु चरं स्थाप्य पार्श्वे पङ्क्तिं प्रमार्जयेत् ॥ ४ ॥
शालिचूर्णादिनापूर्य्य पूर्व्वादिनवकेषु च ।
कुम्भमुद्रां ततो बध्वा घटं तत्रानयेद् बुधः ॥ ५ ॥
पुण्डरीकाक्षमन्त्रेण दर्भांस्तांस्तु विसर्ज्जयेत् ।
अद्भिः पूर्णं सर्वरत्नयुतं मध्ये न्यसेद् घटं ॥ ६ ॥
यवव्रीहितिलांश्चैव नीवारान् श्यामकान् क्रमात् ।
कुलत्थमुद्गसिद्धार्थांस्तच्छुक्लानष्टदिक्षु च ॥ ७ ॥
ऐन्द्रे तु नवके मध्ये घृतपूर्णं घटं न्यसेत् ।
पलाशाश्वत्थन्यग्रोधविल्वोदुम्बरशीरिषां ॥ ८ ॥
जम्बूशमीकपित्थानां त्वक्कषायैर्घटाष्टकं ।
आग्नेयनवके मध्ये मधुपूर्णं घटं न्यसेत् ॥ ९ ॥
गोशृङ्गनगगङ्गागजेन्द्रदशनेषु च ।
तीर्थक्षेत्रखलेष्वष्टौ मृत्तिकाः स्युर्घटाष्टके ॥ १० ॥

---

१ प्रविभावयेदिति ख, ग, घ, चिह्नितपुस्तकत्रयपाठः ।

याम्ये तु नवके मध्ये तिलतैलघटं न्यसेत्।
नारङ्गमथ जम्बीरं खर्जूरं मधुकां क्रमात्॥ ११॥
नारिकेलं न्यसेत् पूगं दाडिमं पनसं फलं।
नैर्ऋते नवके मध्ये क्षीरपूर्णं घटं न्यसेत्॥ १२॥
कुङ्कुमं नागपुष्पञ्च चम्पकं मालतीं क्रमात्।
मल्लिकामथ पुन्नागं करवीरं महोत्पलं॥ १३॥
पुष्पाणि चाप्ये नवके मध्ये वै नारिकेलकम्।
नादेयमथ सामुद्रं सारसं कौपमेव च॥ १४॥
वर्षजं हिमतोयञ्च नैर्झरङ्गाङ्गमेव च।
उदकान्यथ वायव्ये नवके कदलीफलं॥ १५॥
सहदेवीं कुमारीं च सिंहीं व्याघ्रीं तथाऽमृतां।
विष्णुपर्णीं शतशिवां वचां दिव्यौषधीर्न्यसेत्॥ १६॥
पूर्व्वादौ सौम्यनवके मध्ये दधिघटं न्यसेत्।
पत्रमेलां त्वचं कुष्ठं बालकं चन्दनद्वयं॥ १७॥
लतां कस्तूरिकां चैव कृष्णागुरुमनुक्रमात्।
सिद्धद्रव्याणि पूर्वादौ शान्तितोयमथैकतः॥ १८॥
चन्द्रतारं क्रमाच्छुक्लं गिरिसारं त्रपु न्यसेत्।
घनसारं(१) तथा शीर्षं पूर्वादौ रत्नमेव च॥ १९॥
घृतेनाभ्यज्य चोद्वर्त्य स्नपयेन्मूलमन्त्रतः।
गन्धाद्यैः पूजयेदग्नौ हुत्वा पूर्णाहुतिं चरेत्॥ २०॥
बलिञ्च सर्वभूतेभ्यो भोजयेद्दत्तदक्षिणः।
देवैश्च मुनिभिर्भूपैर्देवं(२) संस्थाप्य चेश्वराः॥ २१॥

१ घोषसारमिति ख, ग, घ, चिह्नितपुस्तकत्रयपाठः।

२ देवैश्च मुनिभिः सार्द्धमिति ङ, चिह्नितपुस्तकपाठः। दिव्यैश्च वसिभिर्भूपैर्देवमिति घ, चिह्नितपुस्तकपाठः।

बभूवुः स्नापयित्वेत्थं स्नपनोत्सवकं चरेत् ।
अष्टोत्तरसहस्रेण घटानां सर्वभाग् भवेत् ॥ २२ ॥
यज्ञावभृथस्नानेन पूर्णसंस्नापनं कृतम् ।
गौरीलक्ष्मीविवाहादि चोत्सवं स्नानपूर्वकम् ॥ २३ ॥

इत्यादिमहापुराणे आग्नेये यज्ञावभृथस्नानं नाम ऊनसप्ततितमोऽध्यायः ॥

---

## अथ सप्ततितमोऽध्यायः ।

### वृक्षादिप्रतिष्ठाकथनं ।

भगवानुवाच । प्रतिष्ठां पादपानाञ्च वक्ष्येऽहं भुक्तिमुक्तिदां ।
सर्वौषध्युदकैर्लिप्तान् पिष्टातकविभूषितान् ॥ १ ॥
वृक्षान्माल्यैरलङ्कृत्य वासोभिरभिवेष्टयेत् ।
सूच्या सौवर्णया कार्य्यं सर्वेषां कर्णवेधनम् ॥ २ ॥
हेमशलाकयाऽञ्जनञ्च वेद्यान्तु फलसप्तकम् ।
अधिवासयेच्च प्रत्येकं घटान् बलिनिवेदनं ॥ ३ ॥
इन्द्रादेरधिवासोऽथ होमः कार्य्यो वनस्पतेः ।
वृक्षमध्यादुत्सृजेद्गां ततोऽभिषेकमन्त्रतः ॥ ४ ॥
ऋग्यजुःसाममन्त्रैश्च वारुणैर्मङ्गलै रवैः(१) ।
वृक्षवेदिककुम्भैश्च(२) स्नपनं द्विजपुङ्गवाः ॥ ५ ॥
तरूणां यजमानस्य कुर्य्युश्च यजमानकः ।
भूषितो दक्षिणां दद्याद्गोभूभूषणवस्त्रकं ॥ ६ ॥

---

१ वारुणैर्मनुभिर्वरैरिति ङ, चिह्नितपुस्तकपाठः ।
२ वृक्षवेदीस्थकुम्भैस्तु इति ङ, चिह्नितपुस्तकपाठः ।

क्षीरेण भोजनं दद्याद्यावद्दिनचतुष्टयं ।
होमस्तिलाद्यैः कार्यस्तु पलाशसमिधैस्तथा ॥ ७ ॥
आचार्ये द्विगुणं दद्यात् पूर्ववन् मण्डपादिकम् ।
पापनाशः परा सिद्धिर्वृक्षारामप्रतिष्ठया ॥ ८ ॥
स्कान्दायेशो यथा प्राह प्रतिष्ठाद्यं तथा हरेः ।
सूर्येशगणशक्त्यादेः परिवारस्य वै हरेः ॥ ९ ॥

इत्यादिमहापुराणे आग्नेये पादपारामप्रतिष्ठाकथनं नाम सप्ततितमोऽध्यायः ॥

---

## अथ एकसप्ततितमोऽध्यायः ।

### गणेशपूजाविधिः ।

ईश्वर उवाच । गणपूजां प्रवक्ष्यामि निर्विघ्नामखिलार्थदां(१) ।
गणाय स्वाहा हृदयमेकदंष्ट्राय वै शिरः ॥ १ ॥
गजकर्णिने च (२)शिखा गजवक्त्राय वर्म च ।
महोदराय स्वदन्तहस्तायाक्षि(३) तथाऽस्त्रकम् ॥ २ ॥
गणो गुरुः पादुका च शक्त्यनन्तौ च धर्मकः ।
मुख्यास्थिमण्डलं(४) चाधश्चोर्द्धं छदनमर्चयेत् ॥ ३ ॥
पद्मकर्णिकवीजांश्च ज्वालिनीं नन्दयाऽर्चयेत् ।
सूर्येशा कामरूपा च उदया कामवर्तिनी ॥ ४ ॥

---

१ निर्विघ्नां पापनाशिनीमिति ग, घ, चिह्नितपुस्तकद्वयपाठः ।
२ बलकर्णिने चेति ख, ग, घ, ङ, चिह्नितपुस्तकपाठः ।
३ महोदराये दण्डहस्तायाक्षि इति ङ, चिह्नितपुस्तकपाठः ।
४ मुख्यास्थिमण्डलमिति ख, ङ, चिह्नितपुस्तकद्वयपाठः ।

सत्या च विघ्ननाशा च आसनं गन्धमृत्तिका ।
यं शोषो रं च दहनं प्लवो लं वं तथाऽमृतम् ॥ ५ ॥
लम्बोदराय विद्महे महोदराय धीमहि तन्नो दन्ती प्रचोदयात् ।
गणपतिर्गणाधिपो गणेशो गणनायकः ।
गणक्रीडो वक्रतुण्ड एकदंष्ट्रो महोदरः ॥ ६ ॥
गजवक्त्रो लम्बकुक्षिर्विकटो विघ्ननाशनः(१) ।
धूम्रवर्णा महेन्द्राद्याः पूज्या गणपतेः स्मृताः ॥ ७ ॥

इत्यादिमहापुराणे आग्नेये विनायकपूजाकथनं नाम एकसप्ततितमोऽध्यायः ॥

---

## अथ द्विसप्ततितमोऽध्यायः ।

### स्नानविधिषादिकथनं ।

ईश्वर उवाच । वक्ष्यामि स्कन्द नित्याद्यं स्नानं पूजां प्रतिष्ठया ।
खात्वाऽसिना समुद्धृत्य मृदमष्टाङ्गुलां ततः ॥ १ ॥
सर्वात्मना समुद्धृत्य पुनस्तेनैव पूरयेत् ।
शिरसा पयसस्तीरे निधायास्त्रेण शोधयेत्(२) ॥ २ ॥
तृणानि शिखयोद्धृत्य वर्म्मणा विभजेत्त्रिधा ।
एकया नाभिपादान्तं प्रक्षाल्य पुनरन्यया ॥ ३ ॥
अस्त्राभिलब्धयालभ्य दीप्तया सर्वविग्रहं ।
निरुद्धाक्षाणि पाणिभ्यां प्राणान् संयम्य वारिणि ॥ ४ ॥
निमज्यासीत हृदयस्थं स्मरन् कालानलप्रभं ।

---

१ विघ्नराजक इति ङ, चिह्नितपुस्तकपाठः ।

२ निजास्त्रेण विशोधयेदिति ख, ग, चिह्नितपुस्तकद्वयपाठः ।

मलस्नानं विधायेत्थं समुत्थाय जलान्तरात् ॥ ५ ॥
अन्धसन्ध्यामुपास्याथ विधिस्नानं समाचरेत् ।
सारस्वतादितीर्थानां एकमङ्कुशमुद्रया ॥ ६ ॥
हृदाकृष्य तथा स्थाप्य पुनः संहारमुद्रया ।
ग्रेषं मृद्भागमादाय प्रविश्य नाभिवारिणि ॥ ७ ॥
वामपाणितले कुर्याद्भागत्रयमुदङ्मुखः ।
अङ्गैर्दक्षिणमेकाद्यं पूर्वमस्त्रेण सप्तधा ॥ ८ ॥
शिवेन दशधा सौम्यं जपेद्भागत्रयं क्रमात् ।
सर्वदिक्षु क्षिपेत् पूर्वं हुं फडन्तशरात्मना(१) ॥ ९ ॥
कुर्याच्छिवेन सौम्येन शिवतीर्थं भुजक्रमात् ।
सर्वाङ्गमङ्गजप्तेन मूर्द्धादिचरणावधि ॥ १० ॥
दक्षिणेन समालभ्य पठन्नङ्गचतुष्टयम् ।
पिधाय खानि सर्वाणि सम्मुखीकरणेन च ॥ ११ ॥
शिवं स्मरन्निमज्जेत हरिं गङ्गेति वा स्मरन् ।
वौषडन्तषडङ्गेन कं कुर्यादभिषेचनं ॥ १२ ॥
कुम्भपात्रेण रक्षार्थं पूर्वादौ निक्षिपेज्जलं ।
स्नात्वा राजोपचारेण सुगन्धामलकादिभिः ॥ १३ ॥
स्नात्वा चोत्तीर्य तत्तीर्थं संहारिण्योपसंहरेत् ।
अथातो विधिशुद्धेन संहितामन्त्रितेन च ॥ १४ ॥
निऋत्यादिविशुद्धेन भस्मना स्नानमाचरेत् ।
शिरसः पादपर्यन्तं ह्रूं फडन्तशरात्मना(२) ॥ १५ ॥
तेन कृत्वा मलस्नानं विधिस्नानं समाचरेत् ।

---

१ ह्रूं फडन्तशरात्मना इति ख, ङ, चिह्नितपुस्तकद्वयपाठः ।
२ ह्रूं फडन्तशरात्मना इति ख, ङ, चिह्नितपुस्तकद्वयपाठः ।

ईशानतत्पुरुषाघोरगुह्यकाजातसञ्ज्ञैः(१) ॥ १६ ॥
क्रमेणोद्धूनयेन्मूर्द्धि वक्त्रहृद्गुह्यविग्रहान् ।
सन्ध्याश्रये निशीथे च वर्षापूर्वावसानयोः ॥ १७ ॥
सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकम् ।
स्त्रीपुन्नपुंसकं शूद्रं बिडालशशमूषिकम् ॥ १८ ॥
स्नानमाग्नेयकं स्पृष्ट्वा शुचा वुद्धूलकं चरेत् ।
सूर्यांशुवर्षसम्पर्कैः प्राङ्मुखेनोर्द्ध्वबाहुना ॥ १९ ॥
माहेन्द्रं स्नानमैशेन कार्यं सप्तपदावधि ।
गोसङ्घमध्यगः कुर्यात् खुरोत्खातकरेणुभिः(२) ॥ २० ॥
पावनं नवमन्त्रेण स्नानन्तद्धर्मणाऽथवा ।
सद्योजातादिभिर्मन्त्रैरम्भोभिरभिषेचनम् ॥ २१ ॥
मन्त्रस्नानं भवेदेवं वारुणाग्नेययोरपि ।
मनसा मूलमन्त्रेण प्राणायामपुरःसरम् ॥ २२ ॥
कुर्वीत मानसं स्नानं सर्वत्र विहितं च यत् ।
वैष्णवादौ च तन्मन्त्रैरेवं स्नानादि कारयेत् ॥ २३ ॥
सन्ध्याविधिं प्रवक्ष्यामि मन्त्रैर्भिन्नैः समं गुह ।
संवीक्ष्य त्रिः पिबेदम्बु ब्रह्मतीर्थेन शङ्करैः ॥ २४ ॥
स्वधान्तैरात्मतत्त्वाद्यैस्ततः खानि स्पृशेद्धृदा ।
शकलीकरणं कृत्वा प्राणायामेन संस्थितः ॥ २५ ॥
त्रिः समावर्तयेन्मन्त्री मनसा शिवसंहितां ।
आचम्य न्यस्य सन्ध्याञ्च ब्राह्मीं प्रातः स्मरेन्नरः(३) ॥ २६ ॥
हंसपद्मासनां रक्तां चतुर्वक्त्रां चतुर्भुजां ।

---

१ गुह्यकाजातसंरवैरिति ख, चिह्नितपुस्तकपाठः ।
२ तत्खुरोत्खातरेणुभिरिति ख. चिह्नितपुस्तकपाठः ।
३ स्मरेत्तत इति ग, चिह्नितपुस्तकपाठः ।

प्रस्कन्दमालिनीं दक्षे वामे दण्डकमण्डलुं ॥ २७ ॥
तार्क्ष्यपद्मासनां ध्यायेन्मध्याह्ने वैष्णवीं सितां ।
शङ्खचक्रधरां वामे दक्षिणे सगदाभयं ॥ २८ ॥
रौद्रीं ध्यायेद् वृषारूढां त्रिनेत्रां शशिभूषितां ।
त्रिशूलाक्षधरां दक्षे वामे साभयशक्तिकां ॥ २९ ॥
साक्षिणीं कर्मणां सन्ध्यां(१) आत्मानं तत्प्रभानुगं ।
चतुर्थी ज्ञानिनः सन्ध्या निशीथादौ विभाव्यते ॥ ३० ॥
हृद्बिन्दुब्रह्मरन्ध्रेषु अरूपा तु परे स्थिता ।
शिवबोधपरा या तु सा सन्ध्या परमोच्यते ॥ ३१ ॥
पैत्र्यं मूले प्रदेशिन्याः कनिष्ठायाः प्रजापतेः ।
ब्राह्मग्रमङ्गुष्ठमूलस्थं तीर्थं दैवं करायतः ॥ ३२ ॥
सव्यपाणितले वह्नेस्तीर्थं सोमस्य वामतः ।
ऋषीणां तु समग्रेषु अङ्गुलीपर्व्वसन्धिषु ॥ ३३ ॥
ततः शिवात्मकैर्म्मन्त्रैः कृत्वा तीर्थं शिवात्मकं ।
मार्ज्जनं संहितामन्त्रैस्तत्तोयेन समाचरेत् ॥ ३४ ॥
वामपाणिपतत्तोययोजनं सव्यपाणिना ।
उत्तमाङ्गे क्रमान्मन्त्रैर्मार्जनं समुदाहृतं ॥ ३५ ॥
नीत्वा तदुपनासाग्रं दक्षपाणिपुटस्थितं ।
बोधरूपं सितं तोयं वाममाकृष्य स्तम्भयेत्(२) ॥ ३६ ॥
तत्पापं कज्जलाभासम्पिङ्गयारिच्य मुष्टिना ।
क्षिपेद्वज्रशिलायान्तु तद्भवेदघमर्षणं ॥ ३७ ॥
स्वाहान्तशिवमन्त्रेण कुशपुष्पाक्षतान्वितं ।
शिवायार्घ्याञ्जलिन्दत्वा गायत्रीं शक्तितो जपेत् ॥ ३८ ॥

---

१ दाक्षिण्यः कर्म्मणां सन्ध्या इति ख, चिह्नितपुस्तकपाठः ।

२ कुम्भयेदिति ख, ङ, चिह्नितपुस्तकपाठः ।

तर्पणं सम्प्रवक्ष्यामि देवतीर्थेन मन्त्रकात् ।
तर्पयेद्धौं शिवायेति स्वाहान्तान् स्वाहया युतान् ॥ ३९ ॥
ह्रां हृदयाय ह्रीं शिरसे ह्रूं शिखायै ह्रैं कवचाय ।
अस्त्रायाष्टौ देवगणान् हृदादिभ्य एव च ॥ ४० ॥
ह्रां वसुभ्योऽथ रुद्रेभ्यो विश्वेभ्यश्चैव मरुद्गणः ।
भृगुभ्यो ह्रामङ्गिरोभ्य ऋषीन् कण्ठोपवीत्यथ ॥ ४१ ॥
अत्रयेऽथ वसिष्ठाय नमस्ताथ पुलस्तये(१) ।
क्रतवे भारद्वाजाय विश्वामित्राय वै नमः ॥ ४२ ॥
प्रचेतसे मनुष्यांश्च सनकाय वषट् तथा ।
ह्रां सनन्दाय वषट् सनातनाय वै वषट् ॥ ४३ ॥
सनत्कुमाराय वषट् कपिलाय तथा वषट् ।
पञ्चशिखाय द्युभवे संलग्नकरमूलतः ॥ ४४ ॥
सर्व्वेभ्यो भूतेभ्यो वौषट् भूतान् देवपितॄनथ ।
दद्यात्स्वधोपवीती च कुशमूलाग्रतस्तिलैः ॥ ४५ ॥
कव्यबालानलायाथ सोमाय च यमाय च ।
अर्य्यम्णे चाग्निसोमाय बर्हिषद्भ्यः स्वधायुतान् ॥ ४६ ॥
आज्यपाय च सोमाय विशेषसुरवत् पितॄन् ।
ओं ह्रां ईशानाय पित्रे स्वधा दद्यात् पितामहे(२) ॥ ४७ ॥
शान्तप्रपितामहाय तथाप्रेतपितॄंस्तथा ।
पितृभ्यः पितामहेभ्यः स्वधाऽथ प्रपितामहे ॥ ४८ ॥
वृद्धप्रपितामहेभ्यो मातृभ्यश्च स्वधा तथा ।
ह्रां मातामहेभ्यः स्वधा ह्रां प्रमातामहेभ्यश्च ॥ ४९ ॥
वृद्धप्रमातामहेभ्यः सर्वेभ्यः पितृभ्यस्तथा ।

---

१ मरीचये पुलस्त्यायेति क, चिह्नितपुस्तकपाठः ।
२ ह्रां ईशानाय पित्रे च सदाज्याय पितामहायेति ख, चिह्नितपुस्तकपाठः ।

सर्वेभ्यः स्वधा ज्ञातिभ्यः सर्वाचार्य्येभ्य एव च ।
दिशां दिक्पतिसिद्धानां मातृणां ग्रहरक्षसां ॥ ५० ॥

इत्यादिमहापुराणे आग्नेये स्नानादिविधिर्नाम
द्विसप्ततितमोऽध्यायः ॥

---

## अथ त्रिसप्ततितमोऽध्यायः ।

### सूर्यपूजाविधिः ।

ईश्वर उवाच । वक्ष्ये सूर्य्यार्चनं स्कन्द कराङ्गन्यासपूर्वकं ।
अहं तेजोमयः सूर्य्य इति ध्यात्वाऽर्घ्यमर्चयेत् ॥ १ ॥
पूरयेद्रक्तवर्णेन ललाटाकृष्टबिन्दुना ।
तं सम्पूज्य रवेरङ्गैः कृत्वा रक्षावगुण्ठनं ॥ २ ॥
सम्प्रोक्ष्य तज्जलैर्द्रव्यं पूर्वास्यो भानुमर्चयेत् ।
ओं अं हृद्बीजादि(१) सर्वत्र पूजनं दण्डिपिङ्गलौ ॥ ३ ॥
द्वारि दक्षे वामपार्श्वे ईशाने अं गणाय च ।
अग्नौ गुरुं पीठमध्ये प्रभूतं चासनं यजेत् ॥ ४ ॥
अग्न्यादौ विमलं सारमाराध्यं परमं सुखं ।
सितरक्तपीतनीलवर्णान् सिंहनिभान् यजेत् ॥ ५ ॥
पद्ममध्ये रां च दीप्तां रीं सूक्ष्मां रुं जयां क्रमात्(२) ।
रूं भद्रां रें विभूतीश्च विमलां रैममोघया ॥ ६ ॥
रों रौं विद्युता शक्तिं पूर्वाद्याः सर्वतोमुखाः ।

---

१ ओं खां हृद्बीजादीति ख, चिह्नितपुस्तकपाठः ।
२ रुंजयां क्रमादिति ख, चिह्नितपुस्तकपाठः ।

रं मध्ये अर्कासनं स्यात् सूर्य्यमूर्त्तिं षडक्षरं ॥ ७ ॥
ओं हं खं खोल्काायेति यजेदावाह्य भास्करं ।
ललाटाञ्जलिमध्यां ध्यात्वा रक्तं न्यसेद्रविं ॥ ८ ॥
ह्रां ह्रीं सः(१) सूर्य्याय नमो मुद्रयावाहनादिकं ।
विधाय प्रीतये बिम्बमुद्रां गन्धादिकं ददेत् ॥ ९ ॥
पद्ममुद्रां बिल्वमुद्रां प्रदर्श्याग्नौ हृदीरितं ।
ओं आं हृदयाय नमः अर्काय शिरसे तथा ॥ १० ॥
भूर्भुवः स्वः सुरेशाय शिखायै(२) नैरृते यजेत् ।
ऊं कवचाय(३) वायव्ये ह्रां नेत्रायेति(४) मध्यतः ॥ ११ ॥
वः अस्त्रायेति पूर्वादौ ततो मुद्राः प्रदर्शयेत् ।
धेनुमुद्रा हृदादीनां गोविषाणा च नेत्रयोः ॥ १२ ॥
अस्त्रस्य त्रासनी योज्या ग्रहाणां च नमस्क्रिया ।
सों सोमं बुं बुधं वृं जीवं भं भार्गवं यजेत् ॥ १३ ॥
दले पूर्वादिकेऽग्न्यादौ अं भौमं शं शनैश्चरं ।
रं राहुं कें केतवे च गन्धाद्यैश्च खखोल्कया ॥ १४ ॥
मूलं जप्त्वार्घ्यपात्राम्बु दत्वा सूर्याय संस्तुतिः ।
नत्वा पराङ्मुखस्यार्क(५) क्षमस्वेति ततो वदेत् ॥ १५ ॥
शराणुना फडन्तेन समाहृत्याणुसंहृतिं(६) ।

१ ह्रीं ह्रं ह्रैं स इति घ, चिह्नितपुस्तकपाठः ।
२ सुरेशाय ज्वालिनिशिखायै इति ख, चिह्नितपुस्तकपाठः ।
३ हूं कवचाय इति ख, ङ, चिह्नितपुस्तकद्वयपाठः ।
४ ह्रौं नेत्रायेतीति ख, चिह्नितपुस्तकपाठः । भां नेत्रायेति ग, चिह्नितपुस्तकपाठः ।
५ पराङ्मुखस्यार्घ्यमिति ख, ग, चिह्नितपुस्तकद्वयपाठः ।
६ शराणुना फडन्तेन समाहृत्याणुसंहृतिमिति ख, चिह्नितपुस्तकपाठः । शराणुना फडन्तेन समहृत्यार्थे संहृतिमिति ग, चिह्नितपुस्तकपाठः ।

हृत्पद्मे शिवसूर्य्येतिसंहारिण्योपसंस्कृतिं(१) ॥ १६ ॥
योजयेत्तेजसाख्याय रविनिर्म्माल्यमर्पयेत् ।
अभ्यर्च्यैव(२) जपाद्ध्यानाद्धोमात्सर्वं रवेर्भवेत् ॥ १७ ॥

इत्यादिमहापुराणे आग्नेये सूर्य्यपूजा नाम
त्रिसप्ततितमोऽध्यायः ॥

—oOo—

## अथ चतुःसप्ततिमोऽध्यायः ।

### शिवपूजाकथनं ।

ईश्वर उवाच । शिवपूजां प्रवक्ष्यामि आचम्य प्रणवार्घ्यवान् ।
द्वारमस्त्राम्बुना प्रोक्ष्य होमादिद्वारपान्यजेत् ॥ १ ॥
गणं सरस्वतीं लक्ष्मीमूर्द्ध्वोदुम्बरके यजेत् ।
नन्दिगङ्गे दक्षिणेऽथ स्थिते(३) वामगते यजेत् ॥ २ ॥
महाकालं च यमुनां दिव्यदृष्टिनिपातितः ।
उत्सार्य्य दिव्यान् विघ्नांश्च पुष्पाक्षेपान्तरिक्षगान् ॥ ३ ॥
दक्षपार्ष्णित्रिभिर्घातैर्भूमिष्ठान्यागमन्दिरं ।
देहलीं लङ्घयेद्वामशाखामाश्रित्य वै विशेत् ॥ ४ ॥
प्रविश्य दक्षपादेन विन्यस्यास्त्रमुदुम्बरे ।
ओं हां वास्त्वधिपतये ब्रह्मणे मध्यतो यजेत् ॥ ५ ॥

---

१ संहारिण्योपसंहृतमिति ख, चिह्नितपुस्तकपाठः । संहारिण्योपसंहृतिमिति ग, ङ, चिह्नितपुस्तकद्वयपाठः ।

२ अभ्यर्च्य चेति ङ, चिह्नितपुस्तकपाठः ।

३ दक्षशाखास्थिते इति ख, ङ, चिह्नितपुस्तकद्वयपाठः ।

निरीक्षणादिभिः शस्त्रैः शुद्धानादाय गड्डुकान्(१)।
लब्धानुज्ञः शिवाम्मौनी गङ्गादिकमनुव्रजेत् ॥ ६ ॥
पवित्राङ्गः प्रजप्तेन वस्त्रपूतेन वारिणा।
पूरयेदम्बुधौ तांस्तान् गायत्र्या हृदयेन वा ॥ ७ ॥
गन्धकाक्षत(२) पुष्पादिसर्व्वद्रव्यसमुच्चयं।
सन्निधीकृत्य पूजार्थं भूतशुद्ध्यादि कारयेत् ॥ ८ ॥
देवदक्षे ततो न्यस्य सौम्यास्यश्च शरीरतः(३)।
संहारमुद्रयादाय मूर्द्धि मन्त्रेण(४) धारयेत् ॥ ९ ॥
भोग्यकर्म्मोपभोगार्थं पाणिकच्छपिकाख्यया।
हृदम्बुजे निजात्मानं द्वादशान्तपदेऽथवा ॥ १० ॥
शोधयेत् पञ्चभूतानि सञ्चिन्त्य सुषिरन्तनौ(५)।
चरणाङ्गुष्ठयोर्युग्मान् सुषिरान्तर्व्वहिः स्मरेत् ॥ ११ ॥
शक्तिं हृद्व्यापिनीं पश्चाद्दूङ्कारे(६) पावकप्रभे।
रन्ध्रमध्यस्थिते(७) कृत्वा प्राणरोधं हि चिन्तकः ॥ १२ ॥
निवेशयेद्रेचकान्ते(८) फडन्तेनाथ तेन च।
हृत्कण्ठतालु भ्रूमध्यब्रह्मरन्ध्रे विभिद्य च ॥ १३ ॥

---

१ गन्धकान् इति ङ, चिह्नितपुस्तकपाठः। लड्डुकानिति ख, चिह्नितपुस्तकपाठः।

२ गड्डुकाक्षतेति ङ, चिह्नितपुस्तकपाठः। गण्डूकाक्षतेति घ, चिह्नितपुस्तकपाठः।

३ सौम्यास्यः स्वशरीरत इति घ, चिह्नितपुस्तकपाठः।

४ मूर्त्तिसङ्केतेति ग, घ, ङ, चिह्नितपुस्तकत्रयपाठः।

५ स्वशिरस्तनौ इति ङ, चिह्नितपुस्तकपाठः।

६ पश्चाद्दोङ्कारे इति ङ चिह्नितपुस्तकपाठः।

७ चन्द्रमध्यस्थिते इति ख, चिह्नितपुस्तकपाठः। चक्रमध्यस्थिते इति ङ, चिह्नित-पुस्तकपाठः।

८ निवेशयेद्रेचकान्ते इति ख, चिह्नितपुस्तकपाठः।

ग्रन्थीन्भित्त्वा ह्रकारं मूर्द्ध्नि विन्यस्य जीवनं ।
सम्पुटं हृदयेनाथ पूरकाहितचेतनं ॥ १४ ॥
हूं शिखोपरि विन्यस्य शुद्धं विश्वात्मकं(१) स्मरेत् ।
कृत्वाथ कुम्भकं शम्भौ एकोद्घातेन योजयेत् ॥ १५ ॥
रेचकेन बीजवत्त्या शिवे लीनोऽथ शोधयेत् ।
प्रतिलोमं खदेहे तु(२) विन्दन्तं तत्र विन्दुकं ॥ १६ ॥
लयन्नीत्वा महीवातौ जलवह्नी परस्परं ।
द्वौ द्वौ साध्यौ तथाकाशमविरोधेन तच्छृणु ॥ १७ ॥
पार्थिवं मण्डलं पीतं कठिनं वज्रलाञ्छितं ।
ह्रौमित्यात्मीयबीजेन(३) तन्निवृत्तिकलामयं ॥ १८ ॥
पादादारभ्य मूर्द्धानं विचिन्त्य चतुरस्रकं ।
उद्घातपञ्चकेनैव वायुभूतं विचिन्तयेत् ॥ १९ ॥
अर्द्धचन्द्रं द्रवं सौम्यं शुभ्रमम्भोजलाञ्छितं(४) ।
ह्रीमित्यनेन बीजेन प्रतिष्ठारूपतां गतं ॥ २० ॥
संयुक्तं राममन्त्रेण(५) पुरुषान्तमकारणं ।
अर्घ्यं चतुर्भिरुद्घातैर्वह्निभूतं विशोधयेत् ॥ २१ ॥
आग्नेयं मण्डलं त्र्यस्रं रक्तं स्वस्तिकलाञ्छितं ।
हूमित्यनेन बीजेन विद्यारूपं विभावयेत् ॥ २२ ॥
घोरास्त्रैस्त्रिभिरुद्घातैर्जलभूतं विशोधयेत् ।

---

१ विष्ण्वात्मकमिति ख, चिह्नितपुस्तकपाठः ।

२ स्वदेहौ तु इति ख, चिह्नितपुस्तकपाठः ।

३ ह्रौमित्युमीय बीजेनेति ख, चिह्नितपुस्तकपाठः । ह्रौमित्याग्नेयबीजेनेति घ, चिह्नितपुस्तकपाठः ।

४ अर्द्धचन्द्रं ततः सौम्यं शिवं पूर्वेण योजयेदिति क, चिह्नितपुस्तकपाठः ।

५ वामं मन्त्रेणेति घ, चिह्नितपुस्तकपाठः । वामसमन्त्रेणेति ख, चिह्नितपुस्तकपाठः ।

षडस्रं मण्डलं वायोर्विन्दुभिः षड्भिरङ्कितं ॥ २३ ॥
छायां क्रमिति वीजेन जातं शान्तिकलामयं ।
सञ्चिन्त्योद्घातयुग्मेन पृथ्वीभूतं विशोधयेत् ॥ २४ ॥
नभोविन्दुमयं वृत्तं विन्दुशक्तिविभूषितं ।
व्योमाकारं सुवृत्तञ्च शुद्धस्फटिकनिर्मलं ॥ २५ ॥
हौङ्कारेण फडन्तेन शान्त्यतीतकलामयं ।
ध्यात्वैकोद्घातयोगेन सुविशुद्धं विभावयेत् ॥ २६ ॥
आप्याययेत्ततः सर्वं मूलेनामृतवर्षिणा(१) ।
आधाराख्यामनन्तञ्च धर्म्मज्ञानादिपङ्कजं ॥ २७ ॥
हृदासनमिदं(२) ध्यात्वा मूर्त्तिमावाहयेत्ततः ।
सृष्ट्वा शिवमयं तस्यामात्मानं द्वादशान्ततः ॥ २८ ॥
अथ तां शक्तिमन्त्रेण वौषडन्तेन सर्वतः ।
दिव्यामृतेन सम्प्लाव्य कुर्वीत सकलीकृतं ॥ २९ ॥
हृदयादिकरान्तेषु(३) कनिष्ठाद्यङ्गुलीषु च ।
हृदादिमन्त्रविन्यासः सकलीकरणं मतं ॥ ३० ॥
अस्त्रेण रक्ष्य प्राकारं तन्मन्त्रेणाथ तद्बहिः ।
शक्तिजालमधश्चोर्द्ध्वं महामुद्रां प्रदर्शयेत् ॥ ३१ ॥
आपादमस्तकं यावद् भावपुष्पैः(४) शिवं हृदि ।
पद्मे यजेत् पूरकेण आकृष्टामृतसद्घृतैः ॥ ३२ ॥
शिवमन्त्रैर्नाभिकुण्डे तर्पयेत शिवानलं ।

---

१ मूलेनामृतवर्षणादिति ख, चिह्नितपुस्तकपाठः ।
२ हृदासनमिदमिति ख, चिह्नितपुस्तकपाठः ।
३ हृदयादिषडङ्गेन इति ख, चिह्नितपुस्तकपाठः ।
४ तावत् पुष्पैरिति ख, चिह्नितपुस्तकपाठः ।

ललाटे बिन्दुरूपञ्च चिन्तयेच्छुभविग्रहं(१) ॥ ३३ ॥
एकं स्वर्णादिपात्राणां पात्रमस्त्राम्बुशोधितं ।
बिन्दुप्रसूतपीयूषरूपतोयाक्षतादिना ॥ ३४ ॥
हृदापूर्य्य षडङ्गेन पूजयित्वाऽभिमन्त्रयेत् ।
संरक्ष्य हेति मन्त्रेण कवचेन विगुण्ठयेत् ॥ ३५ ॥
दर्शयित्वाऽर्घ्यमुद्राञ्च सेचयेद्धेनुमुद्रया(२) ।
अभिषिञ्चेदथात्मानं मूर्द्ध्नि तत्तोयबिन्दुना ॥ ३६ ॥
तत्रस्थं यागसम्भारं प्रोक्षयेदस्त्रवारिणा ।
अभिमन्त्र्य हृदा पिण्डैस्तनुत्राणेन वेष्टयेत् ॥ ३७ ॥
दर्शयित्वाऽमृतां मुद्रां पुष्पं दत्त्वा निजासने ।
विधाय तिलकं मूर्द्ध्नि पुष्पं मूलेन योजयेत् ॥ ३८ ॥
स्नाने देवार्च्चने होमे भोजने यागयोगयोः ।
आवश्यके जपे धीरः सदा वाचंयमो भवेत् ॥ ३९ ॥
नादान्तोच्चारणान्मन्त्रं शोधयित्वा सुसंस्कृतं ।
पूजनेऽभ्यर्च्य गायत्र्या सामान्यार्घ्यमुपाहरेत् ॥ ४० ॥
ब्रह्मपञ्चकमावर्त्य माल्यमादाय लिङ्गतः ।
ऐशान्यान्दिशि चण्डाय हृदयेन निवेदयेत् ॥ ४१ ॥
प्रक्षाल्य पिण्डिकालिङ्गे अस्त्रतोये ततो हृदा ।
अर्घ्यपात्राम्बुना सिञ्चेदिति लिङ्गविशोधनं ॥ ४२ ॥
आत्मद्रव्यमन्त्रलिङ्गशुद्धौ सर्वान् सुरान्यजेत् ।
वायव्ये गणपतये हां गुरुभ्योऽर्च्चयेच्छिवे ॥ ४३ ॥

---

१ चिन्तयेत् इपरिमञ्चमिति क, चिह्नितपुस्तकपाठः ।
२ रोचयेद्धेनुमुद्रयेति ख, चिह्नितपुस्तकपाठः ।

आधारशक्तिमङ्कुरनिभां कूर्म्मशिलास्थितां ।
यजेद् ब्रह्मशिलारूढं शिवस्यानन्तमासनं ॥ ४४ ॥
विचित्रकेशप्रख्यानमन्योन्यं दृष्टदर्शिनः ।
कृतत्रेतादिरूपेण शिवस्यासनपादुकां ॥ ४५ ॥
धर्म्मं ज्ञानञ्च वैराग्यमैश्वर्य्यञ्चाग्निदिङ्मुखान् ।
कर्पूरकुङ्कुमस्वर्णकज्जलाभान् यजेत् क्रमात् ॥ ४६ ॥
पद्मञ्च कर्णिकामध्ये पूर्वादौ मध्यतो नव ।
वरदाभयहस्ताश्च शक्तयो धृतचामराः ॥ ४७ ॥
वामा ज्येष्ठा च रौद्री च काली कलविकारिणी ।
बलविकरणी पूज्या बलप्रमथनी क्रमात् ॥ ४८ ॥
हां सर्व्वभूतदमनी केशराग्रे मनोन्मनी ।
क्षित्यादिशुद्धविद्यान्तु तत्त्वव्यापकमासनं ॥ ४९ ॥
न्यसेत् सिंहासने देवं शुक्लं पञ्चमुखं विभुं ।
दशबाहुं च खण्डेन्दुं दधानन्दक्षिणैः करैः ॥ ५० ॥
शक्त्यृष्टिशूलखट्वाङ्गवरदं वामकैः करैः ।
डमरुं वीजपूरञ्च नीलाब्जं सूत्रकोत्पलं ॥ ५१ ॥
द्वात्रिंशल्लक्षणोपेतां शैवीं मूर्त्तिन्तु मध्यतः ।
हां हं हां शिवमूर्त्तये स्वप्रकाशं शिवं स्मरन् ॥ ५२ ॥
ब्रह्मादिकारणत्यागान्मन्त्रं नीत्वा शिवास्पदं ।
ततो ललाटमध्यस्थं स्फुरत्तारापतिप्रभं ॥ ५३ ॥
षडङ्गेन समाकीर्णं विन्दुरूपं परं शिवं ।
पुष्पाञ्जलिगतं ध्यात्वा लक्ष्मीमूर्त्तौ निवेशयेत् ॥ ५४ ॥
ओं हां हौं शिवाय नम आवाहन्या हृदा ततः ।
आवाह्य स्थाप्य स्थापन्या सन्निधायान्तिकं शिवं ॥ ५५ ॥
निरोधयेन्निष्ठुरया कालकान्या फडन्ततः ।

विघ्नानुत्सार्य्य विष्टराय(१) लिङ्गमुद्रां नमस्कृतिं ॥ ५६ ॥
हृदावगुण्ठयेत् पश्चादावाह्य सम्मुखी ततः।
निवेशनं स्थापनं स्यात्सन्निधानं तवास्मि भोः ॥ ५७ ॥
आकर्म्मकाण्डपर्य्यन्तं सन्निधेयोपरिस्थयः।
स्वभक्तेभ्य(२) प्रकाशोयस्तद्भवेदवगुण्ठनं ॥ ५८ ॥
सकलीकरणं कृत्वा मन्त्रैः षड्भिरथैकता।
अङ्गानामङ्गिना सार्द्धं विदध्यादमृतीकृतं ॥ ५९ ॥
चिच्छक्तिहृदयं शम्भोः शिव ऐश्वर्य्यमष्टधा(३)।
शिखावशित्वं चाभेद्यं तेजः कवचमैश्वरं ॥ ६० ॥
प्रतापो दुःसहश्चास्त्रमन्तरायापहारकं।
नमः स्वधा च स्वाहा च वौषट् चेति यथाक्रमं ॥ ६१ ॥
हृत्पुरःसरमुच्चार्य्य पाद्यादीनि निवेदयेत्।
पाद्यं पादाम्बुजद्वन्द्वे वक्त्रे त्वाचमनीयकं ॥ ६२ ॥
अर्घ्यं शिरसि देवस्य दूर्व्वापुष्पाक्षतानि च।
एवं संस्कृत्य संस्कारैर्दशभिः परमेश्वरं ॥ ६३ ॥
यजेत् पञ्चोपचारेण विधिना कुसुमादिभिः।
अभ्युक्ष्योद्वर्त्य निर्म्मञ्छ्य राजिकालवणादिभिः ॥ ६४ ॥
अर्घ्योदविन्दुपुष्पाद्यैर्गडुकैः(४) स्नापयेच्छनैः।
पयोदधिघृतक्षौद्रशर्क्कराद्यैरनुक्रमात् ॥ ६५ ॥
ईशादिमन्त्रितद्रव्यैरर्च्य तेषां(५) विपर्य्ययः।

---

१ क्षोटग्राय इति ख, चिह्नितपुस्तकपाठः।

२ स्वमुक्तेभ्या इति ग, चिह्नितपुस्तकपाठः।

३ शिवमैश्वर्य्यमष्टधा इति ग, घ, चिह्नितपुस्तकद्वयपाठः।

४ गन्धकैरिति ख, चिह्नितपुस्तकपाठः।

५ इत्यादिमन्त्रितैर्भक्ष्यैस्तेषामिति ख, चिह्नितपुस्तकपाठः।

तोयधूपान्तरैः सर्वमूलेन स्नपयेच्छिवं ॥ ६६ ॥
विरूक्ष्य यवचूर्णेन यथेष्टं शीतलैर्जलैः ।
स्वशक्त्या गन्धतोयेन संस्नाप्य शुचिवाससा ॥ ६७ ॥
निर्म्मार्ज्यार्घ्यं प्रदद्याच्च नोपरि भ्रामयेत् करं ।
न शून्यमस्तकं लिङ्गं पुष्पैः कुर्य्यात्ततो ददेत् ॥ ६८ ॥
चन्दनाद्यैः समालभ्य पुष्पैः प्रार्च्य शिवाणुना(१) ।
धूपभाजनमस्त्रेण प्रोक्ष्याभ्यर्च्य शिवाणुना(२) ॥ ६९ ॥
अस्त्रेण पूजितां घण्टां चादाय गुग्गुलं ददेत् ।
दद्यादाचमनं पश्चात् स्वधान्तं हृदयाणुना(३) ॥ ७० ॥
आरात्रिकं समुत्ताय्यं तथैवाचामयेत् पुनः ।
प्रणम्यादाय देवाज्ञां भोगाङ्गानि प्रपूजयेत् ॥ ७१ ॥
हृदग्नौ चन्द्रभं चेशे शिवं चामीकरप्रभं ।
शिखां रक्ताञ्च नैर्ऋत्ये कृष्णां वर्म्म च वायवे ॥ ७२ ॥
चतुर्वक्त्रं चतुर्बाहुं(४) दलस्थान्(५) पूजयेदिमान् ।
दंष्ट्राकरालमप्यस्त्रं पूर्वदौ वज्रसन्निभं ॥ ७३ ॥
मूले हौं शिवाय नमः ओं हां हृं हीं हों शिरश्च ।
हृं शिखायै हैं वर्म्म हश्चास्त्रं परिवारयुताय च ॥ ७४ ॥
शिवाय दद्यात् पाद्यञ्च आचामञ्चार्घ्यमेव च ।
गन्धं पुष्पं धूपदीपं नैवेद्याचमनीयकं ॥ ७५ ॥
करोद्वर्त्तनताम्बूलं मुखवासञ्च दर्पणं ।

---

१ शिवात्मनेति ख, चिह्नितपुस्तकपाठः ।
२ शिवात्मनेति ख, चिह्नितपुस्तकपाठः ।
३ हृदयात्मनेति ख, चिह्नितपुस्तकपाठः ।
४ चतुर्वक्त्रांश्चतुर्बाहून् इति घ, ङ, चिह्नितपुस्तकद्वयपाठः ।
५ दलाग्रे इति ङ, चिह्नितपुस्तकपाठः ।

शिरस्यारोप्य देवस्य दूर्वाक्षतपवित्रकं ॥ ७६ ॥
मूलमष्टशतं जप्त्वा हृदयेनाभिमन्त्रितं ।
चर्म्मणावेष्टितं खड्गं रक्षितं कुशपुष्पकैः ॥ ७७ ॥
अक्षतैर्मुद्रया युक्तं शिवमुद्भवसञ्ज्ञया ।
गुह्यातिगुह्यगुप्तर्थं(१) गृहाणास्मत्कृतं जपं ॥ ७८ ॥
सिद्धिर्भवतु मे येन(२) त्वत्प्रसादात्त्वयि स्थिते ।
भोगी श्लोकं पठित्वाद्यं(३) दक्षहस्तेन शम्भवे ॥ ७९ ॥
मूलाणुनार्घ्यतोयेन वरहस्ते(४)निवेदयेत् ।
यत्किञ्चित् कुर्म्महे देव सदा सुकृतदुष्कृतं ॥ ८० ॥
तन्मे शिवपदस्थस्य हुं क्षः क्षेपय शङ्कर ।
शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत् ॥ ८१ ॥
शिवो जयति सर्वत्र यः शिवः सोऽहमेव च ।
श्लोकद्वयमधीत्यैवं जपं देवाय चार्प्पयेत् ॥ ८२ ॥
शिवाङ्गानां(५) दशांशञ्च दत्वार्घ्यं स्तुतिमाचरेत् ।
प्रदक्षिणीकृत्य नमेच्चाष्टमूर्त्तये(६) ।
नत्वा ध्यानादिभिश्चैव यजेच्चित्रेऽनलादिषु ॥ ८३ ॥

इत्यादिमहापुराणे आग्नेये शिवपूजा नाम
चतुःसप्ततितमोऽध्यायः ॥

---

१ गुह्यातिगुह्यगोप्ता त्वमिति ग, ङ, चिह्नितपुस्तकद्वयपाठः ।
२ सिद्धिर्भवतु मे देवेति ख, ग, चिह्नितपुस्तकद्वयपाठः ।
३ पठित्वामुमिति ख, चिह्नितपुस्तकपाठः ।
४ वरहस्ते इति ग, चिह्नितपुस्तकपाठः ।
५ शिवज्ञानामिति ख, चिह्नितपुस्तकपाठः ।
६ नमेदष्टाङ्गमूर्त्तये इति ङ, चिह्नितपुस्तकपाठः ।

# अथ पञ्चसप्ततितमोऽध्यायः ।

## अग्निस्थापनादिविधिः ।

ईश्वर उवाच । अर्घपात्रकरो यायादग्न्यागारं सुसंवृतः ।
यागोपकरणं सर्वं दिव्यदृष्ट्या च कल्पयेत्(१) ॥ १ ॥
उदङ्मुखः कुण्डमीक्षेत् प्रोक्षणं ताडनं कुशैः ।
विदध्यादस्त्रमन्त्रेण वर्म्मणाभ्युक्षणं मतं ॥ २ ॥
खड्गेन खातमुद्धारं पूरणं समतामपि ।
कुर्वीत वर्म्मणा सेकं कुट्टनन्तु शरात्मना(२) ॥ ३ ॥
सम्मार्ज्जनं समालेपं कलारूपप्रकल्पनं ।
त्रिसूत्रीपरिधानं च वर्म्मणाभ्यर्च्चनं सदा ॥ ४ ॥
रेखात्रयमुदक् कुर्य्यादेकां पूर्व्वाननामधः ।
कुशेन च शिवास्त्रेण यद्वा तासां विपर्य्ययः ॥ ५ ॥
वज्रीकरणमन्त्रेण हृदा दर्भैश्चतुष्पथं ।
अक्षपात्रन्तनुत्रेण विन्यसेद्विष्टरं हृदा ॥ ६ ॥
हृदा वागीश्वरीं तत्र ईशमावाह्य पूजयेत् ।
वह्निं सदाश्रयानीतं शुद्धपात्रोपरिस्थितं ॥ ७ ॥
क्रव्यादांशं परित्यज्य वीक्षणादिविशोधितं ।
औदर्य्यं चैन्दवं भौतं एकीकृत्यानलत्रयं ॥ ८ ॥
ओं हूं वह्निचैतन्याय वह्निवीजेन विन्यसेत् ।
संहितामन्त्रितं वह्निं धेनुमुद्रामृतीकृतं ॥ ९ ॥
रक्षितं हेतिमन्त्रेण.कवचेनावगुण्ठितं ।
पूजितन्त्रिः परिभ्राम्य कुण्डस्योर्द्ध्वं प्रदक्षिणं ॥ १० ॥

---

१ दिव्यदृष्ट्या विलोकयेदिति घ, ङ, चिह्नितपुस्तकद्वयपाठः ।
२ शराणुनेति ङ, चिह्नितपुस्तकपाठः ।

शिवबीजमिति ध्यात्वा वागीशागर्भगोचरे।
वागीश्वरेण देवेन क्षिप्यमानं विभावयेत् ॥ ११ ॥
भूमिष्ठजानुको मन्त्री हृदात्मसम्मुखं क्षिपेत्।
ततोऽन्तःस्थितबीजस्य(१) नाभिदेशे समूहनं ॥ १२ ॥
सम्भृतिं परिधानस्य शौचमाचमनं हृदा।
गर्भाग्नेः पूजनं कृत्वा तद्रक्षार्थं शरात्मना(२) ॥ १३ ॥
बध्नीयाद्गर्भजं देव्याः कङ्कणं पाणिपल्लवे।
गर्भाधानाय सम्पूज्य सद्योजातेन पावकं ॥ १४ ॥
ततो हृदयमन्त्रेण जुहुयादाहुतित्रयं।
पुंसवनाय वामेन तृतीये मासि पूजयेत् ॥ १५ ॥
आहुतित्रितयं दद्याच्छिरसाम्बुकणान्वितं।
सीमन्तोन्नयनं षष्ठे मासि सम्पूज्य रूपिणा ॥ १६ ॥
जुहुयादाहुतीस्तिस्रः शिखया शिखयैव तु।
वक्त्राङ्गकल्पनां कुर्य्याद्वक्त्रोद्घाटननिष्कृती ॥ १७ ॥
जातकर्म्मन्टकर्म्मभ्यां दशमे मासि पूर्ववत्।
वह्निं सन्धुक्ष्य दर्भाद्यैः(३) स्नानं गर्भमलापहं ॥ १८ ॥
सुवर्णबन्धनं देव्या कृतं ध्यात्वा हृदार्चयेत्।
सद्यःसूतकनाशाय प्रोक्षयेदस्त्रवारिणा ॥ १९ ॥
कुम्भन्तु(४) वहिरस्त्रेण ताडयेद्वर्म्मणोक्षयेत्।
अस्त्रेणोत्तरपूर्व्वाग्रान्मेखलासु वहिः कुशान् ॥ २० ॥

---

१ ततोऽन्तःस्थितदेवस्य इति ख, चिह्नितपुस्तकपाठः।
२ शरात्मना इति ख. चिह्नितपुस्तकपाठः।
३ गन्धाद्यैरिति ख, चिह्नितपुस्तकपाठः।
४ कुण्डन्तु इति ख, ङ' चिह्नितपुस्तकद्वयपाठः।

आस्थाप्य(१) स्थापयेत्तेषु हृदा परिधिविस्तरं ।
वक्त्राणामस्त्रमन्त्रेण ततो नालापनुत्तये ॥ २१ ॥
समिधः पञ्च होतव्याः प्रान्ते मूले घृतप्लुताः ।
ब्रह्माणं शङ्करं विष्णुमनन्तञ्च हृदार्चयेत् ॥ २२ ॥
दूर्वाक्षतैश्च पर्य्यन्तं परिधिस्थाननुक्रमात् ।
इन्द्रादीशानपर्य्यन्तान्विष्टरस्थाननुक्रमात् ॥ २३ ॥
अग्नेरभिमुखीभूतान् निजदिक्षु हृदार्चयेत् ।
निवार्य्य विघ्नसङ्घातं बालकं पालयिष्यथ ॥ २४ ॥
शैवीमाज्ञामिमान्तेषां श्रावयेत्तदनन्तरं ।
गृहीत्वा स्रुक्स्रुवावूर्द्ध्ववदनाधोमुखैः क्रमात् ॥ २५ ॥
प्रताप्याग्नौ त्रिधा दर्भमूलमध्याग्रकैः स्पृशेत् ।
कुशस्पृष्टप्रदेशे तु आत्मविद्याशिवात्मकं ॥ २६ ॥
क्रमात्तत्त्वत्रयं न्यस्य हां हीं हूं सं(२) रवैः क्रमात् ।
स्रुचि शक्तिं स्रुवे शम्भुं विन्यस्य हृदयाणुना ॥ २७ ॥
त्रिसूत्रीवेष्टितग्रीवौ पूजितौ कुसुमादिभिः ।
कुशानामुपरिष्टात्तौ स्थापयित्वा स्वदक्षिणे ॥ २८ ॥
गव्यमाज्यं समादाय वीक्षणादिविशोधितं ।
स्वकां ब्रह्ममयीं मूर्त्तिं सञ्चिन्त्यादाय तद्घृतं ॥ २९ ॥
कुण्डस्योर्द्ध्वं हृदावर्त्य भ्रामयित्वाग्निगोचरे ।
पुनर्व्विष्णुमयीं ध्यात्वा घृतमीशानगोचरे ॥ ३० ॥
धृत्वादाय कुशाग्रेण स्वाहान्तं शिरसाणुना(३) ।

---

१ आलोर्येति घ, ङ, चिह्नितपुस्तकद्वयपाठः ।

२ हां ह्रीं ह्रूं समिति ख, चिह्नितपुस्तकपाठः । हूं हां क्रूं समिति ङ, चिह्नित-पुस्तकपाठः ।

३ शिरसात्मना इति ख चिह्नितपुस्तकपाठः ।

जुहुयाद्विश्ववे विन्दु बद्धरूपमनन्तरं ॥ ३१ ॥
भावयन्निजमात्मानं नाभौ धृत्वाग्निवेश्वतः ।
प्रादेशमात्रदर्भाभ्यामङ्गुष्ठानामिकाग्रकैः ॥ ३२ ॥
धृताभ्यां सम्मुखं वह्नेरस्त्रेणाप्लवमाचरेत् ।
हृदात्मसम्मुखं तद्वत् कुर्य्यात् सम्प्लवनन्ततः ॥ ३३ ॥
हृदास्त्रदग्धदर्भं चास्त्रक्षेपात् पवित्रयेत् ।
दीप्तेनापरदर्भेण निवाह्यानेन दीपयेत् ॥ ३४ ॥
अस्त्रमन्त्रेण निर्दग्धं वह्नौ दर्भं पुनः क्षिपेत् ।
छित्त्वा घृते क्षतग्रन्थिकुशं प्रादेशसम्मितं ॥ ३५ ॥
पक्षद्वयमिडादीनां त्रयं चाज्ये विभावयेत् ।
क्रमाद्भागत्रयादाज्यं स्रुवेणादाय होमयेत् ॥ ३६ ॥
स्वेत्यग्नौ हा घृते(१) भागं प्रथमाज्यं क्षिपेत् क्रमात् ।
ओं हां अग्नये स्वाहा । ओं हां सोमाय स्वाहा ।
ओं हां अग्नीषोमाभ्यां स्वाहा ।
उद्घाटनाय नेत्राणां अग्नेर्नेत्रत्रये मुखे ॥ ३७ ॥
स्रुवेण घृतपूर्णेन चतुर्थीमाहुतिं यजेत् ।
ओं हां अग्नये स्विष्टकृते स्वाहा ।
अभिमन्त्र्य षडङ्गेन बोधयेद्धेनुमुद्रया ॥ ३८ ॥
अवगुण्ठ्य तनुत्रेण रक्षेदाज्यं शरात्मना(२) ।
हृदाज्यविन्दुविक्षेपात् कुर्य्यादभ्युक्ष्य शोधनं ॥ ३९ ॥
वक्त्राभिघारसन्धानं वक्त्रैकीकरणं तथा ।
ओं हां सद्योजाताय स्वाहा । ओं हां वामदेवाय स्वाहा । ओं हां

१ स्वाहेत्यग्नौ घृते इति क, चिह्नितपुस्तकपाठः ।
२ शरात्मकेति ख, चिह्नितपुस्तकपाठः ।

अघोराय स्वाहा। ओं तत्पुरुषाय स्वाहा। ओं हां ईशानाय स्वाहा।

इत्येकैकघृताहुत्या कुर्य्याद्वक्त्राभिघारकं ॥ ४० ॥

ओं हां सद्योजातवामदेवाभ्यां स्वाहा। ओं हां वामदेवाघोराभ्यां स्वाहा। ओं हां अघोरतत्पुरुषाभ्यां स्वाहा। ओं हां तत्पुरुषेशानाभ्यां स्वाहा।

इतिवक्त्रानुसन्धानं मन्त्रैरेभिः क्रमाच्चरेत्।
अग्नितो गतया वायुं निर्ऋतादिशिवान्तया ॥ ४१ ॥
वक्त्राणामेकतां कुर्य्यात् स्रुवेण घृतधारया।
ओं हां सद्योजातवामदेवाघोरतत्पुरुषेशानेभ्यः स्वाहा।
इतीष्टवक्त्रे वक्त्राणामन्तर्भावस्तदाहुतिः ॥ ४२ ॥
ईशेन वह्निमभ्यर्च्य दत्वास्त्रेणाहुतित्रयं।
कुर्य्यात् सर्व्वात्मना नाम शिवाग्निस्त्वं हुताशन ॥ ४३ ॥
हृदार्च्चितौ विसृष्टाग्नौ पितरौ विधिपूरणौ।
मूलेन वौषडन्तेन दद्यात् पूर्णां यथाविधि ॥ ४४ ॥
ततो हृदम्बुजे साङ्गं ससेनं भासुरं परं(१)।
यजेत् पूर्व्ववदावाह्य प्रार्थ्याज्ञान्तर्प्ययेच्छिवं ॥ ४५ ॥
यागाग्निशिवयोः कृत्वा नाडीसन्धानमात्मना।
शक्त्या मूलाणुना होमं कुर्य्याद्दशांशतः ॥ ४६ ॥
घृतस्य कार्षिको होमः क्षीरस्य मधुनस्तथा।
शुक्तिमात्राहुतिर्दध्नः प्रसृतिः पायसस्य तु ॥ ४७ ॥
यथावत् सर्व्वभक्ष्याणां लाजानां मुष्टिसम्मितं।
खण्डत्रयन्तु मूलानां फलानां स्वप्रमाणतः ॥ ४८ ॥

१ ससेनं भास्करं परमिति ख, चिह्नितपुस्तकपाठः। शासनं भास्करं परमिति ग, चिह्नितपुस्तकपाठः। शासनं भासुरं परमिति ङ, चिह्नितपुस्तकपाठः। शासनं यचरं परमिति च, चिह्नितपुस्तकपाठः।

ग्रासार्द्धमात्रमन्नानां सुच्यात्रि पञ्च होमयेत् ।
इक्षोरापर्ब्बिकं मानं लतानामङ्गुलद्वयं ॥ ४९ ॥
पुष्पं पत्रं स्वमानेन समिधां तु दशाङ्गुलं ।
चन्द्रचन्दनकाश्मीरकस्तूरीयक्षकर्द्दमान् ॥ ५० ॥
कलायसम्मितानेतान् गुग्गुलुं वदरास्थिवत् ।
कन्दानामष्टमं भागं जुहुयाद्विधिवत् परं ॥ ५१ ॥
होमं निर्वर्त्तयेदेवं ब्रह्मवीजपदैस्ततः ।
घृतेन स्रुचि पूर्णायां निधायाधोमुखं स्रुवं ॥ ५२ ॥
स्रुगग्रे पुष्पमारोप्य पश्चाद्वामेन पाणिना ।
पुनः सव्येन तौ धृत्वा शङ्खसन्निभमुद्रया ॥ ५३ ॥
समुद्गतोऽर्द्धकायश्च समपादः समुत्थितः ।
नाभौ तन्मूलमाधाय स्रुगग्रन्यस्तलोचनः ॥ ५४ ॥
ब्रह्मादिकारणात्यागाद्विनिःसृत्य सुषुम्णया(१) ।
वामस्तनान्तमानीय तयोर्मूलमतन्द्रितः ॥ ५५ ॥
मूलमन्त्रमविस्पष्टं वौषडन्तं समुच्चरेत् ।
तदग्नौ जुहुयादाज्यं यवसम्मितधारया ॥ ५६ ॥
आचामं चन्दनं दत्वा ताम्बूलप्रभृतीनपि ।
भक्त्या तद्भूतिमावन्द्य विदध्यात्प्रणतिं परां ॥ ५७ ॥
ततो वह्निं समभ्यर्च्य षडन्तास्त्रेण संवरान् ।
संहारमुद्रयाहृत्य क्षमस्वेत्यभिधाय च ॥ ५८ ॥
भासुरान्(२) परिधीस्तांश्च पूरकेण हृदाऽणुना(३) ।

---

१ विनिःसृत्य सपृष्टया इति ख, चिह्नितपुस्तकपाठः । विनिःसृत्य सपुष्टया इति ग, चिह्नितपुस्तकपाठः ।

२ भास्वरानिति ख, ग, घ, ङ, चिह्नितपुस्तकपाठः ।

३ हृदात्मनेति ख, ग, चिह्नितपुस्तकपाठः ।

श्रद्धया परयात्मीये स्थापयेच्च हृदम्बुजे ॥ ५९ ॥
सर्वपाकाग्रमादाय कृत्वा मण्डलकद्वयं(१) ।
अन्तर्बहिर्बलिं दद्यादाग्नेय्यां कुण्डसन्निधौ ॥ ६० ॥
ओं हां रुद्रेभ्यः स्वाहा पूर्वे मातृभ्यो दक्षिणे तथा ।
वारुणे हां गणेभ्यश्च स्वाहा तेभ्यस्त्वयं बलिः ॥ ६१ ॥
उत्तरे चाथ यक्षेभ्य ईशाने हां ग्रहेभ्य उ(२) ।
अग्नौ हामसुरेभ्यश्च रक्षोभ्यो नैर्ऋते बलिः ॥ ६२ ॥
वायव्ये चाथ नागेभ्यो नक्षत्रेभ्यश्च मध्यतः ।
हां राशिभ्यः(३) स्वाहा वह्नौ विश्वेभ्यो नैर्ऋते तथा ॥ ६३ ॥
वारुण्यां(४) क्षेत्रपालाय अन्तर्बलिरुदाहृतः ।
द्वितीये मण्डले बाह्ये इन्द्रायाग्नियमाय च ॥ ६४ ॥
नैर्ऋताय जलेशाय वायवे धनरक्षिणे ।
ईशानाय च पूर्वादौ ह्यीशाने ब्रह्मणे नमः ॥ ६५ ॥
नैर्ऋते विष्णवे स्वाहा वायसादेर्बहिर्बलिः ।
बलिद्वयगतान्मन्त्रान् संहारमुद्रयाऽऽत्मनि ॥ ६६ ॥

इत्यादिमहापुराणे आग्नेये अग्निकार्य्यं नाम
पञ्चसप्ततितमोऽध्यायः ॥

---

१ कृत्वा च मण्डलद्वयमिति ख, चिह्नितपुस्तकपाठः ।
२ गणेभ्य उ इति ग, चिह्नितपुस्तकपाठः ।
३ हां ऋषिभ्य इति ङ, चिह्नितपुस्तकपाठः ।
४ वायव्यामिति ग, चिह्नितपुस्तकपाठः । नैर्ऋत इति ङ, चिह्नितपुस्तकपाठः ।

## अथ षट्सप्ततितमोऽध्यायः।

### चण्डपूजाकथनं।

ईश्वर उवाच। ततः शिवान्तिकं गत्वा पूजाहोमादिकं मम।
गृहाण भगवन् पुण्यफलमित्यभिधाय च॥१॥
अर्घ्योदकेन देवाय मुद्रयोद्भवसंज्ञया।
हृद्बीजपूर्वमूलेन स्थिरचित्तो निवेदयेत्॥२॥
ततः पूर्ववदभ्यर्च्य स्तुत्वा स्तोत्रैः प्रणम्य च।
अर्घ्यं पराङ्मुखं दत्त्वा क्षमस्वेत्यभिधाय च॥३॥
नाराचमुद्रयाऽस्त्रेण फडन्तेनात्मसञ्चयं।
संहृत्य दिव्यया लिङ्गं मूर्त्तिमन्त्रेण योजयेत्॥४॥
स्थण्डिले त्वर्च्चिते देवे मन्त्रसङ्घातमात्मनि।
नियोज्य विधिनोक्तेन विदध्याच्चण्डपूजनं॥५॥
ओं चण्डेशानाय नमो मध्यतश्चण्डमूर्त्तये।
ओं धूलिचण्डेश्वराय(१) हूं फट्(२) स्वाहा तमाह्वयेत्॥६॥
चण्डहृदयाय हूं फट् ओं चण्डशिरसे तथा(३)।
ओं चण्डशिखायै हूं फट् चण्डायुः(४) कवचाय च॥७॥
चण्डास्त्राय तथा हूं फट् चण्डं रुद्राग्निजं स्मरेत्।
शूलटङ्कधरं कृष्णं साक्षसूत्रकमण्डलुं॥८॥
टङ्काकारेऽर्द्धचन्द्रे(५) वा चतुर्वक्त्रं प्रपूजयेत्।

---

१ ओं बलिचण्डेश्वराय इति ग, चिह्नितपुस्तकपाठः।
२ हूं फडिति ख, चिह्नितपुस्तकपाठः।
३ हूं चण्डशिरसे स्वाहेति ग, चिह्नितपुस्तकपाठः।
४ हूं फट् चण्डाय इति ग, घ, चिह्नितपुस्तकद्वयपाठः।
५ टङ्कारे वार्द्धचन्द्रे इति ख, चिह्नितपुस्तकपाठः।

यथाशक्ति जपं कुर्य्याद्रुणाबान्तु दशांशतः ॥ ९ ॥
गोभूहिरण्यवस्त्रादिमणिहेमादिभूषणं।
विज्ञाय शेषनिर्माल्यं चण्डेशाय निवेदयेत् ॥ १० ॥
लेह्यचोष्याद्यनुवरं ताम्बूलं स्रग्विलेपनं।
निर्माल्यं भोजनं तुभ्यं प्रदत्तन्तु शिवाज्ञया ॥ ११ ॥
सर्वमेतत् क्रियाकाण्डं मया चण्ड तवाज्ञया।
न्यूनाधिकं कृतं मोहात् परिपूर्णं सदाऽस्तु मे ॥ १२ ॥
इति विज्ञाप्य देवेशं दत्वाऽर्घ्यं तस्य संस्मरन्।
संहारमूर्त्तिमन्त्रेण शनैः संहारमुद्रया ॥ १३ ॥
पूरकान्वितमूलेन मन्त्रानात्मनि योजयेत्।
निर्माल्यापनयस्थानं लिम्पेद्गोमयवारिणा।
प्रोक्षार्घ्यादि विसृज्याथ आचान्तोऽन्यत्समाचरेत् ॥ १४ ॥

इत्यादिमहापुराणे आग्नेये चण्डपूजाकथनं नाम
षट्सप्ततितमोऽध्यायः ॥

---

## अथ सप्तसप्ततितमोऽध्यायः।

### कपिलादिपूजाविधनं।

ईश्वर उवाच। कपिलापूजनं वक्ष्ये एभिर्मन्त्रैर्यजेच्च गां।
ओं कपिले नन्दे नमः ओं कपिले भद्रिके नमः ॥ १ ॥
ओं कपिले सुशीले नमः कपिले सुरभिप्रभे।
ओं कपिले सुमनसे नमः ओं भुक्तिमुक्तिप्रदे नमः ॥ २ ॥
सौरभेयि जगन्मातर्देवानाममृतप्रदे।
गृहाण वरदे ग्रासमीप्सितार्थञ्च देहि मे ॥ ३ ॥

वन्दिताऽसि वसिष्ठेन विश्वामित्रेण धीमता ।
कपिले हर मे पापं यन्मया दुष्कृतं कृतं ॥ ४ ॥
गावो ममाग्रतो नित्यं गावः पृष्ठत एव च ।
गावो मे हृदये चापि गवां मध्ये वसाम्यहं ॥ ५ ॥
दत्तं प्रकन्तु(१) मे ग्रासं जप्त्वा स्यां निर्म्मलः शिवः ।
प्रार्च्य विद्यापुस्तकानि गुरुपादौ नमेन्नरः ॥ ६ ॥
यजेत् स्नात्वा तु मध्याह्ने अष्टपुष्पिकया शिवं ।
पीठमूर्त्तिशिवाङ्गानां पूजा स्यादष्टपुष्पिका ॥ ७ ॥
मध्याह्ने भोजनागारे सुलिप्ते पाकमानयेत् ।
ततो मृत्युञ्जयेनैव वौषडन्तेन सप्तधा ॥ ८ ॥
जप्तैः सदर्भशङ्खस्थैः सिक्तं वारिबिन्दुभिः ।
सर्व्वपाकाग्रमुद्धृत्य शिवाय विनिवेदयेत् ॥ ९ ॥
अथार्द्धं(२) चुल्लिकाहोमे विधानायोपकल्पयेत्(३) ।
विशोध्य विधिना चुल्लीं तदग्निं पूरकाहुतिं ॥ १० ॥
हुत्वा नाभ्यग्निना चैकं ततो रेचकवायुना ।
वह्निबीजं समादाय कादिस्थानगतिक्रमात्(४) ॥ ११ ॥
शिवाग्निस्त्वमिति ध्यात्वा चुल्लिकाग्नौ निवेशयेत् ।
ओं ह्रां अग्नये नमो वै ह्रां सोमाय वै नमः ॥ १२ ॥
सूर्य्याय बृहस्पतये प्रजानां पतये नमः ।
सर्व्वेभ्यश्चैव देवेभ्यः सर्व्वविश्वेभ्य एव च ॥ १३ ॥

---

१ दत्तं प्रकाशेति ग, घ, चिह्नितपुस्तकद्वयपाठः ।

२ अन्यार्द्धमिति ख, चिह्नितपुस्तकपाठः । अम्यार्द्धमिति ङ, चिह्नितपुस्तकपाठः ।

३ निधानायोपकल्पयेदिति घ, ङ, चिह्नितपुस्तकद्वयपाठः ।

४ हृदि स्थानमतिक्रमेदिति ग, चिह्नितपुस्तकपाठः । कादिस्थानमतिक्रमादिति ख, चिह्नितपुस्तकपाठः ।

ह्रामग्नये स्विष्टकृते पूर्व्वादावर्च्चयेदिमान् ।
स्वाहान्तामाहुतिं दत्वा क्षमयित्वा विसर्जयेत् ॥ १४ ॥
चुल्ल्या दक्षिणबाहौ च यजेद्धर्म्माय वै नमः ।
वामबाहावधर्म्माय काञ्जिकादिकभाण्डके ॥ १५ ॥
रसपरिवर्त्तमानाय वरुणाय जलाग्नये(१) ।
विघ्नराजो गृहद्वारे पेषण्यां सुभगे नमः ॥ १६ ॥
ओं रौद्रिके नमो गिरिके(२) नमस्चोलूखले यजेत् ।
बलप्रियायायुधाय नमस्ते मुषले यजेत् ॥ १७ ॥
सम्मार्ज्ज न्यां देवतोक्ता कामाय शयनीयके ।
मध्यस्तम्भे च स्कन्दाय दत्वा वास्तुबलिं ततः ॥ १८ ॥
भुञ्जीत पात्रे सौवर्णे पद्मिन्यादिदलादिके ।
आचार्य्यः साधकःपुत्र समयी मौनमास्थितः ॥ १९ ॥
वटाश्वत्थार्क्कवाताविसर्ज्जभल्लातकांस्त्यजेत् ।
अपोशानं पुरादाय प्राणाद्यैः प्रणवान्वितैः ॥ २० ॥
स्वाहान्तैराहुतीः पञ्च दत्वादीप्योदरानलं ।
नागः कूर्म्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥ २१ ॥
एतेभ्य उपवायुभ्यः स्वाहापोशानवारिणा ।
भक्तादिकं निवेद्याथ पिवेच्छेषोदकं नरः ॥ २२ ॥
अमृतोपस्तरणमसि प्राणाहुतीस्ततो ददेत् ।
प्राणाय स्वाहाऽपानाय समानाय ततस्तथा ॥ २३ ॥
उदानाय च व्यानाय भुक्त्वा चुल्लकमाचरेत् ।

---

१ जलाशये इति ङ,चिह्नितपुस्तकपाठः ।
२ ओं रौद्रकोटिगिरिके इति ख, ग, घ, ङ, चिह्नितपुस्तकचतुष्टयपाठः ।

अमृतापिधानमसीति शरीरेऽन्नादिवायवः(१) ॥ २४ ॥

इत्यादिमहापुराणे आग्नेये वास्तुपूजाकथनं नाम
सप्तसप्ततितमोऽध्यायः ॥

---

## अथाष्टसप्ततितमोऽध्यायः।

### पवित्रारोहणकथनं।

ईश्वर उवाच। पवित्रारोहणं वक्ष्ये क्रियार्च्चादिषु पूरणं।
नित्यं तन्नित्यमुद्दिष्टं नैमित्तिकमथापरं ॥ १ ॥
आषाढादिचतुर्द्दश्यामथ श्रावणभाद्रयोः।
सितासितासु कर्त्तव्यं चतुर्द्दश्यष्टमीषु तत् ॥ २ ॥
कुर्य्याद्वा कार्त्तिकीं यावत्तिथौ प्रतिपदादिके।
वह्निब्रह्माम्बिकेभास्यनागस्कन्दार्क्कशूलिनां ॥ ३ ॥
दुर्गायमेन्द्रगोविन्दस्मरशम्भुसुधाभुजां(२)।
सौवर्णं राजतं ताम्रं कृतादिषु यथाक्रमं ॥ ४ ॥
कलौ कार्प्पासजं वापि पट्टपद्मादिसूत्रकं।
प्रणवश्चन्द्रमा वह्निर्ब्रह्मा नागो गुहो हरिः(३) ॥ ५ ॥
सर्वेशः(४) सर्वदेवाः स्युः क्रमेण नवतन्तुषु।
अष्टोत्तरशतान्यर्द्धं तदर्द्धं चोत्तमादिकं ॥ ६ ॥
एकाशीत्याऽथवा सूत्रैस्त्रिंशताऽष्टयुक्तया।

---

१ शरीरोन्मादवायव इति ख, चिह्नितपुस्तकपाठः।
२ सुधाभुजामिति ख, घ, ङ, चिह्नितपुस्तकत्रयपाठः।
३ गुहो रविरिति ख, ग, घ, ङ, चिह्नितपुस्तकचतुष्टयपाठः।
४ सर्वेश इति ख, ग, घ, ङ, चिह्नितपुस्तकपाठः।

पञ्चाशता वा कर्त्तव्यं तुल्यग्रन्थ्यन्तरालकं ॥ ७ ॥
द्वादशाङ्गुलमानानि थासाद्दशाङ्गुलानि च ।
लिङ्गविस्तारमानानि चतुरङ्गुलकानि वा ॥ ८ ॥
तथैव पिण्डिकास्पर्शं चतुर्थं सर्वदैवतं ।
गङ्गावतारकं कार्य्यं सुजातेन सुधौतकं ॥ ९ ॥
ग्रन्थिं कुर्य्याच्च वामेन अघोरेणाथ शोधयेत् ।
रञ्जयेत् पुरुषेणैव रक्तचन्दनकुङ्कुमैः ॥ १० ॥
कस्तूरीरोचनाचन्द्रैर्हरिद्रागैरिकादिभिः ।
ग्रन्थयो दश कर्त्तव्या अथवा तन्तुसङ्ख्यया ॥ ११ ॥
अन्तरं वा यथाशोभमेकाद्विचतुरङ्गुलं ।
प्रकृतिः पौरुषी वीरा चतुर्थी त्वपराजिता ॥ १२ ॥
जयाऽन्या विजया षष्ठी अजिता च सदाशिवा ।
मनोन्मनी सर्वमुखी ग्रन्थयोऽप्यधिकाः शुभाः ॥ १३ ॥
कार्य्या वा चन्द्रवङ्क्यर्कपविचं(१) शिववह्नि ।
एकैकं निजमूर्त्तौ वा पुस्तके गुरुके गणे(२) ॥ १४ ॥
स्यादेकैकं तथा द्वारदिक्पालकलशादिषु ।
हस्तादिनवहस्तान्तं लिङ्गानां स्यात्पविचकं ॥ १५ ॥
अष्टाविंशतितो वृद्धं दशभिर्दशभिः क्रमात् ।
दशाङ्गुलाभ्यन्तरास्तत्र क्रमादेकाङ्गुलान्तराः ॥ १६ ॥
ग्रन्थयो मानमप्येषां लिङ्गविस्तारसम्मितं ।
सप्तम्यां वा चयोदश्यां कृतनित्यक्रियः शुचिः ॥ १७ ॥
भूषयेत् पुष्पवस्त्राद्यैः सायाह्ने यागमन्दिरं ।

---

१ चन्द्रवह्न्यर्कपविचमिति ख, ग, ङ, चिह्नितपुस्तकत्रयपाठः ।
२ पुस्तके गुरवे गणे इति ख, ङ, चिह्नितपुस्तकद्वयपाठः ।

कृत्वा नैमित्तिकीं सन्ध्यां विशेषेण च तर्पणं ॥ १८ ॥
परिगृहीते भूभागे पवित्रे सूर्य्यमर्चयेत्(१) ।
आचम्य सकलीकृत्य प्रणवार्घ्यकरो गुरुः ॥ १९ ॥
द्वाराण्यस्त्रेण सम्प्रोक्ष्य पूर्वादिक्रमतोऽर्चयेत् ।
हां शान्तिकलाद्वाराय तथा विद्याकलात्मने ॥ २० ॥
निवृत्तिकलाद्वाराय प्रतिष्ठाख्यकलात्मने ।
तच्छाखयोः प्रतिद्वारं द्वौ द्वौ द्वाराधिपौ यजेत् ॥ २१ ॥
नन्दिने महाकालाय भृङ्गिणेऽथ गणाय च ।
वृषभाय च स्कन्दाय देव्यै चण्डाय च क्रमात् ॥ २२ ॥
नित्यं च द्वारपालादीन् प्रविश्य द्वारपश्चिमे ।
इष्ट्वा वास्तुं भूतशुद्धिं विशेषार्घ्यकरः शिवः ॥ २३ ॥
प्रोक्षणाद्यं(२) विधायाथ यज्ञसम्भारकृन्नरः ।
मन्त्रयेद्दर्भदूर्वाद्यैः पुष्पाद्यैश्च हृदादिभिः ॥ २४ ॥
शिवहस्तं विधायेत्थं(३) स्वशिरस्यधिरोपयेत् ।
शिवोऽहमादिः सर्वज्ञो मम यज्ञप्रधानता ॥ २५ ॥
अत्यर्थं भावयेदेवं ज्ञानखड्गकरो गुरुः ।
नैर्ऋतीं दिशमासाद्य प्रक्षिपेदुदगाननः ॥ २६ ॥
अर्घ्याम्बु पञ्चगव्यञ्च समन्तान् मखमण्डपे ।
चतुष्पथान्तसंस्कारैर्वीक्षणाद्यैः(४) सुसंस्कृतैः ॥ २७ ॥
विक्षिप्य विकिरांस्तत्र कुशकूर्चोपसंहरेत्(५) ।

---

१ सूचिते सूर्य्यमर्चयेदिति ख, ग, घ, ङ, चिह्नितपुस्तकचतुष्टयपाठः ।
२ प्रोक्षणञ्चेति ग, चिह्नितपुस्तकपाठः ।
३ विधायैकमिति ङ, चिह्नितपुस्तकपाठः ।
४ ब्राह्मणाद्यैरिति ग, चिह्नितपुस्तकपाठः ।
५ दशकूर्चोपसंहरेदिति ख, चिह्नितपुस्तकपाठः ।

तानीशदिशि(१) वर्द्धन्यामासनायोपकल्पयेत् ॥ २८ ॥
नैर्ऋते वास्तुगीर्वाणा द्वारे लक्ष्मीं प्रपूजयेत् ।
पश्चिमाभिमुखं कुम्भं सर्वधान्योपरि स्थितं ॥ २९ ॥
प्रणवेन वृषारूढं सिंहस्थां वर्द्धनीन्ततः ।
कुम्भे साङ्गं शिवन्देवं वर्द्धन्यामस्त्रमर्च्चयेत् (२) ॥ ३० ॥
दिक्षु शक्रादिदिक्पालान् विष्णुब्रह्मशिवादिकान्(३) ।
वर्द्धनीं सम्यगादाय घटपृष्ठानुगामिनीं ॥ ३१ ॥
शिवाज्ञां श्रावयेन्मन्त्री पूर्वादीशानगोचरं ।
अविच्छिन्नपयोधारां मूलमन्त्रमुदीरयेत् ॥ ३२ ॥
समन्ताद् भ्रामयेदेनां रक्षार्थं शस्त्ररूपिणीं ।
पूर्वं कलशमारोप्य शस्त्रार्थन्तस्य(४) वामतः ॥ ३३ ॥
समग्रासनके कुम्भे यजेद्देवं स्थिरासने ।
वर्द्धन्यां प्रणवस्थायामायुधन्तदनु द्वयोः ॥ ३४ ॥
भगलिङ्गसमायोगं विदध्याल्लिङ्गमुद्रया ।
कुम्भे निवेद्य बोधासिं मूलमन्त्रजपन्तथा ॥ ३५ ॥
तद्दशांशेन वर्द्धन्यां रक्षां विज्ञापयेदपि(५) ।
गणेशं वायवेऽभ्यर्च्य हरं पञ्चामृतादिभिः ॥ ३६ ॥
स्नापयेत् पूर्ववत् प्रार्च्य(६) कुण्डे च शिवपावकं(७) ।

१ अनीशदिशि इति ख, ङ, चिह्नितपुस्तकद्वयपाठः ।

२ वर्द्धन्यां शस्त्रमर्च्चयेदिति ग, चिह्नितपुस्तकपाठः ।

३ विष्णुब्रह्मावसानकानिति ख, ङ, चिह्नितपुस्तकद्वयपाठः ।

४ शस्त्रार्थमस्येति क, ग, चिह्नितपुस्तकद्वयपाठः ।

५ रक्षां च कारयेत् सदेति ग, चिह्नितपुस्तकपाठः ।

६ पूर्ववत् स्नापयेत् प्रार्च्येदिति ग, चिह्नितपुस्तकपाठः । स्नापयेत् पूर्ववच्चाग्निमिति ङ, चिह्नितपुस्तकपाठः ।

७ कुण्डे वा शिवमर्च्चयेदिति ग, चिह्नितपुस्तकपाठः ।

विधिवच्च चरुं कृत्वा सम्पाताहुतिशोधितं ॥ ३७ ॥
देवाग्न्यात्मविभेदेन दर्व्या तं विभजेत्त्रिधा।
दत्त्वा भागौ शिवाग्निभ्यां संरक्षेद्भागमात्मनि ॥ ३८ ॥
शरेण वर्मणा देयं पूर्वतो दन्तधावनं।
तस्माद्गौरशिखाभ्यां वा दक्षिणे पश्चिमे मृदं ॥ ३९ ॥
सद्योजातेन च हृदा चोत्तरे वामनीहृतं(१)।
जलं(२) वामेन शिरसा ईशे गन्धान्वितं जलं ॥ ४० ॥
पञ्चगव्यं पलाशादिपुटकं वै समन्ततः।
ऐशान्यां कुसुमं दद्यादाग्नेय्यां दिशि रोचनां ॥ ४१ ॥
अगुरुं निर्ऋताशायां वायव्यां च चतुःसमं।
होमद्रव्याणि सर्वाणि सद्योजातैः कुशैः सह ॥ ४२ ॥
दद्याच्चसूत्रकौपीनभिक्षापात्राणि(३) रूपिणे।
कज्जलं कुङ्कुमन्तैलं शलाकां केशशोधनीं ॥ ४३ ॥
ताम्बूलं दर्पणं दद्यादुत्तरे रोचनामपि।
आसनं पादुके पात्रं योगपट्टातपत्रकं ॥ ४४ ॥
ऐशान्यामीशमन्त्रेण दद्यादीशानतुष्टये।
पूर्वस्याञ्चरुकं साज्यं दद्याद्गन्धादिकं नवे ॥ ४५ ॥
पवित्राणि समादाय प्रोक्षितान्यर्घ्यवारिणा।
संहितामन्त्रपूतानि नीत्वा पावकसन्निधिं ॥ ४६ ॥
कृष्णाजिनादिनाऽऽच्छाद्य स्मरन् संवत्सरात्मकं।
साक्षिणं सर्वकृत्यानां गोप्तारं शिवमव्ययं ॥ ४७ ॥

---

१ सद्योजातेन च हृदा चोत्तरे वामनीयकमिति ख, चिह्नितपुस्तकपाठः। सद्योजातेन च हृदा चोत्तरे धाम निष्फलमिति ग, चिह्नितपुस्तकपाठः।

२ फलमिति ख, चिह्नितपुस्तकपाठः।

३ दण्डञ्च सूचकौपीनतीर्थपात्राणि इति ख, चिह्नितपुस्तकपाठः।

खेति हेति प्रयोगेण मन्त्रसंहितया पुनः।
शोधयेच्च पवित्राणि वाराणामेकविंशतिं ॥ ४८ ॥
गन्धादि वेष्टयेत्सूत्रैर्गन्धाद्यं(१) रवये ददेत्।
पूजिताय समाचम्य(२) कृतन्यासः कृतार्घ्यकः ॥ ४९ ॥
नन्द्यादिभ्योऽथ(३) गन्धाद्यं(४) वास्तोश्चाथ प्रविश्य च।
शक्रेभ्यो लोकपालेभ्यः स्वनाम्ना शिवकुम्भकं ॥ ५० ॥
वर्द्धन्यै विघ्नराजाय गुरवे ह्यात्मने यजेत्।
अथ सर्वौषधीलिप्तं धूपितं पुष्पदूर्वया ॥ ५१ ॥
आमन्त्र च पवित्रं(५) तत् विधायाञ्जलिमध्यगं।
ओं समस्तविधिच्छिद्रपूरणे च विधिं प्रति ॥ ५२ ॥
प्रभवामन्त्रयामि त्वां त्वदिच्छावाप्तिकारिकां।
तत्सिद्धिमनुजानीहि यजतश्चिदचित्पते ॥ ५३ ॥
सर्वथा सर्वदा शम्भो नमस्तेऽस्तु प्रसीद मे।
आमन्त्रितोऽसि देवेश सह देव्या गणेश्वरैः ॥ ५४ ॥
मन्त्रेशैर्लोकपालैश्च सहितः परिचारकैः(६)।
निमन्त्रयाम्यहन्तुभ्यं प्रभाते तु पवित्रकं ॥ ५५ ॥
नियमञ्च करिष्यामि परमेश तवाज्ञया।
इत्येवन्देवमामन्त्र्य रेचकेनामृतीकृतं ॥ ५६ ॥
शिवान्तं मूलमुच्चार्य्य तच्छिवाय निवेदयेत्।

---

१ गन्धाद्यमिति ख, ग, चिह्नितपुस्तकद्वयपाठः।
२ पूजनार्थं समाचम्य इति ङ, चिह्नितपुस्तकपाठः।
३ रव्यादिभ्योऽथेति ग, चिह्नितपुस्तकपाठः।
४ गन्धाद्यमिति ङ, चिह्नितपुस्तकपाठः।
५ आमन्त्रणपवित्रमिति ख, चिह्नितपुस्तकपाठः।
६ परिवारकैरिति ग, ङ, चिह्नितपुस्तकपाठः।

जयं स्तोत्रं प्रणामञ्च कृत्वा शम्भुं क्षमापयेत् ॥ ५७ ॥
हुत्वा चरोस्तृतीयांशं तद्दद्दीत शिवाग्नये(१) ।
दिग्वासिभ्यो दिगीशेभ्यो भूतमातृगणेभ्य उ(२) ॥ ५८ ॥
रुद्रेभ्यः क्षेत्रपादिभ्यो(३) नमः स्वाहा बलिस्त्वयं ।
दिङ्नागाद्यैश्च पूर्वादौ क्षेत्राय चाग्नये बलिः ॥ ५९ ॥
समाचम्य विधिच्छिद्रपूरकं होममाचरेत् ।
पूर्णां व्याहृतिहोमञ्च कृत्वा रुन्धीत पावकं ॥ ६० ॥
तत ओमग्नये स्वाहा स्वाहा सोमाय चैव हि ।
ओमग्नीषोमाभ्यां स्वाहाऽग्नये स्विष्टकृते तथा ॥ ६१ ॥
इत्याहुतिचतुष्कन्तु दत्वा कुर्य्यात्तु योजनां ।
वह्निकुण्डार्च्चितं देवं मण्डलाभ्यर्च्चिते शिवे ॥ ६२ ॥
नाडीसन्धानरूपेण विधिना योजयेत्ततः ।
वंशादिपात्रे विन्यस्य अस्त्रञ्च हृदयन्ततः ॥ ६३ ॥
अधिरोप्य पवित्राणि कलाभिर्वाऽथ मन्त्रयेत् ।
षडङ्गं ब्रह्ममूलैर्व्वा हृदस्त्राम्बुच योजयेत् ॥ ६४ ॥
विधाय सूत्रैः संवेष्ट्य पूजयित्वाऽङ्गसम्भवैः(४) ।
रक्षार्थं जगदीशाय भक्तिनम्रः समर्पयेत् ॥ ६५ ॥
पूजिते पुष्पधूपाद्यैर्द्दत्वा सिद्धान्तपुस्तके ।
गुरोः पादान्तिकं गत्वा भक्त्या दद्यात् पवित्रकं ॥ ६६ ॥
निर्गत्य वहिराचम्य गोमये मण्डलत्रये ।

१ शिवाज्ञया इति ख, चिह्नितपुस्तकपाठः ।

२ भूतमातृगणेषु फडिति ङ, चिह्नितपुस्तकपाठः ।

३ रुद्रेभ्यः क्षेत्रपालेभ्य इति ख, चिह्नितपुस्तकपाठः ।

४ पूजयित्वा ततः शिवमिति ग, चिह्नितपुस्तकपाठः । पूजयित्वाऽथ सम्भवैरिति ङ, चिह्नितपुस्तकपाठः ।

पञ्चगव्यञ्चदन्तधावनञ्च क्रमाद् यजेत् ॥ ६७ ॥
आचान्तो मन्त्रसम्बद्धः कृतसङ्गीतजागरः।
स्वपेदन्तः स्मरन्नीशं बुभुक्षुर्दर्भसंस्तरे ॥ ६८ ॥
अनेनैव प्रकारेण मुमुक्षुरपि संविशेत्।
केवलम्भस्मशय्यायां सोपवासः समाहितः ॥ ६९ ॥

इत्यादिमहापुराणे आग्नेये पवित्राधिवासनविधिर्नाम अष्टसप्ततितमोऽध्यायः ॥

---

## अथैकोनाशीतितमोऽध्यायः।

### पवित्रारोहणविधिः।

ईश्वर उवाच। अथ प्रातः समुत्थाय कृतस्नानः समाहितः।
कृतसन्ध्यार्च्चनो मन्त्री प्रविश्य मखमण्डपं ॥ १ ॥
समादाय पवित्राणि अविसर्जितदैवतः।
ऐशान्यां भाजने शुद्धे स्थापयेत् कृतमण्डले ॥ २ ॥
ततो विसर्ज्य देवेशं निर्म्माल्यमपनीय च।
पूर्ववद् भूतले शुद्धे कृत्वाह्निकमथ द्वयं ॥ ३ ॥
आदित्यद्वारदिक्पालकुम्भेशानौ शिवेऽनले(१)।
नैमित्तिकीं सविस्तारां कुर्य्यात् पूजां विशेषतः ॥ ४ ॥
मन्त्राणां तर्पणं प्रायश्चित्तहोमं शरात्मना(२)।
अष्टोत्तरशतं कृत्वा दद्यात् पूर्णाहुतिं शनैः ॥ ५ ॥

---

१ आदित्यद्वारदिक्पालान् स्कन्देशानौ शिवेऽनले इति ङ, चिह्नितपुस्तकपाठः।
२ शराणुनेति घ, ङ, चिह्नितपुस्तकद्वयपाठः।

पवित्रं भानवे दत्त्वा समाचम्य ददीत च।
द्वारपालादिदिक्पालकुम्भवर्द्धनिकादिषु ॥ ६ ॥
सन्निधाने ततः शम्भोरुपविश्य निजासने।
पवित्रमात्मने दद्याद्गणाय गुरुवह्नये ॥ ७ ॥
ओं कालात्मना त्वया देव यद्दिष्टं मामके विधौ(१)।
कृतं क्लिष्टं समुत्सृष्टं कृतं गुप्तञ्च यत् कृतं ॥ ८ ॥
तदस्तु क्लिष्टमक्लिष्टं कृतं क्लिष्टमसंस्कृतं(२)।
सर्वात्मनाऽमुना शम्भो पवित्रेण त्वदिच्छया ॥ ९ ॥
ओं पूरयमखव्रतं नियमेश्वराय स्वाहा।
आत्मतत्त्वे प्रकृत्यन्ते पालिते पद्मयोनिना ॥ १० ॥
मूलं लयान्तमुच्चार्य्य पवित्रेणार्चयेच्छिवं।
विद्यातत्त्वे च विद्यान्ते विष्णुकारणपालिते ॥ ११ ॥
ईश्वरान्तं समुच्चार्य्य पवित्रमधिरोपयेत्।
शिवान्ते शिवतत्त्वे च रुद्रकारणपालिते ॥ १२ ॥
शिवान्तं मन्त्रमुच्चार्य्य तस्मै देयं पवित्रकं।
सर्वकारणपालेषु शिवमुच्चार्य्य सुव्रत(३) ॥ १३ ॥
मूलं लयान्तमुच्चार्य दद्याद्गङ्गावतारकं(४)।
आत्मविद्याशिवैः प्रोक्तं मुमुक्षूणां पवित्रकं ॥ १४ ॥
विनिर्द्दिष्टं बुभुक्षूणां शिवतत्त्वात्मभिः क्रमात्।
स्वाहान्तं वा नमोऽन्तं वा मन्त्रमेषामुदीरयेत् ॥ १५ ॥
ओं हां आत्मतत्त्वाधिपतये शिवाय स्वाहा।

---

१ प्रभुस्त्वं मामकेविधौ इति ङ, चिह्नितपुस्तकपाठः।
२ कृतं यच्च वषट्कृतमिति ङ, चिह्नितपुस्तकपाठः।
३ सर्वतत्त्वेषु सुव्रत इति ख, ग, ङ, चिह्नितपुस्तकत्रयपाठः।
४ दद्याद्गङ्गावतारकमिति ख, चिह्नितपुस्तकपाठः।

ओं ह्रां विद्यातत्त्वाधिपतये शिवाय स्वाहा ।
ओं ह्रौं शिवतत्त्वाधिपतये शिवाय स्वाहा ।
ओं ह्रौं सर्वतत्त्वाधिपतये शिवाय स्वाहा ।
नत्वा गङ्गावतारन्तु प्रार्थयेत्तं कृताञ्जलिः ।
त्वङ्गतिः सर्व्वभूतानां संस्थितिस्त्वञ्चराचरे ॥ १६ ॥
अन्तश्चारेण भूतानां(१) द्रष्टा त्वं परमेश्वर ।
कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्म्मम ॥ १७ ॥
मन्त्रहीनं क्रियाहीनं द्रव्यहीनञ्च यत् कृतं ।
जपहोमार्च्चनैर्हीनं कृतं नित्यं मया तव ॥ १८ ॥
अकृतं वाक्यहीनं च तत् पूरय महेश्वर(२) ।
सुपूतस्त्वं परेशान(३) पवित्रं पापनाशनं ॥ १९ ॥
त्वया पवित्रितं सर्वं जगत् स्थावरजङ्गमं ।
खण्डितं यन्मया देव व्रतं वैकल्पयोगतः ॥ २० ॥
एकीभवतु तत् सर्वं तवाज्ञासूत्रगुम्फितं ।
जपं निवेद्य देवस्य भक्त्या स्तोत्रं विधाय च ॥ २१ ॥
नत्वा तु गुरुणादिष्टं गृह्णीयान्नियमन्नरः ।
चतुर्म्मासं त्रिमासं वा त्र्यहमेकाहमेव च ॥ २२ ॥
प्रणम्य क्षमयित्वेशं गत्वा कुण्डान्तिकं व्रती ।
पावकस्थे शिवेऽप्येवं पवित्राणां चतुष्टयं ॥ २३ ॥
समारोप्य समभ्यर्च्च्य पुष्पधूपाक्षतादिभिः ॥
अन्तर्बलिं पवित्रञ्च रुद्रादिभ्यो निवेदयेत् ॥ २४ ॥
प्रविश्यान्तः शिवं स्तुत्वा सप्रणामं क्षमापयेत् ।

---

१ अन्तश्चर त्वं भूतानामिति ग, चिह्नितपुस्तकपाठः ।
२ परिपूर्णं करोतु मे इति ग, चिह्नितपुस्तकपाठः ।
३ अमृतस्त्वं परेशान इति ग, चिह्नितपुस्तकपाठः

प्रायश्चित्तकृतं होमं कृत्वा हुत्वा च पायसं ॥ २५ ॥
शनैः पूर्णाहुतिं दत्वा वह्निस्थं विसृजेच्छिवं।
होमं व्याहृतिभिः कृत्वा रक्षार्थमिष्टयाऽनलं ॥ २६ ॥
अग्न्यादिभ्यस्ततो दद्यादाहुतीनां चतुष्टयं।
दिक्पतिभ्यस्ततो दद्यात्(१) सपविनं वहिर्बलिं ॥ २७ ॥
सिद्धान्तपुस्तके दद्यात् सप्रमाणं पवित्रकं।

ओं हां भूः स्वाहा। ओं हां भुवः स्वाहा। ओं हां स्वः स्वाहा। ओं हां भूर्भुवः स्वः स्वाहा।

होमं व्याहृतिभिः कृत्वा दत्वाऽऽहुतिचतुष्टयं ॥ २८ ॥

ओं हां अग्नये स्वाहा। ओं हां सोमाय स्वाहा। ओं हां अग्नीषोमाभ्यां स्वाहा। ओं हां अग्नये स्विष्टकृते स्वाहा।

गुरुं शिवमिवाभ्यर्च्च वस्त्रभूषादिविस्तरैः।
समग्रं सफलं तस्य क्रियाकाण्डादि वार्षिकं ॥ २९ ॥
यस्य तुष्टो गुरुः सम्यगित्याह परमेश्वरः।
इत्थं गुरोः समारोप्य हृदालम्बिपवित्रकं ॥ ३० ॥
द्विजादीन् भोजयित्वा तु भक्त्या वस्त्रादिकं ददेत्।
दानेनानेन देवेश प्रीयतां मे सदा शिवः ॥ ३१ ॥
भक्त्या स्नानादिकं प्रातः कृत्वा शम्भोः समाहरेत्।
पवित्राण्यष्टपुष्पैस्तं पूजयित्वा विसर्ज्जयेत् ॥ ३२ ॥
नित्यं नैमित्तिकं कृत्वा विस्तरेण यथा पुरा।
पवित्राणि समारोप्य प्रणम्याग्नौ शिवं यजेत् ॥ ३३ ॥
प्रायश्चित्तं ततोऽस्त्रेण हुत्वा(२) पूर्णाहुतिं यजेत्।

---

१ दिक्पालेभ्यस्ततो दत्वेति ख, चिह्नितपुस्तकपाठः।
२ ततोऽस्त्रेण हुत्वेति घ, चिह्नितपुस्तकपाठः।

भुक्तिकामः शिवायाथ कुर्य्यात् कर्म्मसमर्पणं ॥ ३४ ॥
त्वत्प्रसादेन कर्म्मेदं ममास्तु फलसाधकं ।
मुक्तिकामस्तु कर्म्मेदं माऽस्तु मे नाथ बन्धकं ॥ ३५ ॥
वह्निस्थं नाडीयोगेन शिवं संयोजयेच्छिवे ।
हृदि न्यस्याग्निसङ्घातं पावकं च विसर्जयेत् ॥ ३६ ॥
समाचम्य प्रविश्यान्तः कुम्भानुगतसंवरान् ।
शिवे संयोज्य साक्षेपं क्षमस्वेति विसर्जयेत् ॥ ३७ ॥
विसृज्य लोकपालादीनादायेशात् पवित्रकं ।
सति चण्डेश्वरे पूजां कृत्वा दत्वा पवित्रकं ॥ ३८ ॥
तन्निर्माल्यादिकं तस्मै सपवित्रं समर्पयेत् ।
अथवा स्थण्डिले चण्डं विधिना पूर्ववद्यजेत् ॥ ३९ ॥
यत् किञ्चिद्वार्षिकं कर्म्म कृतं न्यूनाधिकं मया ।
तदस्तु परिपूर्णं मे चण्ड नाथ तवाज्ञया ॥ ४० ॥
इति विज्ञाप्य देवेशं नत्वा स्तुत्वा विसर्जयेत् ।
त्यक्तनिर्म्माल्यकः शुद्धः स्नापयित्वा शिवं यजेत् ।
पञ्चयोजनसंस्थोऽपि पवित्रं गुरुसन्निधौ ॥ ४१ ॥

इत्यादिमहापुराणे आग्नेये पवित्रारोहणं नाम
एकोनाशीतितमोऽध्यायः ॥

---

## अथ अशीतितमोऽध्यायः ।

### दमनकारोहणविधिः ।

ईश्वर उवाच । वक्ष्ये दमनकारोहविधिं पूर्ववदाचरेत् ।
हरकोपात् पुरा जातो भैरवो दमिताः सुराः ॥ १ ॥

तेनाथ शप्तो विटपो भवेति त्रिपुरारिणा ।
प्रसन्नेनेरितं चेदं पूजयिष्यन्ति ये नराः ॥ २ ॥
परिपूर्णफलं तेषां नान्यथा ते भविष्यति ।
सप्तम्यां वा त्रयोदश्यां दमनं संहितात्मभिः ॥ ३ ॥
सम्पूज्य बोधयेद्वृक्षं भववाक्येन मन्त्रवित् ।
हरप्रसादसम्भूत त्वमत्र सन्निधीभव ॥ ४ ॥
शिवकार्य्यं समुद्दिश्य नेतव्योऽसि शिवाज्ञया ।
गृहेऽप्यामन्त्रणं कुर्य्यात् सायाह्ने चाधिवासनं ॥ ५ ॥
यथाविधि समभ्यर्च्य सूर्य्यशङ्करपावकान् ।
देवस्य पश्चिमे मूलं दद्यात्तस्य मृदा युतं ॥ ६ ॥
वामेन शिरसा वाऽथ नालं धात्रीं तथोत्तरे ।
दक्षिणे भस्मपत्रञ्च प्राच्यां पुष्पञ्च धारणं ॥ ७ ॥
पुटिकास्थं फलं मूलमथैशान्यां यजेच्छिवं ।
पञ्चाङ्गमञ्जलौ कृत्वा आमन्त्र्य शिरसि न्यसेत् ॥ ८ ॥
आमन्त्रितोऽसि देवेश प्रातःकाले(१) मया प्रभो ।
कर्त्तव्यस्तपसो लाभः पूर्णं सर्वं तवाज्ञया ॥ ९ ॥
मूलेन शेषं पात्रस्थं पिधायाथ पवित्रकं ।
प्रातः स्नात्वा जगन्नाथं गन्धपुष्पादिभिर्यजेत्(२) ॥ १० ॥
नित्यं नैमित्तिकं कृत्वा दमनैः पूजयेत्ततः ।
शेषमञ्जलिमादाय आत्मविद्याशिवात्मभिः ॥ ११ ॥
मूलाद्यैरीश्वरान्तैश्च चतुर्थाञ्जलिना ततः ।
ओं ह्रीं मखेश्वराय मखं पूरय पूरय शूलपाणये नमः ।

१ देवेश पूजाकाले इति ग, चिह्नितपुस्तकपाठः ।
२ गन्धपुष्पादिनार्चयेदिति ख, चिह्नितपुस्तकपाठः ।

शिवं वह्निं च सम्पूज्य गुरुं प्रार्थ्याथ बोधयेत् ॥ १२ ॥
भगवन्नतिरिक्तं वा हीनं वा यन्मया कृतं।
सर्वं तदस्तु सम्पूर्णं यच्च दामनकं मम।
सकलं चैत्रमासोत्थं फलं प्राप्य दिवं व्रजेत् ॥ १३ ॥

इत्यादिमहापुराणे आग्नेये दमनकारोहणविधिर्नाम अशीतितमोऽध्यायः ॥

---

## अथैकाशीतितमोऽध्यायः।

### समयदीक्षाविधानं।

ईश्वर उवाच। वक्ष्यामि भोगमोक्षार्थं दीक्षां पापक्षयङ्करीं।
मलमायादिपाशानां विश्लेषः क्रियते यया ॥ १ ॥
ज्ञानञ्च जन्यते शिष्ये सा दीक्षा भुक्तिमुक्तिदा।
विज्ञातकलनामैको द्वितीयः प्रलयाकलः(१) ॥ २ ॥
तृतीयः सकलः शास्त्रेऽनुग्राह्यस्त्रिविधो मतः।
तत्राद्यो मलमात्रेण मुक्तोऽन्यो मलकर्मभिः ॥ ३ ॥
कलादिभूमिपर्य्यन्तं स्तवैस्तु सकलो युतः।
निराधाराऽथ साधारा दीक्षाऽपि द्विविधा मता ॥ ४ ॥
निराधारा द्वयोस्तेषां साधारा सकलस्य तु।
आधारनिरपेक्षेण क्रियते शम्भुचर्य्यया ॥ ५ ॥
तीव्रशक्तिनिपातेन निराधारेति सा स्मृता।
आचार्य्यमूर्त्तिमास्थाय मायातीव्रादिभेदया ॥ ६ ॥
शक्त्या यां कुरुते शम्भुः सा साधिकरणोच्यते।

---

१ प्रलयानल इति ख, चिह्नितपुस्तकपाठः। प्रलयात्मक इति ङ, चिह्नितपुस्तकपाठः।

इयं चतुर्विधा प्रोक्ता सवीजा वीजवर्जिता ॥ ७ ॥
साधिकारानधिकारा यथा तदभिधीयते।
समयाचारसंयुक्ता सवीजा जायते नृणां ॥ ८ ॥
निर्वीजा त्वसमर्थानां समयाचारवर्ज्जिता।
नित्ये नैमित्तिके काम्ये यतः स्यादधिकारिता ॥ ९ ॥
साधिकारा भवेद्दीक्षा साधकाचार्य्ययोरतः।
निर्वीजा दीक्षितानान्तु यदास मम पुत्रयोः ॥ १० ॥
नित्यमात्राधिकारत्वाद्दीक्षा निरधिकारिका।
द्विविधेयं द्विरूपा हि प्रत्येकमुपजायते ॥ ११ ॥
एका क्रियावती तत्र कुण्डमण्डलपूर्विका।
मनोव्यापारमात्रेण या सा ज्ञानवती मता ॥ १२ ॥
इत्थं लब्धाधिकारेण दीक्षाऽऽचार्य्येण साध्यते।
ज्ञान्ददीक्षां गुरुः कुर्य्यात् कृत्वा नित्यक्रियां ततः(१) ॥ १३ ॥
प्रणवार्घ्यकराम्भोजकृतद्वाराधिपार्च्चनः।
विघ्नानुत्सार्य्य देहल्यां न्यस्यास्त्रं स्वासने स्थितः ॥ १४ ॥
कुर्वीत भूतसंशुद्धिं मन्त्रयोगं यथोदितं।
तिलतण्डुलसिद्धार्थकुशदूर्वाक्षतोदकं ॥ १५ ॥
सयवक्षीरनीरञ्च विशेषार्घ्यमिदन्ततः।
तदम्बुना द्रव्यशुद्धिं तिलकं स्वासनात्मनोः ॥ १६ ॥
पूजनं मन्त्रशुद्धिञ्च पञ्चगव्यञ्च पूर्ववत्।
लाजचन्दनसिद्धार्थभस्मदूर्वाक्षतं(२) कुशान् ॥ १७ ॥
विकिरान् शुद्धलाजांस्तान् सभूपानस्त्रमन्त्रितान्।

---

१ कृतनित्यक्रियादय इति ख, चिह्नितपुस्तकपाठः।
२ भस्मदूर्गाक्षतानिति ङ, चिह्नितपुस्तकपाठः।

शस्त्राम्बु(१) प्रोक्षितानेतान् कवचेनावगुण्ठितान् ॥ १८ ॥
नानाप्रहरणाकारान् विघ्नौघविनिवारकान् ।
दर्भाणान्तालमानेन कृत्वा षट्त्रिंशता दलैः ॥ १९ ॥
सप्तजप्तं शिवास्त्रेण वेणीं बोधासिमुत्तमं ।
शिवमात्मनि विन्यस्य गृहत्राधारमभीप्सितं ॥ २० ॥
निष्कलं च शिवं न्यस्य शिवोऽहमिति भावयेत् ।
उष्णीषं शिरसि न्यस्य अलं कुर्य्यात्स्वदेहकं ॥ २१ ॥
गन्धमण्डनकं स्वीये विदध्याद्दक्षिणे करे ।
विधिनाऽभ्यर्चयेदीशमित्थं स्याच्छिवमस्तकं ॥ २२ ॥
विन्यस्य शिवमन्त्रेण भास्वरं निजमस्तके ।
शिवादभिन्नमात्मानं कर्त्तारं भावयेद्यथा ॥ २३ ॥
मण्डले कर्म्मणां साक्षी कलशे यज्ञरक्षकः ।
होमाधिकरणं वह्नौ शिष्ये पाशविमोचकः(२) ॥ २४ ॥
स्वात्मन्यनुगृह्णीतेति षडाधारो य ईश्वरः ।
सोऽहमेवेति कुर्वीत भावं स्थिरतरं पुनः ॥ २५ ॥
ज्ञानखड्गकरः स्थित्वा नैर्ऋत्याभिमुखो नरः ।
सार्घ्याम्बुपञ्चगव्याभ्यां प्रोक्षयेद्यागमण्डपं ॥ २६ ॥
चतुष्पथान्तसंस्कारैः संस्कुर्य्यादीक्षणादिभिः ।
विक्षिप्य विकिरांस्तत्र कुशकूर्चोपसंहरेत् ॥ २७ ॥
तानीशदिशि वर्द्धनग्रामासनायोपकल्पयेत् ।
नैर्ऋते वास्तुगीर्वाणान् द्वारे लक्ष्मीं प्रपूजयेत् ॥ २८ ॥
आग्ने रत्नैः पूरयन्तीं सदा मण्डपरूपिणीं ।

---

१ अस्त्राम्बु इति ङ, चिह्नितपुस्तकपाठः ।

२ शिष्ये पापविमोचक इति ङ, चिह्नितपुस्तकपाठः ।

साम्बुवस्त्रे सरत्ने च धान्यस्थे पश्चिमानने ॥ २९ ॥
ऐशे कुम्भे यजेच्छम्भुं शक्तिं कुम्भस्य दक्षिणे।
पश्चिमस्यान्तु सिंहस्थां वर्द्धनीं खड्गरूपिणीं ॥ ३० ॥
दिक्षु शक्रादिदिक्पालान्विष्ण्वन्तान् प्रणवासनान्।
वाहनायुधसंयुक्तान् हृदाऽभ्यर्च्य स्वनामभिः ॥ ३१ ॥
प्रथमन्तां समादाय कुम्भस्याग्राभिगामिनीं।
अविच्छिन्नपयोधारां भ्रामयित्वा प्रदक्षिणं ॥ ३२ ॥
शिवाज्ञां लोकपालानां श्रावयेन्मूलमुच्चरन्।
संरक्षत यथायोगं कुम्भं धृत्वाऽथ तां धरेत् ॥ ३३ ॥
ततः स्थिरासने कुम्भे साङ्गं सम्पूज्य शङ्करं।
विन्यस्य शोध्यमध्वानं वर्द्धन्यामस्त्रमर्चयेत् ॥ ३४ ॥

ओं हः अस्त्रासनाय हूं फट्। ओं ओं अस्त्रमूर्त्तये नमः। ओं हूं फट् पाशुपतास्त्राय नमः। ओं ओं हृदयाय हूं फट् नमः। ओं श्रीं शिरसे हूं फट् नमः। ओं यं शिखायै हूं फट् नमः। ओं गूं कवचाय हूं फट् नमः। ओं फट् अस्त्राय हूं फट् नमः(१)।

चतुर्वक्त्रं सदंष्ट्रञ्च स्मरेदस्त्रं सशक्तिकं।
समुद्गरत्रिशूलासिं सूर्य्यकोटिसमप्रभं ॥ ३५ ॥
भगलिङ्गसमायोगं विदध्याल्लिङ्गमुद्रया।

१ ओं अं हः अस्त्रासनाय हूं फट्। ओं अं अस्त्रमूर्त्तये नमः। ओं पशुं हुं फट् पाशुपतास्त्राय नमः। ओं हृदयाय हूं फट् नमः। ओं श्रीं शिरसे हूं फट् नमः। ओं मं शिखायै फट् नमः। ओं अस्त्राय फट् हूं फट् नमः। इति ग, चिह्नितपुस्तकपाठः। ओं हः अस्त्रासनाय हूं फट्। ओं ओं अस्त्रमूर्त्तये नमः। ओं सां सं हूं फट् पाशुपतास्त्राय स्वाहा। ओं ओं हृदयाय हूं फट् नमः। ओं यं शिखायै हूं फट् नमः। ओं सं कवचाय हूं फट् नमः। ओं हं फट् अस्त्राय फट् नमः। इति ङ, चिह्नितपुस्तकपाठः।

अङ्कुशेन स्पृशेत् कुम्भं हृदा मुष्ट्याऽस्त्रवर्द्धनीं ॥ ३६ ॥
भुक्तये मुक्तये त्वादौ मुष्टिना वर्द्धनीं स्पृशेत् ।
कुम्भस्य मुखरक्षार्थं ज्ञानखड्गं समर्पयेत् ॥ ३७ ॥
शक्तश्च मूलमन्त्रस्य शतं कुम्भे निवेशयेत् ।
तद्दशांशेन वर्द्धनयां रक्षां विज्ञापयेत्ततः ॥ ३८ ॥
यथेदं कृतयत्नेन भगवन्मखमन्दिरं ।
रक्षणीयं जगन्नाथ सर्वाध्वरधर त्वया ॥ ३९ ॥
प्रणवस्थं चतुर्बाहुं वायव्ये गणमर्चयेत् (१) ।
स्थण्डिले शिवमभ्यर्च्य सार्घ्यकुण्डं व्रजेन्नरः ॥ ४० ॥
निविष्टो मन्त्रतृप्त्यर्थमर्घ्यगन्धघृतादिकं ।
वामेऽसव्ये तु विन्यस्य समिद्दर्भतिलादिकं ॥ ४१ ॥
कुण्डवह्निस्रुगाज्यादि प्राग्वत् संस्कृत्य भावयेत् ।
मुख्यतामूर्द्धं कृत्य हृदि वह्नौ शिवं यजेत् ॥ ४२ ॥
स्वमूर्त्तौ शिवकुम्भे च स्थण्डिले त्वग्निशिष्ययोः ।
सृष्टिन्यासेन विन्यस्य शोध्याध्वानं यथाविधि ॥ ४३ ॥
कुण्डमानं मुखं ध्यात्वा हृदाहुतिभिरीप्सितं ।
बीजानि सप्तजिह्वानामग्नेर्होमाय भण्यते ॥ ४४ ॥
विरेफावन्तिमौ वर्णौ रेफषष्ठस्वरान्वितौ ।
इन्दुबिन्दुशिखायुक्तौ जिह्वाबीजानुक्रमात् ॥ ४५ ॥
हिरण्या कनका रक्ता कृष्णा तदनु सुप्रभा ।
अतिरिक्ता बहुरूपा रुद्रेन्द्राग्न्याप्यदिङ्मुखा ॥ ४६ ॥
क्षीरादिमधुरैर्होमं कुर्य्याच्छान्तिकपौष्टिके ।
अभिचारे तु पिण्याकसक्तुकञ्चुककाञ्जिकैः ॥ ४७ ॥
लवणै राजिकातक्रकटुतैलैश्च कण्टकैः ।

१ वायव्ये कालमर्च्चयेदिति ग, चिह्नितपुस्तकपाठः ।

समिद्भिरपि वक्राभिः क्रुद्धो भाव्यायुना यजेत्॥ ४८॥
कदम्बकलिकाहोमाद्यक्षिणी सिद्ध्यति ध्रुवं।
बन्धूककिंशुकादीनि वश्याकर्षाय होमयेत्॥ ४९॥
बिल्वं राज्याय लक्ष्म्यर्थं पाटलांश्चम्पकानपि।
पद्मानि चक्रवर्त्तित्वे भक्ष्यभोज्यानि सम्पदे॥ ५०॥
दूर्वा व्याधिविनाशाय सर्वसत्त्ववशीकृते।
प्रियङ्गुपाटलीपुष्पं चूतपत्रं ज्वरान्तकं॥ ५१॥
मृत्युञ्जयो मृत्युजित् स्याद् वृद्धिः स्यात्तिलहोमतः।
रुद्रशान्तिः सर्व्वशान्त्यै अथ प्रस्तुतमुच्यते॥ ५२॥
आहृत्यस्वशतैर्मूलमङ्गानि तु दशांशतः।
सन्तर्पयेत मूलेन दद्यात् पूर्णां यथा पुरा॥ ५३॥
तथा शिष्यप्रवेशाय प्रतिशिष्यं शतं जपेत्।
दुर्निमित्तापसाराय सुनिमित्तकृते तथा॥ ५४॥
शतद्वयञ्च होतव्यं मूलमन्त्रेण पूर्ववत्।
मूलाद्यस्त्रमन्त्राणां स्वाहान्तैस्तर्पणं सकृत्॥ ५५॥
शिखासम्पुटितैर्वीजैर्हूं फडन्तैश्च(१) दीपनं।
ओं ह्रौं शिवाय स्वाहेत्यादिमन्त्रैश्च तर्पणं॥ ५६॥
ओं हूं ह्रौं ह्रौं शिवाय हूं(२) फडित्यादिदीपनं।
ततः शिवाम्भसा स्थालीं क्षालितां वर्म्मगुण्ठितां(३)॥ ५७॥
चन्दनादिसमालब्धां बध्नीयात् कटकं गले।
वर्म्मास्त्रजप्तसद्दर्भपत्राभ्यां चरुसिद्धये॥ ५८॥

---

१ हुं फडन्तैश्चेति ख, चिह्नितपुस्तकपाठः।

२ ओं हूं हौं हूं शिवाय हूमिति ख, चिह्नितपुस्तकपाठः। ओं ह्रां ह्रौं ह्रां शिवाय ह्रां इति ङ, चिह्नितपुस्तकपाठः।

३ धर्मगुप्तिसामिति ख, चिह्नितपुस्तकपाठः।

वर्म्माद्यैरासने(१) दत्ते सार्द्धेन्दुकृतमण्डले(२) ।
न्यस्तायां मूर्त्तिभूतायां भावपुष्पैः शिवं यजेत् ॥ ५९ ॥
वस्त्रबद्धमुखायां वा स्थाल्यां पुष्पैर्वहिर्भवैः ।
चुल्लग्रां पश्चिमवक्त्रायां शुद्धायां वीक्षणादिभिः ॥ ६० ॥
न्यस्ताहङ्कारवीजायां न्यस्तायां कुण्डदक्षिणे ।
धर्म्माधर्म्मशरीरायां जप्तायां मानुषात्मना ॥ ६१ ॥
स्थालीमारोपयेदस्त्रजप्तां गव्याम्बुमार्जितां ।
गव्यं पयोऽस्त्रसंशुद्धं प्रासादशतमन्त्रितं ॥ ६२ ॥
तण्डुलान् श्यामकादीनां निक्षिपेत्तत्र तद्यथा ।
एकशिष्यविधानाय तेषां प्रसृतिपञ्चकं ॥ ६३ ॥
प्रसृतिं प्रसृतिं पश्चाद्वर्द्धयेद् द्व्यादिषु क्रमात् ।
कुर्य्याद्ध्यानसमन्त्रेण पिधानं कवचाणुना ॥ ६४ ॥
शिवाग्नौ मूलमन्त्रेण पूर्वास्यश्चरुकं पचेत् ।
सुखिन्ने तत्र तच्चुल्लग्रां स्रुवमापूर्य्य सर्पिषा ॥ ६५ ॥
स्वाहान्तैः संहितामन्त्रैर्दत्वा तप्ताभिघारणं ।
संस्थाप्य मण्डले स्थालीं सदर्भेऽस्त्राणुना कृते ॥ ६६ ॥
प्रणवेन पिधायास्यां तद्वहलेपनं हृदा ।
सुशीतलो भवत्येवं प्राप्य शीताभिघारणं ॥ ६७ ॥
विदध्यात्संहितामन्त्रैः शिष्यं प्रति सकृत् सकृत् ।
धर्म्माद्यासनके कृत्वा(३) कुण्डमण्डलपश्चिमे ॥ ६८ ॥
सम्पातञ्च स्रुचा कृत्वा शुद्धिं संहितया चरेत् ।
चरुकं सकृदालभ्य तथैव वषडन्तया ॥ ६९ ॥

---

१ धर्म्माद्यैरासने इति क, चिह्नितपुस्तकपाठः ।
२ सार्द्धाम्बुकृतमण्डले इति ख, चिह्नितपुस्तकपाठः ।
३ धर्म्माद्यासनके धृत्वेति ख, ग, चिह्नितपुस्तकपाठः ।

धेनुमुद्रामृतीभूतं स्थण्डिलेशान्तिकं नयेत्(१) ।
साज्यभागं स्वशिष्यायां भागो देवाय वह्नये ॥ ७० ॥
कुर्य्यात्तु लोकपालादेः समभ्याज्यमिदं नयं ।
नमोऽन्तेन हृदा दद्यात्तेनैवाचमनीयकं(२) ॥ ७१ ॥
साज्यं मन्त्रशतं कृत्वा दद्यात् पूर्णां यथाविधि ।
मण्डलं कुण्डतः पूर्वे मध्ये वा शम्भुकुम्भयोः ॥ ७२ ॥
रुद्रमातृगणादीनां निर्वर्त्यान्तर्बलिं हृदा ।
शिवमध्येऽप्यसङ्ख्यातो विधायैकत्वभावनं ॥ ७३ ॥
सर्वज्ञतादियुक्तोऽहं समन्ताच्चोपरि स्थितः ।
ममांशो योजनास्थानमधिष्ठाताऽहमध्वरे ॥ ७४ ॥
शिवोऽहमित्यहङ्कारी निष्क्रमेद् यागमण्डपात् ।
न्यस्तपूर्वाग्रसम्भर्भे शस्त्रागुप्तमण्डले ॥ ७५ ॥
प्रशावासनके शिष्यं शुक्लवस्त्रोत्तरीयकं ।
स्नातश्चोदङ्मुखं मुक्त्यै पूर्ववक्त्रन्तु भुक्तये ॥ ७६ ॥
उर्द्ध्वं कायं समारोप्य पूर्वास्यं प्रविलोकयेत् ।
चरणादिशिखां यावन्मुक्तौ भुक्तौ विलोमतः ॥ ७७ ॥
चक्षुषा सप्रसादेन शैवं धाम विवृण्वता ।
अस्त्रोदकेन सम्प्रोक्ष्य मन्त्राम्बुस्नानसिद्धये ॥ ७८ ॥
भस्मस्नानाय विघ्नानां शान्तये पापभित्तये(३) ।
सृष्टिसंहारयोगेन ताडयेदस्त्रभस्मना ॥ ७९ ॥
पुनरस्त्राम्बुना प्रोक्ष्य सकलीकरणाय तं ।

---

१ स्थण्डिलोपान्तिकं नयेदिति क, चिह्नितपुस्तकपाठः ।
२ तेनैवाचमनीकमिति क, ख, ग, चिह्नितपुस्तकत्रयपाठः ।
३ पापभित्तये इति ग, चिह्नितपुस्तकपाठः ।

नाभेरूर्द्ध्वं कुशाग्रेण मार्जनीयास्त्रमुच्चरन् ॥ ८० ॥
त्रिधाऽऽलभेत तन्मूलैरघमर्षाय नाभ्यधः।
द्विविधाय च पाशानां आलभेत शराणुना ॥ ८१ ॥
तच्छरीरे शिवं साङ्गं सासनं विन्यसेत्ततः।
पुष्पादिपूजितस्यास्य नेत्रे नेत्रेण वा हृदा ॥ ८२ ॥
बध्नामन्त्रितवस्त्रेण सितेन सदृशेन च।
प्रदक्षिणक्रमादेनं प्रवेश्य शिवदक्षिणं ॥ ८३ ॥
सवस्त्रमासनं दद्यात् यथावर्णं(१) निवेदयेत्।
संहारमुद्रयात्मानं मूर्त्या तस्य हृदम्बुजे ॥ ८४ ॥
निरुध्य शोधिते काये न्यासं कृत्वा समर्च्चयेत्।
पूर्व्वानमस्य शिष्यस्य मूलमन्त्रेण मस्तके ॥ ८५ ॥
शिवहस्तं प्रदातव्यं रुद्रेशपददायकं।
शिवसेवाग्रहीयायं दत्तहस्तं शिवाणुना(२) ॥ ८६ ॥
शिवे प्रक्षेपयेत् पुष्पमपनीयार्घकान्तरं(३)।
तत्पात्रस्थानमन्त्राढ्यं शिवदेवगणानुगं ॥ ८७ ॥
विप्रादीनां क्रमान्नाम कुर्य्याद्वा स्वेच्छया गुरुः।
प्रणतिं कुम्भवर्द्धन्योः कारयित्वाऽनलान्तिकं ॥ ८८ ॥
सदक्षिणासने तद्वत्(४) सौम्यास्यमुपवेशयेत्।
शिष्यदेहविनिष्क्रान्तां सुषुम्णामिव चिन्तयेत् ॥ ८९ ॥
निजविग्रहलीनाञ्च दर्भमूलेन मन्त्रितं।

---

१ सुवर्णञ्चेति ग, चिह्नितपुस्तकपाठः।
२ शिवात्मनेति ख, ग, चिह्नितपुस्तकद्वयपाठः।
३ अपनीयाधिकाम्बरं इति घ, चिह्नितपुस्तकपाठः।
४ सदक्षिणासन तत्रेति क, चिह्नितपुस्तकपाठः।

दर्भाग्रं दक्षिणे तस्य विधाय करपल्लवे ॥ ८० ॥
तन्मूलमात्मजङ्घायामग्रञ्चेति शिखिध्वजे।
शिष्यस्य हृदयं गत्वा रेचकेन शिवाणुना(१) ॥ ८१ ॥
पूरकेण समागत्य स्वकीयं हृदयान्तरं।
शिवाग्निना पुनः कृत्वा नाडीसन्धानमीदृशं ॥ ८२ ॥
हृदा तत्सन्निधानार्थञ्जुहुयादाहुतित्रयं।
शिवहस्तस्थिरत्वार्थं(२) शतं मूलेन होमयेत्।
इत्थं समयदीक्षायां भवेद्योग्यो भवार्चने ॥ ८३ ॥

इत्यादिमहापुराणे आग्नेये समयदीक्षाकथनं नाम
एकाशीतितमोऽध्यायः ॥

---

## अथ द्व्यशीतितमोऽध्यायः।

### संस्कारदीक्षाकथनं।

ईश्वर उवाच। वक्ष्ये संस्कारदीक्षाया विधानं शृणु षण्मुख।
आवाहयेन्महेशस्य वह्निस्थस्य शिरो हृदि ॥ १ ॥
संश्लिष्टौ तौ समभ्यर्च्य सन्तर्प्य हृदयात्मना।
तयोः सन्निधये दद्यात्तेनैवाहुतिपञ्चकं ॥ २ ॥
कुसुमेनास्त्रलिप्तेन(३) ताडयेत्तं हृदा शिशुं।
प्रस्फुरत्तारकाकारं चैतन्यं तत्र भावयेत् ॥ ३ ॥

---

१ शिवात्मनेति ख, ग, चिह्नितपुस्तकद्वयपाठः।
२ शिवहस्ते च स्थित्यर्थमिति ग, चिह्नितपुस्तकपाठः।
३ कुसुमेनाहतास्त्रेणेति ङ, चिह्नितपुस्तकपाठः।

प्रविश्य तत्र ऊङ्कारमुक्तं रेचकयोगतः ।
संहारिण्या तदाकृष्य पूरकेण हृदि न्यसेत् ॥ ४ ॥
ततो वागीश्वरीयोनौ मुद्रयोद्भवसञ्ज्ञया ।
हृत्सम्पुटितमन्त्रेण(१) रेचकेन विनिक्षिपेत् ॥ ५ ॥
ओं हां हां हां आत्मने नमः(२) ।
जाज्वल्यमाने निर्द्धूमे जुहुयादिष्टसिद्धये ।
अप्रवृद्धे सधूमे तु होमो वह्नौ न सिध्यति ॥ ६ ॥
स्निग्धः प्रदक्षिणावर्त्तः सुगन्धिः शस्यतेऽनलः ।
विपरीतस्फुलिङ्गी च भूमिस्पर्शः प्रशस्यते ॥ ७ ॥
इत्येवमादिभिश्चिह्नैर्ज्ञात्वा शिष्यस्य कल्मषं ।
पापभक्षणहोमेन(३) दहेद्वा तं भवात्मना ॥ ८ ॥
द्विजत्वापादनार्थाय तथा रुद्रांशभावने ।
आहारबीजसंशुद्धौ(४) गर्भाधानाय संस्थितौ ॥ ९ ॥
सीमन्ते जन्मतो नामकरणाय च होमयेत् ।
शतानि पञ्च मूलेन वौषडादिदशांशतः ॥ १० ॥
शिथिलीभूतबन्धस्य शक्तावुत्कर्षणं च यत् ।
आत्मनो रुद्रपुत्रत्वे गर्भाधानं तदुच्यते ॥ ११ ॥
स्वान्तत्र्यात्मगुणव्यक्तिरिह पुंसवनं मतं ।
मायात्मनोर्विवेकेन ज्ञानं सीमन्तवर्द्धनं ॥ १२ ॥
शिवादितत्त्वशुद्धिस्तु स्वीकारो जननं मतं ।

---

१ हृत्सम्पुटात्ममन्त्रेणेति ङ, चिह्नितपुस्तकपाठः ।

२ ओं हां हां आत्मने नमइति ग, घ, चिह्नितपुस्तकपाठः । ओं हां आत्मने नम इति ङ, चिह्नितपुस्तकपाठः ।

३ पापक्षयेण होमेनेति ङ, चिह्नितपुस्तकपाठः ।

४ बीजसंसिद्धौ इति ङ, चिह्नितपुस्तकपाठः ।

बोधनं यच्छिवत्वेन शिवत्वाईस्य नो मतं(१) ॥ १३ ॥
संहारमुद्रयात्मानं स्फुरद्वह्निकणोपमं ।
विदधीत समादाय निजे हृदयपङ्कजे ॥ १४ ॥
ततः कुम्भकयोगेन मूलमन्त्रमुदीरयेत् ।
कुर्य्यात् समवशीभावं तदा च शिवयोर्हृदि ॥ १५ ॥
ब्रह्मादिकारणात्यागक्रमाद्रेचकयोगतः ।
नीत्वा शिवान्तमात्मानमादायोद्भवमुद्रया ॥ १६ ॥
हृत्सम्पुटितमन्त्रेण रेचकेन विधानवित् ।
शिष्यस्य हृदयाम्भोजकर्णिकायां विनिक्षिपेत् ॥ १७ ॥
पूजां शिवस्य वह्नेश्च गुरुः कुर्य्यात्तदोचितां ।
प्रणतिञ्चात्मने शिष्यं समयान् श्रावयेत्तथा ॥ १८ ॥
देवं न निन्देच्छास्त्राणि निर्म्माल्यादि न लङ्घयेत् ।
शिवाग्निगुरुपूजा च कर्त्तव्या जीवितावधि ॥ १९ ॥
बालबालिशवृद्धस्त्रीभोगभुग्व्याधितात्मनां ।
यथाशक्ति ददीतार्थं(२) समर्थस्य समग्रकान् ॥ २० ॥
भूताङ्गानि जटाभस्मदण्डकौपीनसंयमान् ।
ईशानाद्यैर्हृदाद्यैर्वा परिजप्य यथाक्रमात् ॥ २१ ॥
स्वाहान्तसंहितामन्त्रैः पात्रेष्वारोप्य पूर्ववत् ।
सम्पादितद्रुतं कृत्वा स्थण्डिलेशाय दर्शयेत् ॥ २२ ॥
रक्षणाय घटाधस्तादारोप्य क्षणमात्रकं ।
शिवादाज्ञां समादाय ददीत व्रतिने गुरुः ॥ २३ ॥
एवं समयदीक्षायां विशिष्टायां विशेषतः ।

---

१ वर्द्धनमिति घ, चिह्नितपुस्तकपाठः ।

२ ददीतार्थमिति घ, चिह्नितपुस्तकपाठः ।

वह्निहोमागमज्ञानयोग्यः सञ्जायते शिशुः ॥ २४ ॥

इत्यादिमहापुराणे आग्नेये समयदीक्षाकथनं नाम
द्व्यशीतितमोऽध्यायः ॥

---

## अथ त्र्यशीतितमोऽध्यायः ।

### निर्वाणदीक्षाकथनं ।

ईश्वर उवाच । अथ निर्वाणदीक्षायां कुर्य्यान्मूलादिदीपनं ।
पाशबन्धनशक्त्यर्थं ताडनादिकृतेन वा ॥ १ ॥
एकैकया तदावृत्या प्रत्येकं तत्त्रयेण वा ।
बीजगर्भशिखार्द्धन्तु ह्रूं फडन्तशुवादिना(१) ॥ २ ॥
ओं ह्रूं ह्रौं ह्रौं ह्रूं फडिति(२) मूलमन्त्रस्य दीपनं ।
ओं ह्रूं ह्रौं ह्रौं ह्रूं फडिति(३) हृदय एवं शिरोमुखे ॥ ३ ॥
प्रत्येकं दीपनं कुर्य्यात् सर्व्वस्मिन् क्रूरकर्म्मणि ।
शान्तिके पौष्टिके चास्य वषडन्तादिनाणुना(४) ॥ ४ ॥
वषड्वौषट्समोपेतैः सर्वकाम्योपरि स्थितैः ।
एवमं संवरैः कुर्य्यात् सर्वमाप्यायनादिषु ॥ ५ ॥
ततः स्वसव्यभागस्थं मण्डले शुद्धविग्रहं ।

---

१ ह्रौं फडन्तशुवादिना इति ख, चिह्नितपुस्तकपाठः ।

२ ओं ह्रूं ह्रौं ह्रौं ह्रूं फडिति ख, चिह्नितपुस्तकपाठः । ओं ह्रूं ह्रौं ह्रौं ह्रूं फडिति ग, चिह्नितपुस्तकपाठः ।

३ ओं ह्रूं ह्रां ह्रां ह्रूं फडिति ख, चिह्नितपुस्तकपाठः । ओं ह्रं ह्रौं ह्रं ह्रं फडिति ग, चिह्नितपुस्तकपाठः ।

४ वषडन्तादिनाणुनेति ख, ग, चिह्नितपुस्तकपाठः ।

शिष्यं सम्पूज्य तत् सूत्रं सुषुम्नेति विभावितं ॥ ६ ॥
मूलेन तच्छिखाबन्धं पादाङ्गुष्ठान्तमानयेत् ।
संहारेण मुमुक्षोस्तु बध्नीयाच्छिष्यकायके ॥ ७ ॥
पुंसस्तु दक्षिणे भागे वामे नार्य्या नियोजयेत् ।
शक्तिं च शक्तिमन्त्रेण पूजितान्तस्य मस्तके ॥ ८ ॥
संहारमुद्रयाऽऽदाय सूत्रं तेनैव योजयेत् ।
नाडीन्वादाय मूलेन सूत्रे न्यस्य हृदार्च्चयेत् ॥ ९ ॥
अवगुण्ठ्य तु वर्म्मणा हृदयेनाहुतित्रयं ।
प्रदद्यात्सन्निधानार्थं शक्तावप्येवमेव हि ॥ १० ॥
ओं हां वर्णाध्वने नमो हां भवनाध्वने नमः ।
ओं हां कलाध्वने नमः(१) शोध्याध्वानं हि सूत्रके ॥ ११ ॥
न्यस्यास्त्रवारिणा शिष्यं प्रोक्ष्यास्त्रमन्त्रितेन च ।
पुष्पेण हृदि सन्ताड्य शिष्यदेहे प्रविश्य च ॥ १२ ॥
गुरुस्तत्र हुङ्कारयुक्तं रेचकयोगतः ।
चैतन्यं हंसबीजस्थं विश्लिष्येदायुधात्मना ॥ १३ ॥
ओं हौं हूं फट्(२) ।
आच्छिद्य शक्तिसूत्रेण हां हं स्वाहेति चाणुना ।
संहारमुद्रया सूत्रे नाडीभूते नियोजयेत् ॥ १४ ॥
ओं हां हं हां आत्मने नमः ।
व्यापकं भावयेदेनं तनुत्रेणावगुण्ठयेत्(३) ।

---

१ ओं हां पदाध्वने नमः । ओं हां वर्णाध्वने नमः । ओं हां भवनाध्वने नमः । ओं हां कलाध्वने नमः । इति ग, चिह्नितपुस्तकपाठः । ओं हां पदात्मने नमः । ओं हां वर्णात्मने नमः । ओं हां मन्त्रात्मने नमः । ओं हां कालात्मने नम इति क चिह्नितपुस्तकपाठः ।

२ ओं हां हौं हूं फट् इति ग, चिह्नितपुस्तकपाठः ।

३ तन्मात्रेणावगुण्ठयेदिति ग, चिह्नितपुस्तकपाठः ।

आहुतित्रितयं दद्यात् हृदा सन्निधिहेतवे ॥ १५ ॥
विद्यादेहञ्च विन्यस्य शान्त्यतीतावलोकनं ।
तस्यामितरतत्त्वाद्यं मन्त्रभूतं विचिन्तयेत् ॥ १६ ॥
ओं हां हौं शान्त्यतीतकलापाशाय(१) नम इत्यनेनावलोकयेत् ।
द्वे तत्त्वे मन्त्रमध्येकं पदं वर्णाश्च षोडश ।
तथाऽष्टौ भुवनान्यस्यां वीजनाडीकयद्वयं ॥ १७ ॥
विषयश्च गुणश्चैकं कारणं च सदा शिवं ।
सितायां शान्त्यतीतायामन्तर्भाव्य प्रपीडयेत् ॥ १८ ॥
ओं हौं शान्त्यतीतकलापाशाय हूं फट् ।
संहारमुद्रयाऽऽदाय विदध्यात् सूत्रमस्तके ।
पूजयेदाहुतीस्तिस्त्रो दद्यात् सन्निधिहेतवे ॥ १९ ॥
तत्त्वे द्वे अक्षरे द्वे च वीजनाडीकयद्वयं ।
गुणौ मन्त्रौ तथाऽक्षस्थमेकं कारणमीश्वरं ॥ २० ॥
पदानि भानुसङ्ख्यानि भुवनानि दश सप्त च ।
एकश्च विषयं शान्तौ छायायामच्युतं स्मरेत् ॥ २१ ॥
ताडयित्वा समादाय मुखसूत्रे नियोजयेत् ।
जुहुयाग्निजवीजेन सान्निध्यायाहुतित्रयं ॥ २२ ॥
विद्यायां सप्त तत्त्वानि पादानामेकविंशतिं ।
षड् वर्णान् सस्वरं चैकं लोकानां पञ्चविंशतिं ॥ २३ ॥
गुणानान्त्रयमेकञ्च विषयं रुद्रकारणं ।
अन्तर्भाव्यातिरिक्तायां वीजनाडीकयद्वयं ॥ २४ ॥
अक्षमादाय दध्याच पदं द्व्यधिकविंशतिं ।
लोकानाञ्च कलानाञ्च षष्ठिं गुणचतुष्टयं ॥ २५ ॥

---

१ ओं हां हौं हों शान्त्यतीतकलापाशायेति ग, चिह्नितपुस्तकपाठः ।

मन्त्राणां चयमेकञ्च विषयं कारणं हरिं ।
अन्तर्भाव्य प्रतिष्ठायां शुक्लायान्ताडनादिकं ॥ २६ ॥
विधाय चाभिसूत्रस्थां सन्निधायाहुतीर्यजेत् ।
क्रीं भुवनानां(१) शतं सार्द्धं पदानामष्टविंशतिं(२) ॥ २७ ॥
वीजनाडीसमीराणां द्वयोरिन्द्रिययोरपि ।
वर्णान्तत्त्वञ्च विषयमेकैकं गुणपञ्चकं ॥ २८ ॥
हेतुं प्रधानमन्त्रस्थं प्रस्वराणां चतुष्टयं ।
निवृत्तौ पीतवर्णायामन्तर्भाव्य प्रताडयेत् ॥ २९ ॥
आदौ यत्तत्त्वभागान्ते(३) सूत्रे विन्यस्य पूजयेत् ।
जुहुयादाहुतीस्तिस्रः सन्निधानाय पावके ॥ ३० ॥
इत्यादाय कलासूत्रे योजयेच्छिष्यविग्रहात् ।
सवीजायान्तु दीक्षायां समयाचारयोगतः ॥ ३१ ॥
देहारम्भकरक्षार्थं मन्त्रसिद्धिफलादपि ।
इष्टापूर्त्तादिधर्म्मार्थं व्यतिरिक्तं प्रबन्धकं ॥ ३२ ॥
चैतन्यबोधकं सूक्ष्मं कलानामन्तरे स्मरेत् ।
अमुनैव क्रमेणाथ कुर्य्यात्तर्पणदीपने ॥ ३३ ॥
आहुतिभिः समन्त्रेण तिसृभिस्तिसृभिस्तथा ।
ओं हौं शान्त्यतीतकलापाशाय स्वाहेत्यादितर्पणं ।
ओं हां हं हां(४) शान्त्यतीतकलापाशाय हूम्फडित्यादिदीपनं ।
तत् सूत्रं व्याप्तिबोधाय कलास्थानेषु पञ्चसु ॥ ३४ ॥

---

१ ह्रीं त्रिभुवनाधिपानामिति ख, चिह्नितपुस्तकपाठः ।
२ पदानामूनविंशतिमिति ग, चिह्नितपुस्तकपाठः ।
३ आदौ सतत्त्वभावेनेति ग, चिह्नितपुस्तकपाठः ।
४ ओं हां हौं हौं इति ग, चिह्नितपुस्तकपाठः ।

सङ्कृत्य कुङ्कुमाज्येन(१) तत्र साङ्गं शिवं यजेत् ।
हृम्फडन्तैः कलामन्त्रैर्भित्त्वा पाशाननुक्रमात् ॥ ३५ ॥
नमोऽन्तैश्च प्रविश्यान्तः कुर्य्याद् ग्रहणबन्धने ।
ओं हूं हां ह्रीं हां हूं फट् शान्त्यतीतकलां गृह्णामि
बध्नामि चेत्यादिमन्त्रैः कलानां ग्रहणबन्धनादिप्रयोगः ।
पाशादीनाञ्च स्वीकारो ग्रहणं बन्धनं पुनः ॥ ३६ ॥
पुरुषं प्रति निःशेषव्यापारप्रतिपत्तये ।
उपवेश्याथ तत् सूत्रं शिष्यस्कन्धे निवेशयेत् ॥ ३७ ॥
विस्तृताघप्रमोषाय शतं मूलेन होमयेत् ।
शरावसम्पुटे पुंसः स्त्रियाश्च प्रशितोदरे ॥ ३८ ॥
हृदस्त्रसम्पुटं सूत्रं विधायाभ्यर्च्चयेद्धृदा(२) ।
सूत्रं शिवेन साङ्गेन कृत्वा सम्पातशोधितं ॥ ३९ ।
निदध्यात् कलशस्याधो रक्षां विज्ञापयेदिति ।
शिष्यं पुत्रं करे दत्वा सम्पूज्य कलशादिकं ॥ ४० ॥
प्रणमय्य वहिर्यायाद् यागमन्दिरमध्यतः ।
मण्डलत्रितयं कृत्वा मुमुक्षूनुत्तराननान् ॥ ४१ ॥
भुक्तये पूर्व्ववक्त्रांश्च शिष्यांस्तत्र निवेशयेत् ।
प्रथमे पञ्चगव्यस्य प्राशयेच्चुलकत्रयं ॥ ४२ ॥
पाणिना कुशयुक्तेन अर्च्चितानन्तरान्तरं ।
चरन्तत्तृतीये तु ग्रासत्रितयसम्मितं ॥ ४३ ॥
अष्टग्रासप्रमाणं वा दशनस्पर्शवर्जितं ।
पालाशपुटके मुक्तौ भुक्तौ पिप्पलपत्रके ॥ ४४ ॥

---

१ कुम्भमाज्येनेति ग, चिह्नितपुस्तकपाठः ।
२ निदध्यात् पूर्ववद्धृदा इति ङ, चिह्नितपुस्तकपाठः ।

हृदा सम्भोजनं दत्वा पूतैराचामयेज्जलैः ।
दन्तकाष्ठं हृदा दत्वा प्रक्षिपेच्छोभने शुभं ॥ ४५ ॥
न्यूनादिदोषमोषाय मूलेनाष्टोत्तरं शतं ।
विधाय स्थण्डिलेशाय सर्व्वकर्म्मसमर्पणं ॥ ४६ ॥
पूजाविसर्जनञ्चास्य चण्डेशस्य च पूजनं ।
निर्म्माल्यमपनीयाथ शेषमग्नौ यजेश्वरोः ॥ ४७ ॥
कलशं लोकपालांश्च पूजयित्वा विसृज्य च ।
विसृजेद्गणमग्निञ्च रक्षितं यदि वाह्यतः ॥ ४८ ॥
वाह्यतो लोकपालानां दत्वा सङ्क्षेपतो बलिं ।
भस्मना शुद्धतोयैर्व्वा स्नात्वा या गालयं विशेत्(१) ॥ ४९ ॥
गृहस्थान् दर्भशय्यायां पूर्व्वशीर्षान् सुरक्षितान् ।
हृदा सङ्कुस्मशय्यायां यतीन् दक्षिणमस्तकान् ॥ ५० ॥
शिखाबद्धशिखानस्त्रसप्तमाणवकान्वितान् ।
विज्ञाय स्नापयेच्छिष्यांस्ततो यायात् पुनर्व्वहिः ॥ ५१ ॥
ओं हिलि हिलि त्रिशूलपाणये स्वाहा ।
पञ्चगव्यचरुं प्राश्य गृहीत्वा दन्तधावनं ।
समाचम्य शिवं ध्यात्वा शय्यामास्थाय पावनीं(२) ॥ ५२ ॥
दीक्षागतक्रियाकाण्डं संस्मरन् संविशेद्गुरुः ।
इति सङ्क्षेपतः प्रोक्तो विधिर्दीक्षाधिवासने ॥ ५३ ॥

इत्यादिमहापुराणे आग्नेये निर्व्वाणदीक्षायामधिवासनं नाम त्र्यशीतितमोऽध्यायः ॥

---

१ यागालयं व्रजेदिति ङ, चिह्नितपुस्तकपाठः ।
२ शिवामास्थाय पावनीमिति ङ, चिह्नितपुस्तकपाठः ।

# चतुरशीतितमोऽध्यायः ।

## निर्व्वाणदीक्षाविधानं ।

ईश्वर उवाच । अथ प्रातः समुत्थाय कृतस्नानादिको गुरुः ।
दध्यार्द्रमांसमद्यादेः प्रशस्ताऽभ्यवहारिता ॥ १ ॥
गजाश्वारोहणं स्वप्ने शुभं शुक्लांशुकादिकं(१) ।
तैलाभ्यङ्गादिकं हीनं होमो घोरेण शान्तये(२) ॥ २ ॥
नित्यकर्म्मद्वयं कृत्वा प्रविश्य मखमण्डपं ।
स्वाचान्तो नित्यवत् कर्म्म कुर्य्यान्नैमित्तिके विधौ ॥ ३ ॥
ततः संशोध्य चात्मानं शिवहस्तं तथात्मनि ।
विन्यस्य कुम्भगं प्रार्च्च्य इन्द्रादीनामनुक्रमात् ॥ ४ ॥
मण्डले स्थण्डिले वाऽपि प्रकुर्वीत शिवार्च्चनं ।
तर्पणं पूजनं वह्नेः पूर्णान्तं मन्त्रतर्पणं ॥ ५ ॥
दुःस्वप्नदोषमोषाय शस्त्रेणाष्टाधिकं शतं ।
हुत्वा हूंसम्पुटेनैव विदध्यात् मन्त्रदीपनं ॥ ६ ॥
अन्तर्बलिविधानञ्च मध्ये स्थण्डिलकुम्भयोः ।
कृत्वा शिष्यप्रवेशाय लब्धानुज्ञो वहिर्व्रजेत् ॥ ७ ॥
कुर्य्यात्समयवत्तत्र मण्डलारोपणादिकं ।
सम्पातहोमं तन्नाडीरूपदर्भकरानुगं ॥ ८ ॥
ततस्सन्निधानाय तिस्रो हुत्वा मूलाणुनाऽऽहुतीः ।
कुम्भस्थं शिवमभ्यर्च्च्य पाशसूत्रमुपाहरेत्(३) ॥ ९ ॥

---

१ शुक्लाम्बरादिकमिति ख, चिह्नितपुस्तकपाठः ।

२ अस्मल्लब्धपञ्चपुस्तकेषु दध्यार्द्रमांसमद्यादेरित्यारभ्य होमो घोरेण शान्तये इत्यन्तः पाठः पूर्व्वेणानन्वित इव प्रतिभाति ।

३ पाशमूत्रं समाहरेदिति ङ, चिह्नितपुस्तकपाठः ।

स्वदक्षिणोर्द्ध्वकायस्य शिष्यस्याभ्यर्चितस्य च ।
तच्छिखायां निबध्नीयात् पादाङ्गुष्ठावलम्बितं ॥ १० ॥
तं निवेश्य निवृत्तेस्तु व्याप्तिमालोक्य चेतसा ।
ज्ञेयानि भुवनान्यस्यां शतमष्टाधिकं ततः ॥ ११ ॥
कपालोऽजश्च बुद्धश्च वज्रदेहः प्रमर्द्दनः(१) ।
विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः ॥ १२ ॥
अग्नी रुद्रो हुताशी च पिङ्गलः खादको हरः ।
ज्वलनो दहनो बभ्रुर्भस्मान्तकक्षपान्तकौ ॥ १३ ॥
याम्यमृत्युहरो धाता विधाता कार्य्यरञ्जकः ।
कालो धर्म्मोऽप्यधर्मश्च संयोक्ता च वियोगकः ॥ १४ ॥
नैर्ऋतो मारणो(२) हन्ता क्रूरदृष्टिर्भयानकः ।
उर्द्ध्वांशको विरूपाक्षो धूम्रलोहितदंष्ट्रवान् ॥ १५ ॥
बलश्चातिबलश्चैव पाशहस्तो महाबलः ।
श्वेतश्च जयभद्रश्च दीर्घबाहुर्जलान्तकः(३) ॥ १६ ॥
वडवास्यश्च भीमश्च दशैते वारुणाः स्मृताः ।
शीघ्रो लघुर्व्वायुवेगः सूक्ष्मस्तीक्ष्णः क्षपान्तकः ॥ १७ ॥
पञ्चान्तकः पञ्चशिखः कपर्द्दी मेघवाहनः ।
जटामुकुटधारी च नानारत्नधरस्तथा ॥ १८ ॥
निधीशो रूपवान् धन्यो सौम्यदेहः प्रसादकृत् ।
प्रकाशोऽप्यथ लक्ष्मीवान् कामरूपो दशोत्तरे ॥ १९ ॥
विद्याधरो ज्ञानधरः सर्वज्ञो वेदपारगः ।
मातृवृत्तश्च पिङ्गाक्षो भूतपालो बलिप्रियः ॥ २० ॥

---

१ प्रवर्द्धन इति ङ, चिह्नितपुस्तकपाठः ।
२ वरुण इति ख, चिह्नितपुस्तकपाठः ।
३ जलान्तक इति ङ, चिह्नितपुस्तकपाठः ।

सर्वविद्याविधाता च सुखदुःखहरा दश ।
अनन्तः पालको धीरः(१) पातालाधिपतिस्तथा ॥ २१ ॥
वृषो वृषधरो वीर्य्यो ग्रसनः(२) सर्वतोमुखः ।
लोहितश्चैव विज्ञेया दश रुद्राः फणिस्थिताः ॥ २२ ॥
शम्भुर्विभुर्गणाध्यक्षस्त्र्यक्षस्त्रिदशवन्दितः ।
संहारश्च विहारश्च लाभो लिप्सुर्विचक्षणः ॥ २३ ॥
अत्ता कुहककालाग्निरुद्रो(३) हाटक एव च ।
कुष्माण्डश्चैव सत्यश्च ब्रह्मा विष्णुश्च सप्तमः ॥ २४ ॥
रुद्रश्चाष्टाविमे रुद्राः कटाहाभ्यन्तरे स्थिताः ।
एतेषामेव नामानि भुवनानामपि स्मरेत् ॥ २५ ॥
भवोद्भवः सर्वभूतः सर्वभूतसुखप्रदः ।
सर्वसान्निध्यकृद् ब्रह्मविष्णुरुद्रशरार्च्चितः ॥ २६ ॥
संस्तुत पूर्वस्थित ओं साक्षिन् ओं रुद्रान्तक

ओं पतङ्ग ओं शब्द ओं सूक्ष्म ओं शिव सर्वसर्व्वद सर्व्वसान्निध्यकर ब्रह्मविष्णुरुद्रकर ओं नमः शिवाय ओं नमो नमः(४) ।

अष्टाविंशति पादानि व्योमव्यापि मनो गुह ।
सद्योहृदस्त्रनेत्राणि मन्त्रवर्णाष्टको मतः ॥ २७ ॥

---

१ वोर इति ङ, चिह्नितपुस्तकपाठः ।

२ वीर्य्योऽप्रसन्न इति ख, ग, चिह्नितपुस्तकद्वयपाठः ।

३ अथ शुक्लककालाग्निरुद्र इति ख, चिह्नितपुस्तकपाठः ।

४ अनर्च्चित संस्तुत पूर्वस्थित साक्षिन् तुङ्गर पतङ्गर ज्ञानर शब्द सूक्ष्म शिव सर्वद-सर्वाध्यक्षकर ब्रह्मविष्णुरुद्र ओं नमः शिवाय ओं नमो नमः ओं नमः शिवाय ओं नमो नमः इति । अनर्च्चित संस्तुत पूर्ववस्थि ओं साक्षिण ओं रुद्रान्तक ओं पतङ्ग ओं ज्ञान ओं शब्द ओं सूक्ष्म [ओं] शिव ओं सर्व ओं सर्वद ओं] सर्वसान्निध्यकर ब्रह्मविष्णुरुद्रकर ओं नमः शिवाय ओं नमो नम इति च, चिह्नितपुस्तकपाठः ।

बीजाकारो मकारश्च(१) मायाविद्यापिकृत्ताक्षये ।
प्राणापानावुभौ वायू घ्राणोपस्थौ तथेन्द्रिये ॥ २८ ॥
गन्धस्तु विषयः प्रोक्तो गन्धादिगुणपञ्चके ।
पार्थिवं मण्डलं पीतं वज्राङ्कं चतुरस्रकं ॥ २९ ॥
विस्तारो योजनानान्तु कोटिरस्य शताहता ।
अत्रैवान्तर्गता ज्ञेया योनयोऽपि चतुर्द्दश ॥ ३० ॥
प्रथमा सर्वदेवानां मन्वाद्या देवयोनयः ।
मृगपक्षी च पशवश्चतुर्द्धा तु सरीसृपाः ॥ ३१ ॥
स्थावरं पञ्चमं सर्वं योनिः षष्ठी अमानुषी (२) ।
पैशाचं राक्षसं याक्षं गान्धर्व्वं चैन्द्रमेव च ॥ ३२ ॥
सौम्यं प्राजेश्वरं(३) ब्राह्ममष्टमं परिकीर्त्तितं ।
अष्टानां पार्थिवन्तत्त्वमधिकारास्पदं मतं ॥ ३३ ॥
लयस्तु प्रकृतौ बुद्धौ भोगो ब्रह्मा च कारणं ।
ततो जाग्रदवस्थानैः समस्तैर्भुवनादिभिः ॥ ३४ ॥
निवृत्तिं गर्भितां ध्यात्वा स्वमन्त्रेण नियोज्य च ।

ओं हां ह्रूं हां(४) निवृत्तिकलापाशाय हूं फट् तत ओं हां हां(५) निवृत्तिकलापाशाय स्वाहेत्यनेनाङ्कुशमुद्रया पूरकेणाकृष्य ओं हूं ह्रां ह्रूं(६) निवृत्तिकलापाशाय हूं फडित्यनेन संहारमुद्रया कुम्भकेनाधः-

१ बीजोङ्कारो मकारश्चेति ग, ङ, चिह्नितपुस्तकपाठः ।

२ योनिः षष्ठी सुमानुषी इति ख, चिह्नितपुस्तकपाठः । योनिः षष्ठीषु मानुषी इति ग, ङ, चिह्नितपुस्तकपाठः ।

३ प्रजेश्वरमिति ङ, चिह्नितपुस्तकपाठः ।

४ ओं हां हूं हामिति ख, चिह्नितपुस्तकपाठः ।

५ तत ओं हां हां हामिति ख, चिह्नितपुस्तकपाठः ।

६ ओं हं ह्रूं हूमिति ख, चिह्नितपुस्तकपाठः ।

स्थानादादाय ओं ओं रूं हां(१) निवृत्तिकलापाशाय नम इत्यनेनो-
द्भवमुद्रया रेचकेन कुम्भे संस्थाप्य ओं हां निवृत्तिकलापाशाय नम
इत्यनेनार्घ्यं दत्वा सम्पूज्य विमुखेनैव स्वाहान्तेन सन्निधानाया-
हुतित्रयं सन्धानायाहुतित्रयं च दत्वा ओं हां ब्रह्मणे नम इति ब्रह्माणमा-
वाह्य सम्पूज्य च स्वाहान्तेन सन्तर्प्य।

ब्रह्मन् तवाधिकारेऽस्मिन् मुमुक्षुं दीक्षयाम्यहं ॥ ३५ ॥
भाव्यं त्वयाऽनुकूलेन विधिं विज्ञापयेदिति।
आवाहयेत्ततो देवीं रक्तां वागीश्वरीं हृदा ॥ ३६ ॥
इच्छाज्ञानक्रियारूपां षड्विधां ह्येककारणं।
पूजयेत्तर्पयेद्देवीं प्रकारेणामुना ततः ॥ ३७ ॥
वागीश्वरीं विनिःशेषयोनिविक्षोभकारणं।
हृत्सम्पुटार्थबीजादि हूं फडन्तशरामुना ॥ ३८ ॥
ताडयेद्धृदये तस्य प्रविशेत्स(२) विधानवित्।
ततः शिष्यस्य चैतन्यं हृदि वह्निकणोपमं ॥ ३९ ॥
निवृत्तिस्थं युतं पाशैर्ज्येष्ठया विभजेद्यथा।
ओं हां हूं हः हूं फट्
ओं हां स्वाहेत्यनेनाथ पूरकेणाङ्कुशमुद्रया ॥ ४० ॥
तदाकृष्य स्वमन्त्रेण गृहीत्वाऽऽत्मनि योजयेत्।
ओं हां हूं हां(३) आत्मने नमः।
पित्रोर्विभाव्य संयोगं चैतन्यं रेचकेन तत् ॥ ४१ ॥
ब्रह्मादिकारणत्यागक्रमान्नीत्वा शिवास्पदं।

---

१ ओं हूं ह्रीं हामिति ख, चिह्नितपुस्तकपाठः।
२ प्रविशेचेति ख, ङ, चिह्नितपुस्तकपाठः।
३ ओं हां यं हामिति ख, चिह्नितपुस्तकपाठः।

गर्भाधानार्थमादाय युगपत् सर्व्वयोनिषु॥ ४२॥
क्षिपेद्वागीश्वरीयोनौ वामयोद्भवमुद्रया।
ओं हां हां हां आत्मने नमः(१)।
पूजयेदप्यनेनैव तर्पयेदपि पञ्चधा॥ ४३॥
अन्ययोनिषु सर्व्वासु देहशुद्धिं हृदा चरेत्।
नात्र पुंसवनं स्त्र्यादिशरीरस्यापि सम्भवात्॥ ४४॥
सीमन्तोन्नयनं वापि दैवान्यङ्गानि देहवत्।
शिरसा जन्म कुर्व्वीत युगपत् सर्व्वदेहिनां॥ ४५॥
तथैव भावयेदेषामधिकारं शिवात्मना(२)।
भोगं कवचमन्त्रेण शस्त्रेण विषयात्मना॥ ४६॥
मोहरूपमभेदञ्च लयसञ्ज्ञं विभावयेत्।
शिवेन श्रोतसां शुद्धिं हृदा तत्त्वविशोधनं॥ ४७॥
पञ्च पञ्चाहुतीः कुर्य्यात्(३) गर्भाधानादिषु क्रमात्।
मायया मलकर्मादिपाशबन्धनिवृत्तये॥ ४८॥
निष्कृत्यैव हृदा पश्चाद् यजेत शतमाहुतीः।
मलशक्तिनिरोधेन पाशानाञ्च वियोजनं॥ ४९॥
स्वाहान्तायुधमन्त्रेण पञ्चपञ्चाहुतीर्यजेत्।
मायाद्यन्तस्य पाशस्य समवाराख्यजाया॥ ५०॥
कर्त्तर्य्या छेदनं कुर्य्यात् कल्पशस्त्रेण तद्यथा।
ओं ह्रूं निवृत्तिकलापाशाय हूं फट्।

---

१ ओं हं हूं हां आत्मने नम इति ख, चिह्नितपुस्तकपाठः।
२ शिवात्मनेति ख, चिह्नितपुस्तकपाठः।
३ पञ्चपञ्चाहुतीर्दद्यादिति ग, ङ, चिह्नितपुस्तकपाठः।

बन्धकत्वञ्च निर्वर्त्य हृत्ताभ्याञ्च शराणुना(१) ॥ ५१ ॥
विसृज्य वर्तुलीकृत्य घृतपूर्णे स्रुवे धरेत् ।
दहेदनुकलास्त्रेण केवलास्त्रेण भस्मसात् ॥ ५२ ॥
कुर्यात् पञ्चाहुतीर्दत्त्वा पाशाङ्कुरनिवृत्तये ।
ओं हः अस्त्राय हूं फट् ।
प्रायश्चित्तं ततः कुर्यादस्त्राहुतिभिरष्टभिः ॥ ५३ ॥
अथावाह्य विधातारं पूजयेत्तर्पयेत्तथा ।
तत ओं ह्रां शब्दस्पर्शशुद्धब्रह्मन् गृहाण स्वाहेत्याहुतित्रयेणाधिकारमस्य समर्पयेत् ।
दग्धनिःशेषपापस्य(२) ब्रह्मन्नस्य पशोस्त्वया ॥ ५४ ॥
बन्धाय न पुनः स्थेयं शिवाज्ञां श्रावयेदिति ।
ततो विसृज्य धातारं नाड्या दक्षिणया शनैः ॥ ५५ ॥
संहारमुद्रयात्मानं कुम्भकेन निजात्मना ।
राहुयुक्तैकदेशेन चन्द्रबिम्बेन सन्निभं ॥ ५६ ॥
आदाय योजयेत् सूत्रे रेचकेनोद्भवाख्यया ।
पूजयित्वार्घ्यपात्रस्थतोयबिन्दुसुधोपमं ॥ ५७ ॥
आप्यायनाय शिष्यस्य गुरुः शिरसि विन्यसेत् ।
विसृज्य पितरौ दद्यादौषडन्तशिवाणुना ।
पूर्णाय विधिः पूर्णा निवृत्तिरिति शोधिता ॥ ५८ ॥

इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षायां निवृत्तिकलाशोधनं नाम चतुरशीतितमोऽध्यायः ॥

---

१ शिवात्मनेति ख, चिह्नितपुस्तकपाठः ।
२ दग्धनिःशेषपाशस्य इति ख, ङ, चिह्नितपुस्तकपाठः ।

# अथ पञ्चाशीतितमोऽध्यायः ।

## प्रतिष्ठाकलाशोधनोक्तिः ।

ईश्वर उवाच । तत्त्वयोरथ सन्धानं कुर्य्याच्छुद्धविशुद्धयोः ।
ह्रस्वदीर्घप्रयोगेण नादनादान्तसङ्गिना ॥ १ ॥
ओं ह्रां ह्रूं ह्रां(१) अप्तेजो वायुराकाशं तन्मात्रेन्द्रियबुद्धयः ।
गुणत्रयमहङ्कारश्चतुर्विंशः पुमानिति ॥ २ ॥
प्रतिष्ठायां निविष्टानि तत्त्वान्येतानि भावयेत् ।
पञ्चविंशतिसङ्ख्यानि खादियान्ताक्षराणि च ॥ ३ ॥
पञ्चाशदधिका षष्टिर्भुवनैस्तुल्यसञ्ज्ञिताः ।
तावन्त एव रुद्राश्च विज्ञेयास्तत्र तद्यथा ॥ ४ ॥
अमरेशः प्रभावश्च नैमिषः पुष्करोऽपि च ।
तथा षाढिश्च दण्डिश्च भावभूतिरथाष्टमः ॥ ५ ॥
नकुलीशो हरिश्चन्द्रः श्रीशैलो दशमः स्मृतः ।
अन्वीशोऽस्रातिकेशश्च(२) महाकालोऽथ मध्यमः ॥ ६ ॥
केदारो भैरवश्चैव द्वितीयाष्टकमीरितं ।
ततो गयाकुरुक्षेत्रखलानादिकनादिके ॥ ७ ॥
विमलश्चाट्टहासश्च(३) महेन्द्रो भीम एव च ।
वस्त्रापदं रुद्रकोटिरवियुक्तो महाबलः ॥ ८ ॥
गोकर्णो भद्रकर्णश्च स्वर्णाक्षः स्थाणुरेव च ।
अजेशश्चैव सर्वज्ञो भास्वरः सूदनान्तरः ॥ ९ ॥
सुबाहुर्मत्तरूपी च विशालो जटिलस्तथा ।

---

१ ओं ह्रां ह्रूं ह्रूं ह्रामिति ख, चिह्नितपुस्तकपाठः ।
२ अल्पीशो भाग्निकेशश्चेति क, चिह्नितपुस्तकपाठः ।
३ विमलश्चण्डहासश्चेति क, चिह्नितपुस्तकपाठः ।

रौद्रोऽथ पिङ्गलाख्यश्च कालदंष्ट्री भवेत्ततः ॥ १० ॥
विदुरश्चैव घोरश्च प्राजापत्यो हुताशनः ।
कामरूपी तथा कालः कर्णोऽप्यथ भयानकः ॥ ११ ॥
मतङ्गः पिङ्गलश्चैव हरो वै धातसञ्ज्ञकः ।
शङ्कुकर्णो विधानश्च श्रीकण्ठश्चन्द्रशेखरः ॥ १२ ॥
सद्देतेन च पर्य्यन्ताः कथ्यन्तेऽथ पदान्यपि ।

थापित् ओं अरूप ओं प्रमथ ओं तेजः ओं ज्योतिः ओं पुरुष ओं अग्ने ओं अधूम ओं अभस्म ओं अनादि ओं नाना ओं धूधू ओं भूः ओं भुवः ओं स्वः अनिधन निधनोद्भव शिव शर्व परमात्मन् महेश्वर महादेव सद्भावेश्वर महातेजः योगाधिपतये मुञ्च प्रथम सर्वं सर्वसर्वेति द्वात्रिंशत् पदानि ।

बीजभावे मयो मन्त्रा वामदेवः शिवः शिखा ॥ १३ ॥
गान्धारी च सुषुम्णा च नाड्यौ द्वौ मारुतौ तथा ।
समानोदाननामानौ रसनापायुरिन्द्रिये ॥ १४ ॥
रसस्तु विषयो रूपशब्दस्पर्शरसा गुणाः ।
मण्डलं वर्त्तुलं तच्च पुण्डरीकाङ्कितं सितं ॥ १५ ॥
स्वप्नावस्थाप्रतिष्ठायां कारणं गरुडध्वजं ।
प्रतिष्ठान्तर्गतं सर्वं सञ्चिन्त्य भुवनादिकं ॥ १६ ॥
सूत्रं देहे समन्वेष्य प्रविश्यैनां वियोजयेत् ।

ओं ह्रां ह्रीं ह्रां प्रतिष्ठाकलापाशाय ओं फट् स्वाहान्तेनानेनैव पूरकेणाङ्कुशमुद्रया समाकर्षेत् ततः ओं ह्रां ह्रूं ह्रां ह्रूं(१) प्रतिष्ठा कलापाशाय ह्रूं फडित्यनेन संहारमुद्रया कुम्भकेन हृदयादधो नाडी-

---

१ ओं ह्रींह्रं ह्रां ह्रूं इति ख, चिह्नितपुस्तकपाठः ।

सूत्रादादाय ओं हां क्ष्रूं क्रां हां(१) प्रतिष्ठाकलापाशाय नम इत्यनेनो-द्भवमुद्रया रेचकेन कुम्भे समारोपयेत् ओं हां क्षीं प्रतिष्ठाकलापाशाय नम इत्यनेनार्घयित्वा सम्पूज्य स्वाहान्तेनाहुतीनां त्रयेण सन्निधाय ततः ओं हां विष्णवे नम इति विष्णुमावाह्य सम्पूज्य सन्तर्प्य

विष्णो तवाधिकारेऽस्मिन् मुमुक्षुं दीक्षयाम्यहं ॥ १७ ॥
भाव्यं त्वयानुकूलेन विष्णुं विज्ञापयेदिति ।
ततो वागीश्वरीं देवीं वागीशमपि पूर्ववत् ॥ १८ ॥
आवाह्याभ्यर्च्य सन्तर्प्य शिष्यं वक्षसि ताडयेत् ।
ओं हां हां हं फट्(२) ।
प्रविशेदप्यनेनैव चैतन्यं विभजेत्ततः ॥ १९ ॥
शस्त्रेण पाशसंयुक्तं ज्येष्ठयाऽङ्कुशमुद्रया ।
ओं हां हं हों क्रूं फट्(३) ।
स्वाहान्तेन हृदाकृष्य तेनैव पुटितात्मना ॥ २० ॥
गृहीत्वा तं नमोऽन्तेन निजात्मनि नियोजयेत्(४) ।
ओं हां हं हों(५) आत्मने नमः ।
पूर्ववत् पितृसंयोगं भावयित्वोद्भवाख्यया(६) ॥ २१ ॥
वामया तदनेनैव देवीगर्भे विनिक्षिपेत् ।
ओं हां हं हां आत्मने नमः ।
देहोत्पत्तौ हृदा ह्येवं शिरसा जन्मना तथा ॥ २२ ॥

---

१ ओं हूं स्त्रां हां इति ख, चिह्नितपुस्तकपाठः ।
२ ओं हां हं हां हः फट् इति ख, ङ, चिह्नितपुस्तकद्वयपाठः ।
३ ओं हां हं हां हूं फट् इति ङ, चिह्नितपुस्तकपाठः ।
४ निवेशयेदिति ख, चिह्नितपुस्तकपाठः ।
५ ओं हां हं हां इति ख, ङ, चिह्नितपुस्तकपाठः ।
६ भावयेत्वा तु दक्षयेति ख, चिह्नितपुस्तकपाठः ।

शिखया वाधिकाराय भोगाय कवचाणुना ।
तत्त्वशुद्धौ हृदा ह्येवं गर्भाधानाय पूर्ववत् ॥ २३ ॥
शिरसा पाशशैथिल्ये निष्कृत्यैवं शतं जपेत् ।
एवं पाशवियोगेऽपि ततः शस्त्रात्मजप्तया ॥ २४ ॥
छिन्द्यादस्त्रेण कर्त्तर्य्या कलावीजवता यथा ।
ओं क्ष्रौं प्रतिष्ठाकलापाशाय हः फट् ।
विसृज्य वर्त्तुलीकृत्य(१) पाशमस्त्रेण पूर्ववत् ॥ २५ ॥
घृतपूर्णे स्रुवे दत्वा कलास्त्रेणैव होमयेत् ।
अस्त्रेण जुहुयात् पञ्च पाशाङ्कुरनिवृत्तये ॥ २६ ॥
प्रायश्चित्तनिषेधार्थं दद्यादष्टाहुतीस्ततः ।
ओं हः अस्त्राय क्रूं फट् ।
हृदावाह्य हृषीकेशं कृत्वा पूजनतर्पणे ॥ २७ ॥
पूर्व्वोक्तविधिना कुर्य्यादधिकारसमर्पणं ।
ओं हां रसशुल्कं गृहाण स्वाहा ।
निःशेषदग्धपाशस्य पशोरस्य हरे त्वया ॥ २८ ॥
न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति ।
ततो विसृज्य गोविन्दं विद्यात्मानं नियोज्य च ॥ २९ ॥
वाङ्मुक्तार्द्धदृश्येन चन्द्रविम्बेन सन्निभं ।
संहारमुद्रया स्वस्थं(२) विधायोद्भवमुद्रया ॥ ३० ॥
सूत्रे संयोज्य विन्यस्य तोयविन्दुं यथा पुरा ।
विसृज्य पितरौ वह्नेः पूजितौ कुसुमादिभिः ।

---

१ वर्त्तुलीकृत्येति ख चिह्नितपुस्तकपाठः ।
२ संहारमुद्रया स्वस्थं इति ख, चिह्नितपुस्तकपाठः ।

इद्यात् पूर्णां विधानेन प्रतिष्ठाऽपि विशोधिता ॥ ११ ॥

इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षायां प्रतिष्ठाकलाशोधनं नाम पञ्चाशीतितमोऽध्यायः ॥

---

## अथ षडशीतितमोऽध्यायः।

### विद्याविशोधनविधानं।

ईश्वर उवाच। सन्धानमथ विद्यायाः प्राचीनकलया सह।
कुर्वीत पूर्ववत् ज्ञात्वा (१) तत्त्वं वर्णांश तद्यथा ॥ १ ॥

ओं ह्रीं ह्रौमिति सन्धानं।

रागश्च शुद्धविद्या च नियतिः कलया सह।
कालो माया तथाऽविद्या तत्त्वानामिति सप्तकं ॥ २ ॥

रलवाः शषसाः वर्णाः षड् विद्यायां प्रकीर्त्तिताः।
पदानि प्रणवादीनि एकविंशतिसङ्ख्यया ॥ ३ ॥

ओं नमः शिवाय सर्वप्रभवे हं शिवाय(२) ईशानमूर्द्धाय तत्पुरुषवक्त्राय अघोरहृदयाय वामदेवगुह्याय(३) सद्योजातमूर्त्तये(४) ओं नमो नमो गुह्यातिगुह्याय गोप्त्रे अनिधनाय सर्वाधिपाय(५) ज्योतीरूपाय परमेश्वराय भावेन ओं व्योम।

---

१ पूर्ववत् धृत्वेति ख, चिह्नितपुस्तकपाठः।

२ हं शिवाय इति ख, चिह्नितपुस्तकपाठः।

३ अघोरगुह्याय इति ख, चिह्नितपुस्तकपाठः।

४ सद्योजाताय मूर्त्तये इति ख, चिह्नितपुस्तकपाठः।

५ च्य निधाय सर्वाधिपतय इति ख, चिह्नितपुस्तकपाठः।

षोडशानां भुवनानाञ्च स्वरूपमथ कथ्यते ।
प्रथमो वामदेवः स्यात्ततः सर्वभवोद्भवः ॥ ४ ॥
वज्रदेवः प्रभुर्द्धाता क्रमविक्रमसुप्रभाः ।
वटुः(१) प्रशान्तनामा च परमाक्षरसञ्ज्ञकः ॥ ५ ॥
शिवश्च सशिवो बभ्रुरक्षयः शम्भुरेव च ।
अदृष्टरूपनामानौ तथाऽन्यो रूपवर्द्धनः ॥ ६ ॥
मनोन्मनो महावीर्य्यश्चित्राङ्गस्तदनन्तरं ।
कल्याण इति विज्ञेयाः पञ्चविंशतिसङ्ख्यया ॥ ७ ॥
मन्त्रौ घोरामरौ वीजे नाड्यौ द्वे तत्र ते यथा ।
पूषा च हस्तिजिह्वा च व्याननागौ प्रभञ्जनौ ॥ ८ ॥
विषयो रूपमेवैकमिन्द्रिये पादचक्षुषी ।
शब्दः स्पर्शश्च रूपञ्च त्रय एते गुणाः स्मृताः ॥ ९ ॥
अवस्थाऽत्र सुषुप्तिश्च रुद्रो देवस्तु कारणं ।
विद्यामध्यगतं सर्वं भावयेद्भुवनादिकं ॥ १० ॥
ताडनं छेदनं तत्र प्रवेशश्चापि योजनं ।
आकृष्य ग्रहणं कुर्य्याद्विद्यया हृत्प्रदेशतः ॥ ११ ॥
आत्मन्यारोप्य सङ्गृह्य कलां कुण्डे निवेशयेत् ।
रुद्रं कारणमावाह्य विज्ञाप्य च शिशुं प्रति ॥ १२ ॥
पित्रोरावाहनं कृत्वा(२) हृदये ताडयेच्छिशुं ।
प्रविश्य पूर्वमन्त्रेण तदात्मनि नियोजयेत् ॥ १३ ॥
आकृष्यादाय पूर्वोक्तविधिनाऽऽत्मनि योजयेत् ।
वामया योजयेद् योनौ गृहीत्वा द्वादशान्ततः ॥ १४ ॥

---

१ वुद्ध इति घ, ङ, चिह्नितपुस्तकपाठः ।
२ आवाहनं कुर्य्यादिति ग, घ, चिह्नितपुस्तकपाठः ।

कुर्व्वीत देहसम्पत्तिं जन्माधिकारमेव च।
भोगं लयन्तथा स्रोतःशुद्धितत्त्वविशोधनं ॥ १५ ॥
निःशेषमलकर्म्मादिपाशबन्धनिवृत्तये।
निष्कृष्टैव विधानेन यजेत शतमाहुतीः ॥ १६ ॥
वस्त्रेण पाशशैथिल्यं भवशक्तिं तिरोहितां।
छेदनं मर्द्दनं तेषां वर्त्तुलीकरणं तथा(१) ॥ १७ ॥
दाहं तदचराभावं प्रायश्चित्तमथोदितं।
शरास्त्रावाहनं पूजा रूपगन्धसमर्पणं ॥ १८ ॥
ओं ह्रीं रूपगन्धौ शुल्कं वह शराय स्वाहा।
संश्राव्य शाम्भवीमाज्ञां वरं विसृज्य कारणं।
विधायात्मनि चैतन्यं पाशसूत्रे निवेशयेत् ॥ १९ ॥
विन्दुं शिरसि विन्यस्य विसृजेत् पितरौ ततः।
दद्यात् पूर्णां विधानेन समस्तविधिपूरणीं ॥ २० ॥
पूर्वोक्तविधिना कार्य्यं विद्यायां ताडनादिकं।
स्वबीजन्तु विशेषः स्यादिति विद्या विशोधिता ॥ २१ ॥

इत्यादिमहापुराणे आग्नेये निर्व्वाणदीक्षायां विद्याशोधनं नाम षडशीतितमोऽध्यायः ॥

---

## अथ सप्ताशीतितमोऽध्यायः।

### शान्तिशोधनकथनं।

ईश्वर उवाच। सन्दध्यादधुना विद्यां शान्त्या सार्द्धं यथाविधि।
शान्तौ तत्त्वद्वयं लीनं भावेश्वरसदाशिवौ ॥ १ ॥

---

१ छेदनं भेदनं तेषां वस्त्रीकरणमथा इति ग,चिह्नितपुस्तकपाठः ।

ऋकारश्च ऋकारश्च द्वौ वर्णौ परिकीर्त्तितौ ।
रुद्राः समाननामानो भुवनैः सह तद्यथा ॥ २ ॥
प्रभवः सम्यः क्षुद्रो विमलः शिव इत्यपि ।
घनौ निरञ्जनाकारौ स्वशिवौ दीप्तिकारणौ ॥ ३ ॥
त्रिदशेश्वरनामा च त्रिदशः कालसञ्ज्ञकः ।
सूक्ष्माम्बुजेश्वरश्चेति (१) रुद्राः शान्तौ प्रतिष्ठिताः ॥ ४ ॥

व्योमव्यापिने व्योमव्याप्यरूपाय (२) सर्वव्यापिने शिवाय अनन्ताय अनाथाय अनाश्रिताय ध्रुवाय शाश्वताय योगपीठसंस्थिताय नित्ययोगिने ध्यानाहारायेति (३) द्वादशपदानि ।

पुरुषः कवची मन्त्रौ वीजे विन्दूपकारकौ ।
अलम्बुषायसानाड्यौ वायू कृकरकूर्म्मकौ ॥ ५ ॥
इन्द्रिये त्वक्करावस्या स्पर्शस्तु विषयो मतः ।
गुणौ स्पर्शनिनादौ द्वावेकः कारणमीश्वरः ॥ ६ ॥
तुर्य्यावस्थेति शान्तिस्थं सम्भाव्य भुवनादिकं ।
विदध्यात्ताडनं भेदं प्रवेशञ्च वियोजनं ॥ ७ ॥
आकृष्य ग्रहणं कुर्य्याच्छान्तेर्वदनसूत्रतः ।
आत्मन्यारोप्य सङ्गृह्य कलां कुण्डे निवेशयेत् ॥ ८ ॥
ईश तवाधिकारेऽस्मिन् मुमुक्षुं दीक्षयाम्यहं ।
भाव्यं त्वयाऽनुकूलेन (४) कुर्य्यात् विज्ञापनामिति ॥ ९ ॥
आवाहनादिकं पित्रोः शिष्यस्य ताडनादिकं ।

---

१ सूक्ष्मासूक्ष्मेश्वरश्चैव इति ग, चिह्नितपुस्तकपाठः ।

२ व्योमव्यापकरूपाय इति ख, चिह्नितपुस्तकपाठः । व्योमरूपायेति ग, चिह्नितपुस्तकपाठः ।

३ ध्यानपरायेति ख, चिह्नितपुस्तकपाठः । ध्यानाहारायेति ग, चिह्नितपुस्तकपाठः ।

४ भाव्यं त्वया च शुद्धेन इति ग, ङ, चिह्नितपुस्तकपाठः ।

विधायादाय चैतन्यं विधिनाऽऽत्मनि योजयेत् ॥ १० ॥
पूर्ववत् पितृसंयोगं भावयित्वोद्भवाख्यया ।
हृत्सम्पुटात्मबीजेन देवीगर्भे नियोजयेत् ॥ ११ ॥
देहोत्पत्तौ हृदा पञ्च शिरसा जन्महेतवे ।
शिखया वाऽधिकाराय भोगाय कवचाणुना ॥ १२ ॥
लयाय शस्त्रमन्त्रेण स्रोतःशुद्धौ शिवेन च ।
तत्त्वशुद्धौ हृदा ह्येवं गर्भाधानादि पूर्ववत् ॥ १३ ॥
वर्म्मणा पाशशैथिल्यं निष्कृत्यैवं शतं जपेत् ।
मलशक्तितिरोधाने शस्त्रेणाहुतिपञ्चकं ॥ १४ ॥
एवं पाशवियोगेऽपि(१) ततः समास्त्रजप्तया ।
छिन्द्यादस्त्रेण कर्त्तर्य्या पाशान्वीजवता यथा ॥ १५ ॥
ओं ह्रौं(२) शान्तिकलापाशाय हः हूं फट् ।
विसृज्य वर्त्तुलीकृत्य पाशमस्त्रेण पूर्ववत् ।
घृतपूर्णे स्रुवे दत्वा कलास्त्रेणैव होमयेत् ॥ १६ ॥
अस्त्रेण जुहुयात् पञ्च पाशाङ्कुशनिवृत्तये ।
प्रायश्चित्तनिषेधाय दद्यादष्टाहुतीरथ ॥ १७ ॥
ओं हः अस्त्राय हूं फट् ।
हृदेश्वरं समावाह्य कृत्वा पूजनतर्पणे ।
विदधीत विधानेन तस्मै शुल्कसमर्पणं ॥ १८ ॥
ओं हां ईश्वर बुद्ध्यहङ्कारौ शुल्कं गृहाण स्वाहा ।
निःशेषदग्धपाशस्य पशोरस्येश्वर त्वया ।
न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति ॥ १९ ॥

---

१ एवं पाशवियोगार्थमिति ग, घ, चिह्नितपुस्तकपाठः ।

२ ओं हौमिति क, ङ, चिह्नितपुस्तकपाठः । ओं ओमिति ग, चिह्नितपुस्तकपाठः । ओं यैमिति घ, चिह्नितपुस्तकपाठः ।

विसृजेदीश्वरन्देवं रौद्रात्मानं नियोजयेत् ।
इंषचन्द्रमिवात्मानं विधिनाऽऽत्मनि योजयेत् ॥ २० ॥
सूत्रे संयोजयेदेनं शुद्धयोद्भवमुद्रया ।
दद्यात् मूलेन शिष्यस्य शिरस्यमृतविन्दुकं ॥ २१ ॥
विसृज्य पितरौ वह्नेः पूजितौ कुसुमादिभिः ।
दद्यात् पूर्णां विधानज्ञो निःशेषविधिपूरणीं ॥ २२ ॥
अस्यामपि विधातव्यं पूर्ववत्ताडनादिकं ।
स्ववीजन्तु विशेषः स्याच्छुद्धिः शान्तेरपीडिता ॥ २३ ॥

इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षायां शान्तिशोधनं नाम सप्ताशीतितमोऽध्यायः ॥

---

## अथाष्टाशीतितमोऽध्यायः ।

### निर्वाणदीक्षाकथनं ।

ईश्वर उवाच । सन्धानं शान्त्यतीतायाः शान्त्या सार्द्धं विशुद्धया ।
कुर्वीत पूर्ववत्तत्र तत्त्ववर्णादि तद् यथा ॥ १ ॥
ओं हीं क्षौं हौं हां इति सन्धानानि ।
उभौ शक्तिशिवौ तत्त्वे भुवनाष्टकसिद्धिकं ।
दीपकं रोचिकञ्चैव मोचकं चोर्द्धगामि च ॥ २ ॥
व्योमरूपमनाथञ्च स्यादनाश्रितमष्टमं ।
ओङ्कारपदमीशाने मन्त्रौ वर्णाश्च षोडश ॥ ३ ॥
अकारादिविसर्गान्ता वीजेन देहकारकौ ।
कुहुश्च शङ्खिनी नाड्यौ देवदत्तधनञ्जयौ ॥ ४ ॥
मारुतौ स्पर्शनं श्रोत्रं इन्द्रिये विषयो नभः ।

शब्दो गुणोऽस्यावस्था तु तुर्य्यातीता तु पञ्चमी ॥ ५ ॥
हेतुः सदाशिवो देव इति तत्त्वादिसञ्चयं ।
सञ्चिन्त्य शान्त्यतीताख्यं विदध्यात्ताडनादिकं ॥ ६ ॥
कलापाशं समाताड्य फडन्तेन विभिद्य च ।
प्रविश्यान्तर्नमोऽन्तेन फडन्तेन वियोजयेत् ॥ ७ ॥
शिखाहृत्सम्पुटीभूतं स्वाहान्तं सृणिमुद्रया ।
पूरकेण समाकृष्य पाशं मस्तकसूत्रतः ॥ ८ ॥
कुम्भकेन समादाय रेचकेनोद्भवाख्यया ।
हृत्सम्पुटनमोऽन्तेन वह्निं कुण्डे निवेशयेत् ॥ ९ ॥
अस्याः पूजादिकं सर्वं निवृत्तेरिव साधयेत् ।
सदाशिवं समावाह्य पूजयित्वा प्रतर्प्य च ॥ १० ॥
सदा ख्यातेऽधिकारेऽस्मिन् मुमुक्षुं दीक्षयाम्यहं ।
भाव्यं त्वयाऽनुकूलेन भक्त्या विज्ञापयेदिति ॥ ११ ॥
पित्रोरावाहनं पूजां कृत्वा तर्पणसन्निधौ ।
हृत्सम्पुटात्मबीजेन शिष्यं वक्षसि ताडयेत् ॥ १२ ॥
ओं हां हूं हं फट् ।
प्रविश्याप्यनेनैव चैतन्यं विभजेत्ततः ।
शस्त्रेण पाशसंयुक्तं ज्येष्ठयाऽङ्कुशमुद्रया ॥ १३ ॥
ओं हां हः हूं फट्(१) ।
स्वाहान्तेन तदाकृष्य तेनैव पुटितात्मना ।
गृहीत्वा तन्नमोऽन्तेन निजात्मनि नियोजयेत् ॥ १४ ॥
ओं हां हं हीं आत्मने नमः(२) ।

---

१ ओं हां ऊं हः फट् इति ख, चिह्नितपुस्तकपाठः ।
२ ओं हां हं ह्रीमात्मने नम इति ख, चिह्नितपुस्तकपाठः ।

पूर्ववत् पितृसंयोगं भावयित्वोद्भवाख्यया ।
वामया तदनेनैव(१) देव्या गर्भे नियोजयेत् ॥ १५ ॥
गर्भाधानादिकं सर्वं पूर्वोक्तविधिना चरेत् ।
मूलेन पाशशैथिल्ये निष्कृत्यैव शतं जपेत् ॥ १६ ॥
मलशक्तितिरोधाने पाशानाञ्च वियोजने ।
पञ्चपञ्चाहुतीर्दद्यादायुधेन यथा पुरा ॥ १७ ॥
पाशानायुधमन्त्रेण सप्तवाराभिजप्तया ।
छिन्द्यादस्त्रेण कर्त्तर्य्या कलाबीजयुजा यथा ॥ १८ ॥
ओं हां शान्त्यतीतकलापाशाय हः हूं फट् ।
विसृज्य वर्त्तुलीकृत्य पाशानस्त्रेण पूर्ववत् ।
घृतपूर्णे स्रुवे दत्वा कलास्त्रेणैव होमयेत् ॥ १९ ॥
अस्त्रेण जुहुयात् पञ्च पाशाङ्कुशनिवृत्तये ।
प्रायश्चित्तनिषेधार्थं दद्यादष्टाहुतीस्ततः ॥ २० ॥
सदाशिवं हृदावाह्य कृत्वा पूजनतर्पणे ।
पूर्वोक्तविधिना कुर्य्यादधिकारसमर्पणं ॥ २१ ॥
ओं हां सदाशिव मनोबिन्दुं शुल्कं गृहाण स्वाहा ।
निःशेषदग्धपाशाय पशोरस्य सदाशिव ।
बन्धाय न त्वया स्थेयं शिवाज्ञां श्रावयेदिति ॥ २२ ॥
मूलेन जुहुयात् पूर्णां विसृजेत्तु सदाशिवं ।
ततो विशुद्धमात्मानं शरच्चन्द्रमिवोदितं ॥ २३ ॥
संहारमुद्रया रौद्र्या संयोज्य गुरुरात्मनि ।
कुर्वीत शिष्यदेहस्थमुद्धृत्योद्भवमुद्रया ॥ २४ ॥
दद्यादाप्यायनायास्य मस्तकेऽर्घ्याम्बुबिन्दुकं ।
क्षमयित्वा महाभक्त्या पितरौ विसृजेत्तथा ॥ २५ ॥

१ वामया हृदयेनैवेति ग, चिह्नितपुस्तकपाठः ।

खेदितौ शिष्यदीक्षार्थे यन्मया पितरौ युवां ।
कारुण्यान्मोचयित्वा तद्गच्छतं स्थाननात्मनः ॥ २६ ॥
शिखामन्त्रितकर्त्तर्य्या बोधशक्तिस्वरूपिणीं ।
शिखां छिन्द्याच्छिवास्त्रेण शिष्यस्य चतुरङ्गुलां ॥ २७ ॥
ओं क्लीं शिखायै हूं फट्(१) ओं हः अस्त्राय हूं फट् ।
स्रुचि तां घृतपूर्णायां गोविड्गोलकमध्यगां(२) ।
संविधायास्त्रमन्त्रेण हूंफडन्तेन होमयेत् ॥ २८ ॥
ओं हौं हः अस्त्राय हूं फट् ।
प्रक्षाल्य स्रुक्स्रुवौ शिष्यं संस्नाप्याचम्य च स्वयं ।
योजनिकास्थमात्मानं शस्त्रमन्त्रेण ताडयेत् ॥ २९ ॥
वियोज्याक्षय सम्पूज्य(३) पूर्ववद् द्वादशान्ततः ।
आत्मीयहृदयाम्भोजकर्णिकायां निवेशयेत् ॥ ३० ॥
पूरितं स्रुवमाज्येन विहिताधोमुखस्रुचा ।
नित्योक्तविधिनाऽऽदाय शङ्खसन्निभमुद्रया ॥ ३१ ॥
प्रसारितशिरोग्रीवो नादोच्चारानुसारतः ।
समदृष्टिशिवस्वान्तः परभावसमन्वितः ॥ ३२ ॥
कुम्भमण्डलवह्निभ्यः(४) शिष्यादपि निजात्मनः ।
गृहीत्वा षड्विधाध्वानं स्रुगग्रे प्राणनाडिकं ॥ ३३ ॥
संचिन्त्य विन्दुवद् ध्यात्वा क्रमशः सप्तधा यथा ।
प्रथमं प्राणसंयोगस्वरूपमपरन्ततः ॥ ३४ ॥

---

१ ओं ह्रूं शिखायै ह्रूं फट् इति ख, ङ, चिह्नितपुस्तकपाठः । ओं ह्रीं शिखायै ह्रूं फडिति ग, चिह्नितपुस्तकपाठः ।

२ गोविन्दलोकमध्यगामिति ख, चिह्नितपुस्तकपाठः ।

३ वियोज्याक्षय्य सङ्घट्येति ख, ङ, चिह्नितपुस्तकपाठः ।

४ कुण्डमण्डलवह्निभ्य इति ख, चिह्नितपुस्तकपाठः ।

हृदयादिक्रमोच्चारविलग्नं मन्त्रसञ्ज्ञकं ।
पूरकं कुम्भकं कृत्वा आदाय वदनं मनाक् ॥ ३५ ॥
सुषुम्नानुगतं नादरूपन्तु तृतीयकं ।
सप्तमे कारणे त्यागात्प्रशान्तविखरं त्रयः ॥ ३६ ॥
शक्तिनादोर्द्ध्वसञ्चारस्तच्छक्तिविखरं मतं ।
प्राणस्य निखिलस्यापि शक्तिप्रमेयवर्जितं ॥ ३७ ॥
तत्कालविखरं षष्ठं शक्त्यतीतञ्च सप्तमं ।
तदेतद् योजनास्थानं विखरन्तत्त्वसञ्ज्ञकं ॥ ३८ ॥
पूरकं कुम्भकं कृत्वा आदाय वदनं मनाक् ।
शनैरुदीरयन् मूलं कृत्वा शिष्यात्मनो लयं ॥ ३९ ॥
हकारे तडिदाकारे षडध्वप्राणरूपिणि ।
उकारं परतो नाभेर्वितस्तिं व्याप्य संस्थितं ॥ ४० ॥
ततः परं मकारन्तु हृदयाच्चतुरङ्गुलं ।
ओङ्कारं वाचकं विष्णोस्ततोऽष्टाङ्गुलकण्ठकं ॥ ४१ ॥
चतुरङ्गुलतालुस्थं मकारं रुद्रवाचकं ।
तद्वल्ललाटमध्यस्थं विन्दुमीश्वरवाचकं ॥ ४२ ॥
नादं सदाशिवं देवं ब्रह्मरन्ध्रावसानकं ।
शक्तिं च ब्रह्मरन्ध्रस्थां त्यजन्नित्यमनुक्रमात् ॥ ४३ ॥
दिव्यं पिपीलिकास्पर्शं तस्मिन्नेवानुभूय च ।
द्वादशान्ते परे तत्त्वे परमानन्दलक्षणे ॥ ४४ ॥
भावशून्ये मनोऽतीते शिवे नित्यगुणोदये ।
विलीय मानसे तस्मिन् शिष्यात्मानं विभावयेत् ॥ ४५ ॥
विमुञ्चन् सर्पिषो धारां ज्वालान्तेऽपि परे शिवे ।
योजनिकास्थिरत्वाय वौषडन्तशिवाणुना(१) ॥ ४६ ॥

---

१ वौषडन्तशिवात्मनेति ख, चिह्नितपुस्तकपाठः ।

दत्त्वा पूर्णां विधानेन गुरुपादनमाचरेत् ।

ओं हां आत्मने (१) सर्वज्ञो भव स्वाहा । [ओं हीं आत्मने (२) परितृप्तो भव स्वाहा । ओं हूं आत्मने(३) अनादिबोधो भव स्वाहा । ओं हैं आत्मने(४) स्वतन्त्रो भव स्वाहा । ओं हौं आत्मने(५) अलुप्तशक्तिर्भव स्वाहा । ओं हः आत्मने(६) अनन्तशक्तिर्भव स्वाहा ।

इत्थं षड्गुणमात्मानं गृहीत्वा परमाक्षरात् ॥ ४७ ॥
विधिना भावनोपेतः शिष्यदेहे नियोजयेत् ।
तीव्राणुशक्तिसम्पातजनितश्रमशान्तये ॥ ४८ ॥
शिष्यमूर्द्धनि विन्यस्येदर्घोदमृतबिन्दुकं ।
प्रणमय्य कुम्भादीन् शिवाद्दक्षिणमण्डले(७) ॥ ४९ ॥
सौम्यवक्त्रं व्यवस्थाप्य शिष्यं दक्षिणमात्मनः ।
त्वयैवानुगृहीतोऽयं मूर्त्तिमास्थाय मामकीं ॥ ५० ॥
देवे वह्नौ गुरौ तस्माद्भक्तिं चाप्यस्य वर्द्धय(८) ।
इति विज्ञाप्य देवेशं प्रणम्य च गुरुः स्वयं ॥ ५१ ॥

---

१ ओं हीं आत्मन्निति ख, चिह्नितपुस्तकपाठः । ओं हौं आत्मन्निति घ, चिह्नितपुस्तकपाठः ।

२ ओं हूं आत्मने इति ख, ग, चिह्नितपुस्तकपाठः । ओं हीं आत्मन्निति ङ, चिह्नितपुस्तकपाठः ।

३ ओं हैं आत्मन्निति ख, चिह्नितपुस्तकपाठः । ओं आत्मन्निति ग, घ, चिह्नितपुस्तकपाठः ।

४ ओं हैं आत्मन्निति ख, चिह्नितपुस्तकपाठः । ओं हुं आत्मन्निति ग, चिह्नितपुस्तकपाठः । ओं हौं आत्मन्निति घ, ङ, चिह्नितपुस्तकपाठः ।

५ ओं हैं आत्मन्निति ख, चिह्नितपुस्तकपाठः ।

६ ओं हः आत्मन्निति ख, ङ, चिह्नितपुस्तकपाठः ।

७ शिवद्दक्षिणमण्डले इति ग, चिह्नितपुस्तकपाठः ।

८ भक्तिं मायास्य वर्द्धयेति ख, ङ, चिह्नितपुस्तकपाठः ।

श्रेयस्तवास्त्विति ब्रूयादाशिषं शिष्यमादरात्।
ततः परमया भक्त्या दत्वा देवऽष्टपुष्पिकां।
पुत्रकं शिवकुम्भेन संस्नाप्य विसृजेन्मखं॥ ५२॥

इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षासमापनं नाम
अष्टाशीतितमोऽध्यायः॥

---

## अथोननवतितमोऽध्यायः।

### एकतत्त्वदीक्षाकथनं।

ईश्वर उवाच। अथैकतात्त्विकी दीक्षा लघुत्वादुपदिश्यते।
सूत्रबन्धादि कुर्व्वीत यथायोगं निजात्मना॥ १॥
कालाग्न्यादिशिवान्तानि तत्त्वानि परिभावयेत्।
समतत्त्वे समग्राणि सूत्रे मणिगणानिव॥ २॥
आवाह्य शिवतत्त्वादि गर्भाधानादि पूर्ववत्।
मूलेन किन्तु कुर्व्वीत सर्व्वशुल्कसमर्पणं॥ ३॥
प्रदद्दीत ततः पूर्णां तत्त्वव्रातोपगर्भितां।
एकयैव यया शिष्यो निर्व्वाणमधिगच्छति॥ ४॥
योजनायै शिवे चान्यां स्थिरत्वापादनाय च।
दत्वा पूर्णां प्रकुर्वीत शिवकुम्भाभिषेचनं॥ ५॥

इत्यादिमहापुराणे आग्नेये एकतत्त्वदीक्षाकथनं नाम
ऊननवतितमोऽध्यायः।

---

# अथ नवतितमोऽध्यायः।

## अभिषेकादिकथनं।

ईश्वर उवाच। शिवमभ्यर्च्चाभिषेकं कुर्य्याच्छिष्यादिके श्रिये।
कुम्भानीशादिकाष्ठासु क्रमशो नव विन्यसेत् ॥ १ ॥
तेषु क्षारोदं क्षीरोदं दध्युदं घृतसागरं।
इक्षुकादम्बरीस्वादुमस्तूदानष्टसागरान्(१) ॥ २ ॥
निवेशयेद् यथासङ्ख्यमष्टौ विद्येश्वरानथ।
एकं शिखण्डिनं रुद्रं श्रीकण्ठन्तु द्वितीयकं ॥ ३ ॥
त्रिमूर्त्तमेकरुद्राक्षमेकनेत्रं शिवोत्तमं।
सप्तमं सूक्ष्मनामानमनन्तं रुद्रमष्टमं ॥ ४ ॥
मध्ये शिवं समुद्रञ्च शिवमन्त्रं च विन्यसेत्।
यागालयाद् दिशीशस्य रचिते स्नानमण्डपे ॥ ५ ॥
कुर्य्यात् करद्वयायामां वेदीमष्टाङ्गुलोच्छ्रितां।
श्रीपर्णाद्यासने तत्र विन्यस्यानन्तमानसं ॥ ६ ॥
शिष्यं निवेश्य पूर्वास्यं सकलीकृत्य पूजयेत्।
काञ्जिकौदनमृद्भस्मदूर्वागोमयगोलकैः ॥ ७ ॥
सिद्धार्थदधितोयैश्च कुर्य्यान्निर्म्मञ्छनं ततः।
क्षारोदानुक्रमेणाथ हृदा विद्येशशम्बरैः ॥ ८ ॥
कलसैः स्नापयेच्छिष्यं स्वधाधारणयान्वितं।
परिधाप्य सिते वस्त्रे निवेश्य शिवदक्षिणे ॥ ९ ॥
पूर्व्वोदितासने शिष्यं पुनः पूर्ववदर्च्चयेत्।
उष्णीषं यौगपट्टञ्च मुकुटं कर्त्तरीं घटीं ॥ १० ॥
अक्षमालां पुस्तकादि शिविकाद्यधिकारकं।

१ स्वादुगर्भोदानष्टसागरानिति क, ख, चिह्नितपुस्तकपाठः।

दीक्षाव्याख्याप्रतिष्ठायं ज्ञात्वाऽद्यप्रभृति त्वया ॥ ११ ॥
सुपरीक्ष्य(१) विधातव्यमाज्ञां संश्रावयेदिति ।
अभिवाद्य ततः शिष्यं प्रणिपत्य महेश्वरं ॥ १२ ॥
विघ्नज्वालापनोदार्थं कुर्य्याद्विज्ञापनां यथा ।
अभिषेकार्थमादिष्टस्त्वयाऽहं गुरुमूर्त्तिना ॥ १३ ॥
संहितापारगः सोऽयमभिषिक्तो मया शिव ।
तस्मै मन्त्रचयस्य पञ्चपञ्चाकृतीर्यजेत् ॥ १४ ॥
दद्यात् पूर्णां ततः शिष्यं स्थापयेन्निजदक्षिणे ।
शिष्यदक्षिणपाणिस्था अङ्गुष्ठाद्यङ्गुलीः क्रमात् ॥ १५ ॥
लाञ्छयेदुपबद्धाय दग्धदर्भाग्रशम्बरैः ।
कुसुमानि करे दत्वा प्रणामं कारयेदमुं ॥ १६ ॥
कुम्भेऽनले शिवे स्वस्मिं स्ततस्तत्कृत्यमाविशेत् ।
अनुग्राह्यास्त्वया शिष्याः शास्त्रेण सुपरीक्षिताः ॥ १७ ॥
भूपवन्मानवादीनामभिषेकादभीप्सितं ।
आं श्रां श्रौं पशुं हूं फडिति अस्त्रराजाभिषेकतः ॥ १८ ॥

इत्यादिमहापुराणे आग्नेये अभिषेकादिकथनं नाम नवतितमोऽध्यायः ॥

---

## अथैकनवतितमोऽध्यायः ।

### विविधमन्त्रादिकथनं ।

ईश्वर उवाच । अभिषिक्तः शिवं विष्णुं पूजयेद्भास्करादिकान् ।
शङ्खभेर्य्यादिनिर्घोषैः स्नापयेत् पञ्चगव्यकैः ॥ १ ॥

---

१ स्वयं वोध्येति ग, चिह्नितपुस्तकपाठः ।

यो देवान्देवलोकं स याति स्वकुलमुद्धरन् ।
वधकोटिसहस्रेषु यत् पापं समुपार्ज्जितं ॥ २ ॥
घृताभ्यङ्गेन देवानां भस्मीभवति पावके ।
आढकेन घृताद्यैश्च देवान् स्नाप्य सुरो भवेत् ॥ ३ ॥
चन्दनेनानुलिप्याथ गन्धाद्यैः पूजयेत्तथा ।
अल्पायासैन स्तुतिभि स्तुता देवास्तु सर्वदा ॥ ४ ॥
अतीतानागतज्ञानमन्त्रधोभुक्तिमुक्तिदाः ।
गृहीत्वा प्रश्नसूत्राणि हृते दाभ्यां शुभाशुभं ॥ ५ ॥
त्रिभिर्जीवो मूलधातुश्चतुर्भिर्ब्राह्मणादिधीः ।
पञ्चादौ भूततत्त्वादि षडिमे चैवं जपादिकं ॥ ६ ॥
एकत्रिकातित्रिकान्ते पदे द्विपमकान्तके ।
अशुभं मध्यमं मध्येष्विन्द्रस्त्रिषु न्टपः शुभः ॥ ७ ॥
सङ्ख्यावृन्दे जीविताब्दं यमोऽब्ददशहा ध्रुवं ।
सूर्य्यभास्येशदुर्गाश्रीविष्णुमन्त्रैर्लिखेत् कजे ॥ ८ ॥
कठिन्या जप्तया स्पृष्टे गोमूत्राकृतिरेखया ।
आरभ्यैकं त्रिकं यावत्त्रिचतुष्कावसानकं ॥ ९ ॥
मत्स्य् ओम मन्त्रबीजैश्चतुःषष्टिपदे तथा ।
अक्षाणां पतनात् स्पर्शादिषमादौ शुभादिकं ॥ १० ॥
एकत्रिकादिमारभ्य अन्ते चाष्टत्रिकं तथा ।
ध्वजाद्यायाः समा हीना विषमाः शोभनादिदाः(१) ॥ ११ ॥
आद्यपल्लवितैः काद्यैः षोडशस्वरपूर्व्वगैः ।
आद्यैस्तैः सस्वरैः काद्यैस्त्रिपुरानाममन्त्रकाः ॥ १२ ॥
ह्रीं वीजाः प्रणवाद्याःस्युर्नमोऽन्ता यत्र पूजने ।
मन्त्रा विंशतिसाहस्राः शतं षष्ठ्यधिकं ततः ॥ १३ ॥

१ शोभनादिकाः इति क, चिह्नितपुस्तकपाठः ।

आं श्रीं मन्त्राः सरस्वत्याश्चण्डिकायास्तथैव च ।
तथा गौर्य्याश्च दुर्गाया आं श्रीं मन्त्राः श्रियस्तथा ॥ १४ ॥
तथाक्ष्णौं क्षौं मन्त्राः सूर्य्यस्य(१) आं क्षौं मन्त्राः शिवस्य च ।
आं गं मन्त्रा गणेशस्य आं मन्त्राश्च तथा हरेः ॥ १५ ॥
शताद्यैः कादिकैः काद्यैस्तथा षोडशभिः स्वरैः ।
काद्यैस्तैः सस्वरैराद्यैः कान्तैर्मन्त्रास्तथाखिलाः ॥ १६ ॥
रवीशदेवीविष्णूनां खाग्निदेवेन्द्रवर्त्तनात् ।
शतत्रयं षष्ठ्यधिकं प्रत्येकं मण्डलं क्रमात् ।
अभिषिक्तो जपेद् ध्यायेच्छिष्यादीन् दीक्षयेद् गुरुः ॥ १७ ॥

इत्यादिमहापुराणे आग्नेये नानामन्त्रादिकथनं नाम
एकनवतितमोऽध्यायः ॥

---

## अथ द्विनवतितमोऽध्यायः ।

### प्रतिष्ठाविधिकथनं ।

ईश्वर उवाच । प्रतिष्ठां सम्प्रवक्ष्यामि क्रमात् सङ्क्षेपतो गुह ।
पीठं शक्तिं शिवो लिङ्गं तद्योगः सा शिवाणुभिः ॥ १ ॥
प्रतिष्ठायाः पञ्च भेदास्तेषां रूपं वदामि ते ।
यत्र ब्रह्मशिलायोगः सा प्रतिष्ठा विशेषतः ॥ २ ॥
स्थापनन्तु यथायोगं पीठ एव निवेशनं ।
प्रतिष्ठाभिन्नपीठस्य स्थितस्थापनमुच्यते ॥ ३ ॥
उत्थापनञ्च सा प्रोक्ता लिङ्गोद्धारपुरःसरा ।
यस्यां तु लिङ्गमारोप्य संस्कारः क्रियते बुधैः ॥ ४ ॥

---

१ तथा क्षौं ह्रौं मन्त्राः सूर्य्यस्येति ग, घ, चिह्नितपुस्तकपाठः ।

आस्थापनं तदुद्दिष्टं द्विधा विष्ण्वादिकस्य च(१) ।
आसु सर्व्वासु चैतन्यं नियुञ्जीत परं शिवम् ॥ ५ ॥
यदाधारादिभेदेन(२) प्रासादेष्वपि पञ्चधा ।
परीक्षामथ मेदिन्याः कुर्य्यात्प्रासादकाम्यया ॥ ६ ॥
शुक्लाज्यगन्धा रक्ता च रक्तगन्धा सुगन्धिनी(३) ।
पीता कृष्णा सुरागन्धा विप्रादीनां मही क्रमात् ॥ ७ ॥
पूर्व्वेशोत्तरसर्वत्र पूर्वा चैषां विशिष्यते(४) ।
आखाते हास्तिके यस्याः पूर्णे मृदधिका भवेत् ॥ ८ ॥
उत्तमान्तां महीं विद्यात्तोयाद्यैर्वा समुच्छितां ।
अस्थ्यङ्गारादिभिर्दुष्टामत्यन्तं शोधयेद् गुरुः(५) ॥ ९ ॥
नगरग्रामदुर्गार्थं गृहप्रासादकारणं(६) ।
खननैर्गोकुलावासैः कर्षणैर्वा मुहुर्मुहुः ॥ १० ॥
मण्डपे द्वारपूजादि मन्त्रतृप्त्यवसानकं(७) ।
कर्म्म निर्वर्त्याघोरास्त्रं सहस्रं(८) विधिना यजेत् ॥ ११ ॥
समीक्ष्य योपलिप्तायां भूमौ संशोधयेद्दिशः ।
स्वर्णदध्यक्षतै रेखाः प्रकुर्वीत(९) प्रदक्षिणं ॥ १२ ॥
मध्यादीशानकोष्ठस्थे पूर्णकुम्भे(१०) शिवं यजेत् ।
वास्तुमभ्यर्च्य तत्तोयैः सिञ्चेत् कुद्दालकादिकं ॥ १३ ॥

१ उत्थापनमित्यादिः, विष्ण्वादिकस्येत्यन्तः सार्द्धश्लोकात्मकपाठो ग० पुस्तके नास्ति ।

२ यथाधाराभिभेदेनेति ग० ।

३ रक्तगन्धानुगन्धिनीति ख० ।

४ प्रशस्यते इति घ० ।

५ शोधयेद्भुवमिति घ० ।

६ नगरग्रामेत्यर्द्धश्लोको घ० पुस्तके नास्ति ।

७ मन्त्रदीप्त्यवसानकमिति ग० । मन्त्रभूम्यवसानकमिति घ० ।

८ निर्वर्त्य घोरास्त्रं महास्त्रमिति ग० ।

९ रेखां प्रकुर्वीतेति ख०, ग० च ।

१० स्वर्णकुण्डे इति ग० । स्वर्णकुम्भे इति घ०, ङ०, च ।

प्राच्यं रक्षोगणानिष्ट्वा विधिना दिग्बलिं क्षिपेत् ।
भूमिं संसिच्य संस्नाप्य(१) कुद्दालाद्यं(२) प्रपूजयेत् ॥ १४॥
अन्यं वस्त्रयुगच्छन्नं कुम्भं स्कन्धे द्विजन्मनः ।
निधाय गीतवाद्यादिब्रह्मघोषसमाकुलं ॥ १५ ॥
पूजां कुम्भे समाहृत्य प्राप्ते त्वग्नेऽग्निकोष्ठके ।
कुद्दालेनाभिषिक्तेन मध्वक्तेन तु खानयेत् ॥ १६ ॥
नैर्ऋत्यां क्षेपयेन्मृत्स्नां खाते कुम्भजलं क्षिपेत् ।
पुरस्य पूर्व्वसीमान्तं(३) नयेद् यावदभीप्सितं ॥ १७ ॥
अथ तत्र क्षणं स्थित्वा भ्रामयेत्(४) परितः पुरं ।
सिञ्चन् सीमान्तचिह्नानि यावदीशानगोचरं ॥ १८ ॥
अर्घ्यदानमिदं प्रोक्तं तत्र कुम्भपरिभ्रमात् ।
इत्थं परिग्रहं भूमेः कुर्व्वीत तदनन्तरं ॥ १९ ॥
कर्करान्तं जलान्तं वा शल्यदोषजिघांसया ।
खानयेद् भूः कुमारी चेद् विधिना शल्यमुद्धरेत् ॥ २० ॥
अकचटतपयशहान् मानवश्चेत् प्रश्नाक्षराणि तु (५) ।
अग्नेर्ध्वजादिपतिताः स्वस्थाने शल्यमाख्यान्ति ॥ २१ ॥
कर्त्तुः स्वाङ्गविकारेण जानीयात्तत्प्रमाणतः ।
पश्वादीनां प्रवेशेन कीर्त्तनैर्विरुतैर्दिशः ॥ २२ ॥
मातृकामष्टवर्गाढ्यां फलके भुवि वा लिखेत् ।
शल्यज्ञानं वर्गवशात् पूर्वादीशान्ततः(६) क्रमात् ॥ २३ ॥
अवर्गे चैव लोहन्तु कवर्गेऽङ्गारमग्नितः ।

---

१ भूमिं संसिच्य संस्थाप्येति ग०, घ०, ङ० च।
२ कुद्दालाद्यमिति ग० ।
३ पूर्वसीमान्तमिति ख० ।
४ स्रावयेत् इति ख० ।
५ नव चेत् प्रश्नाक्षराणि भाषको इति ग०, घ० ङ० ।
६ पूर्वादीनां तत इति ख० ।

चवर्गे भस्म दद्यो स्याट् टवर्गेऽस्थि च नैरृते ॥ २४ ॥
तवर्गे चेष्टका वाय्ये कपालञ्च पवर्गके।
यवर्गे शवकीटादि शवर्गे लोहमादिशेत् ॥ २५ ॥
हवर्गे रजतं तद्वदवर्गांश्चानर्थकरानपि।
प्रोच्यास्त्रभिः करापूरैरष्टाङ्गुलमृदन्तरैः ॥ २६ ॥
पादोनं खातमापूर्य्य सजलैर्मुद्गराहतैः(१)।
लिप्तां समप्लवां तत्र कारयित्वा भुवं गुरुः ॥ २७ ॥
सामान्यार्घ्यकरो यायान्मण्डपं वस्त्यामाणकं।
तोरणाद्याःपतीनिष्ट्वा प्रत्यग्द्वारेण संविशेत् ॥ २८ ॥
कुर्य्यात्तत्रात्मशुद्धयादि कुण्डमण्डपसंस्कृतिं।
कलसं वर्द्धनीसक्तं(२) लोकपालशिवार्चनं ॥ २९ ॥
अग्नेर्जननपूजादि सर्व्वं पूर्व्ववदाचरेत्।
यजमानान्वितो(३) यायाच्छिलानां स्नानमण्डपं ॥ ३० ॥
शिलाः प्रासादलिङ्गस्य पादधर्म्मादिसञ्ज्ञकाः।
अष्टाङ्गुलोच्छ्रिताः शस्ताश्चतुरस्राः करायताः ॥ ३१ ॥
पाषाणानां शिलाः कार्य्या इष्टकानां तदर्द्धतः।
प्रासादेऽश्मशिलाः शैले इष्टका इष्टकामये ॥ ३२ ॥
अङ्किता नववक्त्राद्यैः(४) पङ्कजाः पङ्कजाङ्किताः।
नन्दा भद्रा जया रिक्ता पूर्णाख्या पञ्चमी मता(५) ॥ ३३ ॥
आसां पद्मो महापद्मः शङ्खोऽथ मकरस्तथा।
समुद्रश्चेति पञ्चामी निधिकुम्भाः क्रमादधः ॥ ३४ ॥
नन्दा भद्रा जया पूर्णा अजिता चापराजिता।

---

१ मुशलैर्मुद्गराहतैरिति ङ०।
२ वर्द्धनीयुक्तमिति ग०, ङ०च।
३ यजमानार्चित इति ख०।
४ नवकद्याद्यैरिति घ०।
५ 'पाषाणानामित्यादिः, पञ्चमी मता' इत्यन्तः श्लोकद्वयात्मक पाठो ग० पुस्तके नास्ति।

विजया मङ्गलाख्या च धरणी नवमी शिला ॥ ३५ ॥
सुभद्रश्च विभद्रश्च सुनन्दः पुष्पनन्दकः(१) ।
जयोऽथ विजयश्चैव कुम्भः पूर्णस्तथोत्तरः(२) ॥ ३६ ॥
नवानान्तु यथासङ्ख्यं निधिकुम्भा अमी नव ।
आसनं प्रथमं दत्त्वा(३) ताश्चोल्लिख्य शरागुना(४) ॥ ३७ ॥
सर्वासामविशेषेण तनुत्रेणावगुण्ठनं(५) ।
मृद्भिर्गोमयगोमूत्रकषायैर्गन्धवारिणा ॥ ३८ ॥
अस्त्रेण हुंफडन्तेन(६) मलस्नानं समाचरेत् ।
विधिना पञ्चगव्येन स्नानं पञ्चामृतेन च ॥ ३९ ॥
गन्धतोयान्तरं कुर्य्यान्निजनामाङ्कितागुना(७) ।
फलरत्नसुवर्णानां गोशृङ्गसलिलैस्ततः ॥ ४० ॥
चन्दनेन समालभ्य(८) वस्त्रैराच्छादयेच्छिलां ।
स्वर्णाद्यमासनं दत्वा नीत्वा यागं प्रदक्षिणं ॥ ४१ ॥
शय्यायां कुशतल्पे वा हृदयेन निवेशयेत्(९) ।
सम्पूज्य न्यस्य बुद्ध्यादिधरान्तं तत्त्वसञ्चयं ॥ ४२ ॥
त्रिखण्डव्यापकं तत्त्वत्रयञ्चानुक्रमान् न्यसेत् ।
बुद्ध्यादौ चित्तपर्य्यन्ते चिन्तातन्मात्रकावधौ(१०) ॥ ४३ ॥

---

१ पुष्पदन्तक इति ख०, ग०, घ०, ङ० च ।
२ पूर्वस्तथोत्तर इति घ० ।
३ प्रणवं दत्वा इति ख० ।
४ शरात्मनेति ख०, ग० च ।
५ तन्मात्रेणावगुण्ठनमिति ख० ।
६ ॐ फडन्तेनेति ग० ।
७ कुर्य्यात् द्विजनामाङ्कितात्मनेति ख० । कुर्य्यान निजनामाङ्कितात्मनेति ग० ।
८ समालिप्येति ग० ।
९ कुशतल्पे वा हृदयेन विशेषयेत् इति ख० । कुशतल्पे च हृदयेन निवेशयेत् । इति ग० ।
१० बुद्ध्यादौ चित्तपर्य्यन्ते चित्ततन्मात्रकावधौ इति घ० । सम्पूज्य इत्यादिः तन्मात्रकावधावित्यन्तः सार्द्धैकश्लोकपाठो ग० पुस्तके नास्ति ।

तन्मात्राद्यौ धरान्ते च शिवविद्यात्मनां स्थितिः ।
तत्त्वानि निजमन्त्रैर्वा तत्त्वेशांश्च हृदाऽर्च्चयेत् ॥ ४४ ॥
स्थानेषु पुष्पमालादिचिह्नितेषु यथाक्रमं ।

ओं हूं(१) शिवतत्त्वाय नमः । ओं हूं (२) शिवतत्त्वाधिपतये रुद्राय नमः । ओं हां विद्यातत्त्वाय नमः । ओं हां (३) विद्यातत्त्वाधिपाय(४) विष्णवे नमः । ओं हां आत्मतत्त्वाय नमः । ओं हां आत्मतत्त्वाधिपतये ब्रह्मणे नमः(५) ।

क्ष्माग्नियजमानार्कान् जलवातेन्दुखानि च ॥ ४५ ॥
प्रतितत्त्वं न्यसेदष्टौ मूर्त्तीः प्रतिशिलां शिलां ।
सर्वं पशुपतिं चोग्रं(६) रुद्रं भवमथेश्वरं(७) ॥ ४६ ॥
महादेवं च भीमं च मूर्त्तीशांश्च यथाक्रमात् ।
ओं धरामूर्त्तये नमः, ओं धराधिपतये नमः,
इत्यादिमन्त्रान् लोकपालान् यथासङ्ख्यं निजाणुभिः(८) ॥ ४७ ॥
जिनस्य पूजयेत् कुम्भांस्तन्मन्त्रैर्वा निजाणुभिः(९) ।
इन्द्रादीनां तु बीजानि वक्ष्यमाणक्रमेण तु ॥ ४८ ॥
लूं रूं शूं पूं वूं यूं सूं हूं क्षूमिति(१०) ।
उक्तो नवशिलापक्षः शिला पञ्चपदा तथा ।

---

१,२ ओं ह्रूं इति ग०, घ० च ।

३ ओं ह्रीं इति घ० ।

४ विद्यातत्त्वाधिपतये इति ख० ।

५ ओं ह्रूं शिवतत्त्वाधिपतये इत्यादिः, ओं ह्रां आत्मतत्त्वाधिपतये ब्रह्मणे नम इत्यन्तः पाठो ग० पुस्तके नास्ति ।

६ पशुपतिं भीममिति घ० ।

७ भवमखेश्वरम् इति घ० ।

८,९ निजात्मभिरिति ख०, ग० । जिनस्येत्यर्द्धश्लोको ग० पुस्तके नास्ति ।

१० ओं ह्रूं धूं बूं यूं मूं ह्रं चमितीति ग० । ओं कं मूं पूं शूं ह्रूं चमितीति घ० । लूं रूं शूं पूं वूं चूं सूं हूं क्षूमितीति ख० ।

प्रतितत्त्वं न्यसेन्मूर्त्तीः सृष्ट्या पञ्च धरादिकाः ॥ ४९ ॥
ब्रह्मा विष्णुस्तथा रुद्र ईश्वरश्च सदाशिवः ।
एते च पञ्च मूर्त्तीशा यष्टव्यास्तासु(१) पूर्ववत् ॥ ५० ॥

ओं पृथ्वीमूर्त्तये नमः । ओं पृथ्वीमूर्त्त्यधिपतये ब्रह्मणे नमः । इत्यादि मन्त्राः ।

सम्पूज्य कलशान् पञ्च क्रमेण निजनामभिः ।
निरुन्धीत(२) विधानेन न्यासो मध्यशिलाक्रमात् ॥ ५१ ॥
कुर्य्यात् प्राकारमन्त्रेण भूतिदर्भैस्तिलैस्ततः ।
कुण्डेषु धारिकां शक्तिं विन्यस्याभ्यर्च्य तर्पयेत् ॥ ५२ ॥
तत्तत्त्वाधिपान् मूर्त्तीर्मूर्त्तीशांश्च(३) घृतादिभिः ।
ततो ब्रह्मांशशुद्ध्यर्थं मूलाङ्गं ब्रह्मभिः क्रमात् ॥ ५३ ॥
कृत्वा शतादिपूर्णान्तं प्रोक्ष्याः शान्तिजलैः शिलाः(४) ।
पूजयेच्च कुशैः स्पृष्ट्वा प्रतितत्त्वमनुक्रमात् ॥ ५४ ॥
सांनिध्यमथ सन्धानं कृत्वा शुद्धं(५) पुनर्न्यसेत्(६) ।
एवं भागत्रये कर्म्म गत्वा गत्वा समाचरेत् ॥ ५५ ॥
ओं आं इं आत्मतत्त्वविद्यातत्त्वाभ्यां नमः(७) इति ।

---

१ न्यतव्यास्तासु इति ख० ।

२ निबध्नीतेति ख०, ग०, ङ० च ।

३ तत तत्वाधिपान् मूर्त्तीर्मूर्त्तीशांश्चेति ङ० । मन्त्रतत्त्वाधिपान् मूर्त्तीर्मूर्त्तीशांश्चेति ख० ।

४ प्रोक्ष्य शान्तिजलैः शिलामिति ख० । प्रोक्ष्य शान्तिजलैः शिला इति ग०, घ० च ।

५ कृत्वा मन्त्रमिति ग० ।

६ सान्निध्यमित्यर्धश्लोको ङ० पुस्तके नास्ति । सान्निध्यमथ सन्धानं' इत्यतः परः 'ह्रस्वदीर्घप्रयोगतः' इत्यतः प्राक् मध्यगपाठो घ० पुस्तके नास्ति ।

७ ओं आँ हाँ आत्मतत्त्वविद्यातत्त्वाय नम इति ग० । ओं आं इं उं विद्यातत्त्वशिवतत्त्वाभ्यां नम इति ङ० । ओं आं इं आत्मविद्यातत्त्वाय नम इति ख० ।

संस्पृशेद् दर्भमूलाद्यैर्ब्रह्माङ्गादित्रयं क्रमात्।
कुर्य्यात्तत्त्वानुसन्धानं ह्रस्वदीर्घप्रयोगतः॥ ५६॥
ओं ह्रां उं(१) विद्यातत्त्वशिवतत्त्वाभ्यां नमः।
घृतेन मधुना पूर्णांस्ताम्रकुम्भान् सरत्नकान्।
पञ्चगव्यार्घ्यसंसिक्तान्(२) लोकपालाधिदैवतान्॥ ५७॥
पूजयित्वा निजैर्मन्त्रैः सन्निधौ होममाचरेत्।
शिलानामथ सर्वासां संस्मरेदधिदेवताः॥ ५८॥
विद्यारूपाः कृतस्नाना हेमवर्णाः शिलाम्बराः।
न्यूनादिदोषमोषार्थं(३) वास्तुभूमेश्च शुद्धये।
यजेदस्त्रेण मूर्द्धान्तमाहुतीनां(४) शतं शतं॥ ५९॥

इत्यादिमहापुराणे आग्नेये शिलान्यासकथनं नाम
द्विनवतितमोऽध्यायः॥ ९२॥

---

# अथ त्रिनवतितमोऽध्यायः।

## वास्तुपूजादिविधानम्।

ईश्वर उवाच। ततः प्रासादमासूत्र्य वर्त्तयेद्वास्तुमण्डपं(५)।
कुर्य्यात् कोष्ठचतुःषष्टिं चापे वेदास्रके समे॥ १॥
कोणेषु विन्यसेद् वंशौ(६) रज्ज्वावोऽष्टौ विकोणगाः।

---

१ ओं ह्रं उं इति घ०, ङ० च।
२ पञ्चगव्येन संसिक्तान् इति ग०।
३ न्यूनादिदोषनाशार्थमिति घ०।
४ यजेदस्त्रेण शुद्धार्थमाहुतीनामिति घ०।
५ वास्तुमण्डलमिति ग० ङ०। तत इति श्लोकार्द्धं घ० पुस्तके नास्ति।
६ विन्यसेद्वंशमिति ख०।

द्विपदाः षट्पदास्तास्तु वास्तुन्तमार्चयेद् यथा ॥ २ ॥
आकुञ्चितकचं(१) वास्तुमुत्तानमसुराकृतिं(२) ।
स्मरेत् पूजासु कुड्यादिनिवेशे उत्तराननं ॥ ३ ॥
जानुनी कूर्परौ शक्थि दिशि वातहुताशयोः ।
पैत्र्यां पादपुटे रौद्र्यां शिरोऽस्य हृदयेऽञ्जलिः ॥ ४ ॥
अस्य देहे समारूढ़ा देवताः पूजिताः शुभाः ।
अष्टौ कोणाधिपास्तत्र कोणार्द्धेष्वष्टसु स्थिताः(३) ॥ ५ ॥
षट्पदास्तु मरीच्याद्या दिक्षु पूर्वादिषु क्रमात् ।
मध्ये चतुष्पदो ब्रह्मा शेषास्तु पदिकाः(४) स्मृताः ॥ ६ ॥
समस्तनाडीसंयोगे महामर्म्मानुजं फलं ।
त्रिशूलं स्वस्तिकं वज्रं(५) महास्वस्तिकसम्पुटौ ॥ ७ ॥
त्रिकटुं(६) मणिबन्धं च सुविशुद्धं पदं तथा ।
इति द्वादश मर्म्माणि वास्तोर्भित्त्यादिषु त्यजेत् ॥ ८ ॥
साज्यमक्षतमीशाय पर्जन्यायाम्बुजोदकं ।
ददीताथ जयन्ताय पताकां कुङ्कुमोज्ज्वलां(७) ॥ ९ ॥
रत्नवारि महेन्द्राय रवौ धूम्रं वितानकं ।
सत्याय घृतगोधूममाज्यभक्तं भृशाय च ॥ १० ॥
विनांसमन्तरीक्षाय शक्तुस्तेभ्यस्तु पूर्वतः ।
मधुक्षीराज्यसम्पूर्णां प्रदद्यादग्नये स्रुचं ॥ ११ ॥
लाजान् पूष्णे सुवर्णाम्बु वितथाय निवेदयेत् ।

---

१ आकुञ्चितकरमिति ख० ।

२ कुड्यादित्यादिः मुत्तानमसुराकृतिमित्यन्तः श्लोकद्वयात्मकपाठो ग० पुस्तके नास्ति ।

३ कोणार्द्धेषु व्यवस्थिता इति ख० ।

४ पादिका इति ख० ।

५ मुष्टिकं वज्रमिति ख० ।

६ त्रिकोष्ठमिति ग० ।

७ ददीतेति सार्द्धश्लोको ग० पुस्तके नास्ति ।

दद्याद् गृहक्षते क्षौद्रं(१) यमराजे पलौदनं(२) ॥ १२ ॥
गन्धं गन्धर्वनाथाय जिह्वां भृङ्गाय पक्षिणः ।
मृगाय पद्मपर्णानि(३) याम्यामित्यष्टदेवताः(४) ॥ १३ ॥
पित्रे तिलोदकं क्षीरं कृसरं दन्तधावनं ।
दौवारिकाय देवाय प्रदद्याद् धेनुमुद्रया (५) ॥ १४ ॥
सुग्रीवाय दिशेत् पूपान् पुष्पदन्ताय दर्भकं ।
रक्तं प्रचेतसे पद्ममसुराय(६) सुरासवं ॥ १५ ॥
घृतं गुडौदनं शोषे रोगाय घृतमण्डकान् ।
लाजान् वा पश्चिमाशायां देवाष्टकमितीरितं ॥ १६ ॥
मारुताय ध्वजं पीतं नागाय नागकेशरं ।
मुख्ये भक्ष्याणि भल्लाटे मुद्गसूपं सुसंस्कृतं ॥ १७ ॥
सोमाय पायसं साज्यं शालूकमृषये(७) दिशेत् ।
लोपीमदितये दित्यै पुरीमित्युत्तराष्टकं(८) ॥ १८ ॥
मोदकान् ब्रह्मणः प्राच्यां षट्पदाय मरीचये ।
सवित्रे रक्तपुष्पाणि ब्रह्माधःकोणकोष्ठके ॥ १९ ॥
तदधःकोष्ठके दद्यात् सावित्र्यै च कुशोदकं(९) ।
दक्षिणे चन्दनं(१०) रक्तं षट्पदाय विवस्वते ॥२०॥
हरिद्रौदनमिन्द्राय रक्षोधःकोणकोष्ठके ।

---

१ भूतक्षये रौद्रमिति ख०, ङ, च । ग्रहक्षते क्षौद्रमिति घ० ।
२ फलौदनमिति ख०, घ० च ।
३ यवपर्णानीति घ० । पद्मवर्णानीति ख, ङ० च ।
४ याम्यामित्यष्टदेवता इति ख० ।
५ प्रदद्यादघमर्दयेति ख० । प्रदद्याद्वममुद्रयेति घ०, ङ० च ।
६ पद्मं मम्बरायेति घ० ।
७ शालुकं मृगायेति ख०, ङ० च ।
८ पुरीमित्यपराष्टकमिति ग० ।
९ सवित्रे च कुशोदकमिति ग० ।
१० सावित्र्यै चन्दनमिति ग० ।

इन्द्रजयाय मिश्रान्नमिन्द्राधस्तान्निवेदयेत् ॥ २१ ॥
वारुण्यां षट्पदासीने मित्रे सगुडमोदनं ।
रुद्राय घृतसिद्धान्नं वायुकोणाधरे पदे ॥ २२ ॥
तदधो रुद्रदासाय मासं मार्गमथोत्तरे ।
ददीत माषनैवेद्यं(१) षट्पदस्थे धराधरे(२) ॥ २३ ॥
आपाय शिवकोणाधः तद्वत्साय च तत्स्थले(३) ।
क्रमाद्दद्याद्दधिक्षीरं पूजयित्वा विधानतः ॥ २४ ॥
चतुष्पदे निविष्टाय ब्रह्मणे मध्यदेशतः ।
पञ्चगव्याक्षतोपेतश्चरुं साज्यं निवेदयेत् ॥ २५ ॥
ईशादिवायुपर्य्यन्तकोणेष्वथ यथाक्रमं ।
वास्तुवाह्ये चरक्याद्यास्ततस्तः पूजयेद् यथा ॥ २६ ॥
चरक्यै(४) सघृतं मांसं विदार्य्यै(५) दधिपङ्कजे ।
पूतनायै पलं पित्तं रुधिरं च निवेदयेत् ॥ २७ ॥
अस्थीनि पापराक्षस्यै रक्तपित्तपलानि च ।
ततो माषौदनं(६) प्राच्यां स्कन्दाय विनिवेदयेत् ॥ २८ ॥
अर्य्यम्णे दक्षिणाशायां पूपान् कृसरया युतान् ।
जम्भकाय(७) च वारुण्यामामिषं रुधिरान्वितं ॥ २९ ॥
उदीच्यां पिलिपिञ्जाय(८) रक्तान्नं कुसुमानि च ।
यजेद्वा सकलं वास्तुं कुशदध्यक्षतैर्जलैः ॥ ३० ॥

---

१ मांसनैवेद्यमिति ख०, ङ० च ।
२ वराधरे इति घ० ।
३ आपवत्सचतुष्टये इति ख०, । तद्वत्साये च तत्स्थले इति घ० ञ० च ।
४ वाराह्यै इति ङ० ङ० च ।
५ विपचे इति ख०, ङ० च ।
६ ततो मांसौदनमिति ख०, घ०, ङ० च ।
७ कुम्भकायेति ङ० ।
८ पिलिपिच्छायेति ङ० । लिपिपिञ्जायेति ङ० ।

गृहे च नगरादौ च एकाशीतिपदैर्यजेत्।
त्रिपदा रज्जवः कार्य्याः षट्पदाश्च त्रिकोणके ॥ ३१ ॥
ईशाद्याः पादिकास्तस्मिन्नागाद्याश्च द्विकोष्ठगाः(१)।
षट्पदस्था मरीच्याद्या ब्रह्मा नवपदः स्मृतः ॥ ३२ ॥
नगरग्रामखेटादौ वास्तुः शतपदोऽपि(२) वा।
वंशद्वयं कोणगतं दुर्जयं दुर्द्धरं सदा ॥ ३३ ॥
यथा देवालये न्यासस्तथा शतपदे स्थितः।
ग्रहाः स्कन्दादयस्तत्र विज्ञेयाश्चैव षट्पदाः ॥ ३४ ॥
चरक्याद्या भूतपदा रज्जुवंशादि पूर्ववत्।
देशसंस्थापने(३) वास्तु चतुस्त्रिंशच्छतं(४) भवेत् ॥ ३५ ॥
चतुःषष्टिपदो(५) ब्रह्मा मरीच्याद्याश्च देवताः।
चतुःपञ्चाशत्पदिका आपाद्यष्टौ रसाग्निभिः ॥३६ ॥
ईशानाद्या नवपदाः स्कन्द्याद्याः शक्तिकाः(६) स्मृताः।
चरक्याद्यास्तद्वदेव रज्जुवंशादि पूर्ववत्(७) ॥ ३७ ॥
ज्ञेयो वंशसहस्रैस्तु वास्तुमण्डलगः पदैः।
न्यासो नवगुणस्तत्र कर्त्तव्यो देशवास्तुवत् ॥ ३८ ॥
पञ्चविंशत्पदो वास्तुर्वैतालाख्यश्चितौ स्मृतः।
अन्यो नवपदो वास्तुः षोडशाङ्घ्रिस्तथापरः ॥ ३९ ॥
षडस्रत्र्यस्रवृत्तादेर्मध्ये स्याच्चतुरस्रकं।

---

१ नागाद्याश्चार्द्धकोष्ठगा इति ख०, ङ० च।
२ शतपदेऽपीति ग०।
३ दशमं स्थापमे इति ख०. ग०, घ०, ङ, छ० च०।
४ चतुर्विंशच्छतमिति ग०।
५ चतुःषष्टिपदे इति घ०।
६ ईशानाद्याः शिवपदा स्कन्द्याद्याः पदिका इति घ०।
७ समस्त स्थापने वास्तुचतुस्त्रिंशच्छतं भवेदितिघ० पुस्तकेऽधिकः पाठः। चतुःषष्टिपदो ब्रह्मा इत्यादिः, रज्जुवंशादि पूर्ववत् इत्यन्तः पाठो ग० पुस्तके नास्ति।

खाते वास्तोः समं पृष्ठे(१) न्यासे ब्रह्मशिलात्मके ॥ ४० ॥
प्रावाकस्य निवेशे च(२) मूर्त्तिसंस्थापने तथा।
पायसेन तु नैवेद्यं सर्वेषां वा प्रदापयेत् ॥ ४१ ॥
उक्तानुक्ते तु वै वास्तुः पञ्चहस्तप्रमाणतः(३)।
गृहप्रासादमानेन वास्तुः श्रेष्ठस्तु सर्वदा(४) ॥ ४२ ॥

इत्यादिमहापुराणे आग्नेये वास्तुपूजाकथनं नाम
त्रिनवतितमोऽध्यायः ॥ ९३ ॥

---

## अथ चतुर्णवतितमोऽध्यायः।

### शिलाविन्यासविधानं।

ईश्वर उवाच। ईशादिषु चरक्याद्याः(५) पूर्ववत् पूजयेद्बहिः।
आहुतित्रितयं दद्यात् प्रतिदेवमनुक्रमात् ॥ २ ॥
दत्वा भूतबलिं लग्ने शिलान्यासमनुक्रमात्।
मध्यसूत्रे(६) न्यसेच्छक्तिं कुम्भस्थानन्तमुत्तमं(७) ॥ ३ ॥
नकाराक्षरमूर्त्तेन कुम्भेऽस्मिन् धारयेच्छिलां।
कुम्भानष्टौ सुभद्रादीन् दिक्षु पूर्वादिषु क्रमात् ॥ ४ ॥
लोकपालाणुभिर्न्यस्य(८) स्वभ्रेषु(९) नवस्वशक्तिषु।

---

१ खातारम्भे समं पृष्ठे इति ङ०। खातो वास्तोः समः पृष्ठे इति ख०।
२ निवेशनेति ख०, ङ० च।
३ परं हस्तप्रमाणत इति ख०।
४ सर्वद इति ख०, घ०ङ०,च। सर्वग इति ग०, च।
५ ईशाद्यादिषु ब्रह्माद्या इति ग०।
६ मध्ये स्वभ्र इति घ०।
७ कुम्भस्थानन्तमग्निकमिति घ०, ङ० च। कुम्भस्थानन्तमग्निममिति ङ०।
८ लोकपालात्मभिर्न्यस्येदिति ख०, ङ० च। लोकपालाणुभिर्न्यसेदिति ङ०।
९ सूत्रेष्विति क०। कुम्भेष्विति ग०।

शिलास्त्वेव च(१) नन्दाद्याः क्रमेण(२) विनिवेशयेत् ॥ ५ ॥
शङ्करैर्मूर्त्तिनाथानां(३) यथा स्युर्भित्तिमध्यतः ।
तासु धर्म्मादिकानष्टौ(४) कोणात् कोणं विभागशः(५) ॥ ६ ॥
सुभद्रादिषु नन्दाद्यास्तत्तोऽमरादिकोणगाः ।
अजिताद्याश्च पूर्व्वादिजयादिष्वेव च(६) विन्यसेत् ॥ ७ ॥
ब्रह्माणं चोपरि न्यस्य(७) व्यापकं च महेश्वरं ।
चिन्तयेदेषु चाधानं व्योमप्रासादमध्यगं ॥ ८ ॥
बलिन्दत्त्वा जपेदस्त्रं विघ्नदोषनिवारणं(८) ।
शिलापञ्चकपक्षेऽपि मनागुद्दिश्यते यथा ॥ ९ ॥
मध्ये पूर्णाशिलान्यासः(९) सुभद्रकलशेऽर्द्धतः ।
पद्मादिषु च नन्दाद्याः कोणेष्वमरादिषु क्रमात् ॥ १० ॥
मध्यभावे(१०) च तत्तोऽपि मातृवद्भावसम्मताः ।
ओं पूर्णे त्वं महाविद्ये(११) सर्वसन्दोहलक्षणे ॥ ११ ॥
सर्वसम्पूर्णमेवात्र कुरुष्वाङ्गिरसः सुते ।
ओं नन्दे त्वं नन्दिनी पुंसां त्वामत्र स्थापयाम्यहं ॥ १२ ॥
प्रासादे तिष्ठ सन्तृप्ता यावच्चन्द्रार्कतारकं ।
आयुः कामं श्रियन्नन्दे देहि वासिष्ठि देहिनां(१२) ॥ १३ ॥

---

१ शिलाद्यास्तथेति क० ।
२ क्रमश इति घ० ।
३ शङ्करैर्मूर्त्तिनाथानामिति ख०, ङ० च । शङ्करैर्मूर्त्तिमाधानमिति ङ० ।
४ तान् सुधर्म्मादिकानष्टौ इति ख० ।
५ विभागत इति घ० ।
६ पूर्व्वादिजयादिषु चेति ग० ।
७ ब्रह्माणं चोपविन्यस्येति ख०, घ०, ङ०, छ० च ।
८ विघ्नदोषनिवारकमिति ग० ।
९ पूर्वशिलान्यास इति घ० ।
१० मध्याभावे इति ख०, ग० च ।
११ महाभागे इति ग० ।
१२ देहि मामिति ख०, ङ०, घ । देहि म इति घ० ।

अस्मिन् रक्षा सदा(१) कार्य्या प्रासादे यत्नतस्त्वया।
ओं भद्रे त्वं सर्वदा भद्रं लोकानां कुरु कात्स्यपि ॥ १४ ॥
आयुर्दा कामदा देवि(२) श्रीप्रदा च सदा भव।
ओं जयेऽत्र सर्वदा देवि श्रीदाऽऽयुर्दा सदा भव(३) ॥ १५ ॥
ओं जयेऽत्र सर्वदा(४) देवि तिष्ठ त्वं स्थापिता मय(५)।
नित्यञ्जयाय भूत्यै च स्वामिनी भव भार्गवि ॥ १६ ॥
ओं रिक्तेऽतिरिक्तदोषघ्ने(६) सिद्धिमुक्तिप्रदे शुभे।
सर्वदा सर्वदेशस्थे तिष्ठास्मिन् विश्वरूपिणि(७) ॥ १७ ॥
गगनायतनन्ध्यात्वा तत्र तत्त्वत्रयं(८) न्यसेत्।
प्रायश्चित्तन्ततो कृत्वा विधिना विसृजेन्मखं ॥ १८ ॥

इत्यादिमहापुराणे आग्नेये शिलान्यासकथनं नाम चतुर्णवतितमोऽध्यायः ॥ ९४ ॥

---

## अथ पञ्चनवतितमोऽध्यायः।

### प्रतिष्ठा सामग्रीविधानं।

ईश्वर उवाच। वक्ष्ये लिङ्गप्रतिष्ठां च प्रासादे भुक्तिमुक्तिदां।
ताञ्चरेत् सर्वदा मुक्तौ भुक्तौ देवदिने सति(९) ॥ १ ॥
विना चैत्रेण माघादौ प्रतिष्ठा मासपञ्चके।

---

१ मुदा इति ख०, ङ० च।
२ कामदे देवीति घ०।
३ अयन्त्यर्द्धश्लोकः, ङ० पुस्तके नास्ति
४ ओं जय एनं मदेति ख०,ङ०च।
५ मम इति ङ०।
६ रक्तातिरक्तदोषघ्ने इति ङ०। रक्तातिरक्तदोषघ्ने इति ख०।
७ सर्वष्ठास्मिन्नीशरूपिणीति घ०। सर्वरूपिणीति ज०।
८ तत्त्वे तत्त्वत्रयमिति घ०।
९ सर्वदा मुक्तौ देवादेवे यहे सतीति घ०। सर्वदा मुक्त्यै भुक्त्यै। देवदिने सतीति ङ०।

गुरुशुक्रोदये कार्य्या प्रथमे करमात्रये ॥ २ ॥
शुक्लपक्षे विशेषेण कृष्णे वा पञ्चमं दिनं(१)।
चतुर्थीं नवमीं षष्ठीं वर्जयित्वा चतुर्दशीं ॥ ३ ॥
शोभनास्तिथयः शस्ताः क्रूरवारविवर्जिताः।
शतभिषा धनिष्ठार्द्रा अनुराधोत्तरत्रयं(२) ॥ ४ ॥
रोहिणी श्रवणश्चेति(३) स्थिरारम्भे मसूदयाः।
समस्त कुम्भसिंहालितुलास्त्रीवृषधन्विनां ॥ ५ ॥
शस्तो जीवो नवर्क्षेषु सप्तस्थानेषु सर्वदा।
बुधः षडष्टदिक्सप्ततुर्येषु विनतु(४) शितः ॥ ६ ॥
सप्तत्रिदशादिस्थः(५) शशाङ्को बलदः सदा(६)।
रविर्दशत्रिषट्संस्थो राहुस्त्रिदशषड्गतः ॥ ७ ॥
षट्त्रिस्थानगताः शस्ता मन्दाङ्गारार्ककेतवः।
शुभाः क्रूराश्च पापाश्च सर्व एकादशस्थिताः ॥ ८ ॥
एषां दृष्टिर्मुनौ पूर्णा(७) त्वार्द्धिकी शरभूतयोः।
पादिकी रामदिक्स्थाने चतुरष्टौ(८) पादवर्जिता ॥ ९ ॥
पादानूनचतुर्नाडी भोगः स्यान्मीनमेषयोः।
वृषकुम्भौ च भुञ्जाते चतस्रः पादवर्जिताः ॥ १० ॥
मकरो मिथुनं पञ्च चापालिहरिकर्कटाः।
पादोनाः षट् तुलाकन्ये घटिकाः सार्द्धपञ्च च ॥ ११ ॥

---

१ कृष्णेऽप्यापञ्चमं दिनमिति ख०, ङ० च। सप्तषड् विमेति ख०।
कृष्णेऽप्यापञ्चमाद्दिनादिति घ०।

२ अनुराधोत्तरात्रयमिति घ०।

३ श्रवणश्चैते इति ख०।

४ बुधः षड्तुतुर्येषु दिक्सप्ताष्ट विनेति ङ०। बुधः षड्द्वाष्टतुर्येषु दिक्-

५ सप्तायत्रिदशादिस्थ इति ख०ङ०च।

६ बुधः षडष्टदिगित्यादिः, बलदः सदा इत्यन्तः पाठो ग० पुस्तके नास्ति।

७ एवं दृष्टिबले पूर्णादिति ङ०। एवं दृष्टिबले पूर्णेति ख०।

८ चत्वष्टौ इति ख०, ङ० च।

केशरी वृषभः कुम्भः स्थिराः स्युः सिद्धिदायकाः ।
चरा धनुस्तुलामेषा द्विःस्वभावास्तृतीयकाः(१) ॥ १२ ॥
शुभः(२) शुभग्रहैर्दृष्टः शस्तो लग्नः शुभाश्रितः(३) ।
गुरुशुक्रबुधैर्युक्तो लग्नो दद्याद्बलायुषी(४) ॥ १३ ॥
राज्यं शौर्य्य(५)बलं पुत्रान् यशोधर्म्मादिकं बहु ।
प्रथमः सप्तमस्तुर्य्यो दशमः केन्द्र उच्यते ॥ १४ ॥
गुरुशुक्रबुधास्तत्र सर्वसिद्धिप्रदायकाः ।
त्रैकादशचतुर्थस्था(६) लग्नात् पापग्रहाः शुभाः ॥ १५ ॥
अतोऽप्यनीचकर्मार्थं(७) योज्यास्तिथ्यादयो बुधैः ।
धाम्नः पञ्चगुणां भूमिं त्यक्त्वा वा धानसम्मितां(८) ॥ १६ ॥
हस्ताद् द्वादशसोपानात्(९) कुर्य्यान्मण्डपमग्रतः ।
चतुरस्रं चतुर्द्वारं स्नानार्थन्तु(१०) तदर्द्धतः ॥ १७ ॥
एकास्यं चतुरास्यं वा रौद्र्यां प्राच्युत्तरेऽथवा(११) ।
हास्तिको दशहस्तो वै मण्डपोऽर्ककरोऽथवा ॥ १८ ॥
द्विहस्तोत्तरया वृद्ध्या(१२) शेषं स्यान्मण्डपाष्टकं ।

---

१ कर्कटो मकरो द्विस्थः प्रव्रज्याकार्य्यनाशकाः । गुरुशुक्रबुधास्तत्र सर्वसिद्धिप्रदायका इति ग०, घ० पुस्तकेऽधिकः पाठः ।

२ स्थिर इति ग० ।

३ शुभान्वित इति ख० ङ, च ।

४ धनायुषीति ग० ।

५ राज्यं सौख्यमिति ख० ।

६ त्रैकादशचतुर्थस्था इति ङ० । त्रैकादशेत्यर्द्धश्लोको ग० पुस्तके नास्ति ।

७ अतोऽन्येमिष्टकर्मार्थमिति ख०, घ०, ङ० च ।

८ त्यक्त्वा वा चापसम्मितामिति ख० । त्यक्त्वा वा रामसम्मितामिति ङ० ।

९ हस्ताद्वा दशसोपानादिति ख० । हस्तान् वा दश सोपानादिति ख० ।

१० स्नानार्थं चेति ग० ।

११ प्राच्युत्तरे तथेति ङ० ।

१२ द्विहस्तोत्तरयाऽन्या इति घ० ।

वेदी चतुष्करा मध्ये कोणस्तम्भेन संयुता(१) ॥ १९ ॥
वेदीपादान्तरं त्यक्त्वा(२) कुण्डानि नव पञ्च वा ।
एकं वा शिवकाष्ठायां(३) प्राच्यां वा तद्गुरोः परं ॥ २० ॥
मुष्टिमात्रं शतार्द्धे स्याच्छते चारत्निमात्रकं(४) ।
हस्तं सहस्रहोमे स्यान्नियुते तु द्विहस्तकं(५) ॥ २१ ॥
लक्षे चतुष्करं कुण्डं कोटिहोमेऽष्टहस्तकं ।
भगाभमम्भौ(६) खण्डेन्दू दक्षे त्र्यस्रञ्च नैरृते ॥ २२ ॥
षडस्रं वायवे पद्मं(७) सौम्ये चाष्टास्रकं शिवे ।
तिर्य्यक्पातशिवं खातमूर्द्धं(८) मेखलया सह ॥ २३ ॥
तद्बहिर्म्मेखलास्तिस्रो वेदवह्नियमाङ्गुलैः(९) ।
अङ्गुलैः षड्भिरेका वा कुण्डाकारास्तु मेखलाः ॥ २४ ॥
तासामुपरि योनिः स्यान्मध्येऽश्वत्थदलाकृतिः ।
उच्छ्रायेणाङ्गुलं तस्माद्विस्तारेणाङ्गुलाष्टकं(१०)॥ २५ ॥
दैर्घ्यं कुण्डार्द्धमानेन कुण्डकण्ठसमोऽधरः ।
पूर्वाग्नियाम्यकुण्डानां योनिः स्यादुत्तरानना ॥ २६ ॥
पूर्वानना तु शेषाणामैशान्येऽन्यतरा तयोः ।

---

१ कोणस्तम्भेषु संयुतेति क०, ग०, घ० च। कोणस्तम्भेषु सम्मतेति ङ०। कोणस्तम्भे तु संयुतेति ख०, छ० च।

२ वेदी पादान्तरं त्यक्त्वेति घ०, ङ० च।

३ शिवकाष्ठादौ इति ग०।

४ शतार्द्धस्य शते चारत्निमात्रकमिति छ०। शतार्द्धस्य शते वारत्निमात्रकमिति घ०। शतार्द्धस्य शते वा वह्निमात्रकमिति ङ०।

५ द्विहस्तकमितिख०।

६ खड्गाभमग्नौ इति ख०, ग०, ङ०, छ० च।

७ पद्मे इति ख०, घ० च।

८ तिर्य्यक्पातसममूर्द्धमिति ख०, ग०, घ० च।

९ वेदवह्नि यवाङ्गुलैरिति घ०।

१० तस्य विस्तारेणाङ्गुलाष्टकमिति घ०।

कुण्डानां यच्चतुर्विंशो भागः सोऽङ्गुल इत्यतः॥ २७ ॥
प्लक्षोदुम्बरकाश्वत्थवटजान्तोरणाः क्रमात्।
शान्तिभूतिबलारोग्यपूर्वाद्या नामतः क्रमात् ॥ २८ ॥
पञ्चषट्सप्तहस्तानि हस्तखातस्थितानि च।
तदर्द्धविस्तराणि स्युस्तान्याम्रदलादिभिः ॥ २९ ॥
इन्द्रायुधोपमा रक्ता कृष्णा धूम्रा शशिप्रभा।
शुक्लाभा(१) हेमवर्णा च पताका स्फाटिकोपमा ॥ ३० ॥
पूर्वादितोऽब्जे(२) रक्ता नीलाऽनन्तस्य(३) नैर्ऋते।
पञ्चहस्तास्तदर्द्धाश्च ध्वजा दीर्घाश्च विस्तराः ॥ ३१ ॥
हस्तप्रदेशिता दण्डा ध्वजानां पञ्चहस्तकाः।
वल्मीकाद्दन्तिदन्ताग्रात्तथा(४) वृषभशृङ्गतः ॥ ३२ ॥
पद्मषण्डाद्वराहाच्च गोष्ठादपि चतुष्पथात्।
मृत्तिका द्वादश ग्राह्या वैकुण्ठेऽष्टौ पिनाकिनि ॥ ३३ ॥
न्यग्रोधोदुम्बराश्वत्थचूतजम्बुत्वगुद्भवं।
कषायपञ्चकं ग्राह्यमार्त्तवञ्च फलाष्टकं ॥ ३४ ॥
तीर्थाम्भांसि सुगन्धीनि(५) तथा सर्वौषधीजलं।
शस्तं पुष्पफलं वक्ष्ये रत्नगोशृङ्गवारि(६) च ॥ ३५ ॥
स्नानायाहरेत्(७) पञ्च पञ्चगव्यामृतं तथा।
पिष्टनिर्म्मितवस्त्रादिद्रव्यं निर्म्मञ्जनाय(८) च ॥ ३६ ॥

१ सुक्ताभेति ख०।
२ पूर्वादितो ध्वजे इति ग०।
३ नीलानन्तेऽयेति ग०।
४ वल्मीकाद्दन्तिदन्ताग्रात्तथेति ङ०।
५ तीर्थतोयसुगन्धीनि इति ङ०।
६ वर्गे गोशृङ्गवारि चेति ङ०।
७ स्नानायोपहरेदिति ख०, ङ०, घ० च।
८ पिष्टनिर्मितवस्त्रादिद्रव्यं निर्म्मञ्जनायेति ग०। पिष्टनिर्मितवस्त्रादिकं निर्मथनायेति ज०।

सच्छत्रसुषिरं कुम्भं मङ्गलाय च रोचना(१)।
शतमौषधिमूलानां विजया लक्ष्मणा बला ॥ ३७ ॥
गुडूच्यतिबला पाठा सहदेवा शतावरी।
ऋद्धिः(२) सुवर्चला(३) वृद्धिः स्नाने प्रोक्ता पृथक् पृथक् ॥३८॥
रक्षायै तिलदर्भैाघौ(४) भस्मस्नानन्तु केवलं।
यवगोधूमविल्वानां(५) चूर्णानि च विचक्षणः ॥ ३९ ॥
विलेपनं(६) सकर्पूरं स्नानार्थं कुम्भगड्डकान्(७)।
खट्वाञ्च तूलिकायुग्मं सोपधानं सवस्त्रकं ॥ ४० ॥
कुर्य्याद्वित्तानुसारेण शयने लक्ष्यकल्पने(८)।
घृतक्षौद्रयुतं पात्रं कुर्य्यात् स्वर्णशलाकिकां ॥ ४१ ॥
वर्द्धनीं शिवकुम्भञ्च लोकपालघटानपि।
एकं निद्राकृते कुम्भं शान्त्यर्थं कुण्डसङ्ख्यया(९) ॥ ४२ ॥
द्वारपालादि-धर्म्मादि-प्रशान्तादि-घटानपि।
वास्तुलक्ष्मीगणेशानां कलशानपरानपि ॥ ४३ ॥
धान्यपुञ्जकृताधारान् सवस्त्रान्(१०) स्रग्विभूषितान्।

---

१ मङ्गलाय च रोचनेति ग०। मङ्गलाय च रोचनमिति ञ०।

२ सिद्धिरिति घ०।

३ सुवर्चलेति ञ०।

४ तिलगर्भाद्यमिति ख०, घ०, ङ०, छ० च। तिलदर्भार्घमिति ञ०।

५ यवगोधूमचूर्णानामिति घ०। यवगोधमविल्वानामिति छ०।

६ लेपनञ्चेति ञ०।

७ कुम्भमण्डकानितिख०। कुम्भगड्डुकामिति घ०। कुम्भगण्डुकानिति ङ०। कुम्भसण्डकानिति छ०। कुम्भखण्डकानिति ञ०।

८ प्रायेण लक्ष्यकल्पने इति ग०। शयने लक्ष्यकं परे इति ञ०।

९ कुण्डसम्मितमिति ञ०।

१० सवाससेति घ०, ञ० च।

सहिरण्यान् समालब्धान् गन्धपानीयपूरितान् ॥ ४४ ॥
पूर्णपात्रफलाधारान्(१) पल्लवाद्यान्(२) सलक्षणान्।
वस्त्रैराच्छादयेत् कुम्भानाहरेद्दौरसर्षपान् ॥ ४५ ॥
विकिरार्थन्तथा लाजान् ज्ञानखड्गञ्च पूर्ववत्।
सापिधानां चरुस्थालीं दर्व्वीं च ताम्रनिर्म्मितां(३) ॥ ४६ ॥
घृतक्षौद्रान्वितं पात्रं पादाभ्यङ्गकृते तथा।
विष्टरांस्त्रिंशतादर्भदलैर्बाहुप्रमाणकान्(४) ॥ ४७ ॥
चतुरश्चतुरस्तद्वत् पालाशान् परिधीनपि।
तिलपात्रं हविःपात्रमर्घपात्रं पवित्रकं ॥ ४८ ॥
पलविंशाष्टमानानि घटौ धूपप्रदानकं(५)।
स्रुक्स्रुवौ पिटकं पीठं व्यजनं शुष्कमिन्धनं ॥ ४९॥
पुष्पं पत्रं गुग्गुलञ्च घृतैर्द्दीपांश्च धूपकं।
अक्षतानि त्रिसूत्रीञ्च गव्यमाज्यं यवांस्तिलान् ॥ ५० ॥
कुशाः शान्त्यै त्रिमधुरं समिधो दशपर्विकाः।
बाहुमात्रं स्रुवं हस्तम्(६) अर्कादिग्रहशान्तये ॥ ५१ ॥
समिधोऽर्कपलाशोत्थाः खादिरामार्गपिप्पलाः(७)।
उदुम्बरशमीदूर्वाकुशोत्थाः शतमष्ट च ॥ ५२ ॥
तदभावे यवतिला गृह्योपकरणं तथा।
स्थालीदर्वीपिधानादि देवादिभ्योऽंशुकद्वयं ॥ ५३ ॥
मुद्रामुकुटवासांसि हारकुण्डलकङ्कणान्।

---

१ पूर्वपात्रफलाधारानिति ङ०।
२ पल्लवाग्रानिति ख०, घ०, ञ० च।
३ कुर्व्वीत ताम्रनिर्मितामिति ख०।
४ दलैर्बाहुमात्रप्रमाणान इति ग०।
५ घण्टाधूपप्रदामकमिति घ०, ङ० च।
६ बाहुमात्रं स्रुचं हस्तामिति ङ०।
७ खादिरापाङ्गपिप्पलाइति ख०, ङ० च। खादिरापामार्कपिप्पला-इति घ०।

कुर्य्यादाचार्यपूजार्थं(१) वित्तशाठ्यं विवर्जयेत् ॥ ५४ ॥
तत्पादपादहीना च मूर्त्तिभृद्ब्रह्मजापिनां(२) ।
पूजा स्याज्जापिभिस्तुल्या(३) विप्रदैवज्ञशिल्पिनां ॥ ५५ ॥
वज्रार्कशान्तौ(४) नीलातिनीलमुक्ताफलानि च(५) ।
पुष्पपद्मादिरागश्च वैदूर्य्यं रत्नमष्टमं(६) ॥ ५६ ॥
उशीरमाधवक्रान्तारक्तचन्दनकागुरुं ।
श्रीखण्डं सारिकाकुष्ठं(७) शङ्खिनी ह्यौषधीगणाः(८) ॥ ५७ ॥
हेमताम्रमयं रक्तं राजतञ्च(९) सकांस्यकं ।
शीसकञ्चेति लोहानि हरितालं मनःशिला ॥ ५८ ॥
गैरिकं हेममाक्षीकं पारदो(१०) वह्निगैरिकं ।
गन्धकाभ्रकमित्यष्टौ(११) धातवो व्रीहयस्तथा ॥ ५९ ॥
गोधूमान् सतिलान्माषान्मुद्गानप्याहरेद्यवान् ।
नीवारान् श्यामकानेवं व्रीहयोऽप्यष्ट कीर्त्तिताः ॥ ६० ॥

इत्याग्नेये महापुराणे प्रतिष्ठासामग्री नाम

पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

१ कुर्य्यादाचार्य्यपूजार्थमिति घ० ।
२ मूर्त्तिभृच्छ्रुतजापिनामिति घ० ।
३ पूजाऽस्यात् पितृभिस्तुल्येति घ०, ज० च ।
४ वज्राऽर्ककान्तौ इति ङ०, झ०, च ।
५ नीलाभं नीलमुक्ताफलानि चेति ख० । नीलादिनीलमुक्ताफलानि चेति ग० । नीलाभं नीलं मुक्ताफलानि वेति ज० ।
६ रत्नमष्टकमिति घ०, ङ०, ज० च ।
७ सारिका कुष्ठमिति ख०, झ० च । साविकं कुष्ठमिति ज० ।
८ शङ्खिनीत्योषधीगण इति ङ०, ज० च ।
९ हेमताम्रमयो रङ्गराजतञ्चेति ख० ।
१० पारदे इति ख०, झ च ।
११ गन्धकविकमित्यष्टौ इति घ० ।

# अथ षण्णवतितमोऽध्यायः।

---

## अधिवासनविधिः।

ईश्वर उवाच। स्नात्वा नित्यद्वयं कृत्वा(१) प्रणवार्घकरो गुरुः(२)।
सहायैर्मूर्त्तिपैर्विप्रैः(३) सह गच्छेन्मखालयं॥ १॥
शान्त्यादितोरणांस्तत्र पूर्ववत् पूजयेत् क्रमात्।
प्रदक्षिणक्रमादेषां शाखायां द्वारपालकान्॥ २॥
प्राचि नन्दिमहाकालौ याम्ये भृङ्गिविनायकौ(४)।
वारुणे वृषभस्कन्दौ देवीचण्डौ तथोत्तरे(५)॥ ३॥
तच्छाखामूलदेशस्थौ प्रशान्तशिशिरौ घटौ।
पर्ज्जन्याशोकनामानौ भूतं सञ्जीवनामृतौ(६)॥ ४॥
धनदश्रीप्रदौ(७) द्वौ द्वौ पूजयेदनुपूर्वशः(८)।
स्वनामभिश्चतुर्थ्यन्तैः प्रणवादिनमोन्तगैः॥ ५॥
लोकपह्ववसद्दाःस्थसवन्तीनां(९) द्वयं द्वयं।

---

१ नित्यक्रियां कृत्वेति ङ०।

२ प्रणवार्घ्यकरो मुनिरिति ग०। पुनरर्घ्यकरो मुनिरिति ङ०।

३ सहायैर्ऋत्विग्विप्रैश्चेति ख०, घ० च। सहायैर्भूपतिविप्रैरिति ज०।

४ भृङ्गविनायकाविति ङ०।

५ इषोत्तरे इति ग०, घ०, ङ० च।

६ भूतसञ्जीवनासुतौ इति ङ०। भूतसञ्जीवनामृतौ इति ख०, ज० च।

७ धनदद्विपदौ इति ख०। धनदौ द्विपदौ इति घ०। धनदश्रापदौ इति ज०।

८ पूजयेदथ पूर्वश इति ग०।

९ लोकपह्ववसुद्वाःस्थस्रवन्त्यादीनामिति ग०।

भानुत्रयं युगं वेदो लक्ष्मीर्गणपतिस्तथा(१) ॥ ६ ॥
इति देवामरागारे(२) तिष्ठन्ति प्रतितोरणं ।
विघ्नसङ्घापनोदाय क्रतोः संरक्षणाय च ॥ ७ ॥
वज्रं शक्तिं तथा दण्डं(३) खड्गं पाशं ध्वजं गदां ।
त्रिशूलं चक्रमम्भोजम्पताकास्वर्चयेत्(४) क्रमात् ॥ ८ ॥
ओं क्रूं फट् नमः । ओं क्रूं फट् द्वाःस्थशक्तये क्रूं फट् नमः(५)
इत्यादिमन्त्रैः ।
कुमुदः कुमुदाक्षश्च पुण्डरीकोथ वामनः ।
शङ्कुकर्णः सर्वनेत्रः सुमुखः(६) सुप्रतिष्ठितः ॥ ९ ॥
ध्वजाष्टदेवताः(७) पूज्याः पूर्वादौ(८) भूतकोटिभिः ।
ओं कौं कुमुदाय नम इत्यादिमन्त्रैः ॥ १० ॥
हेतुकं त्रिपुरघ्नञ्च शक्त्याख्यं(९) यमजिह्वकं(१०) ।
कालं करालिनं षष्ठमेकाङ्घ्रिम्भीममष्टकं ॥ ११ ॥
तथैव पूजयेद् दिक्षु क्षेत्रपालाननुक्रमात् ।

---

१ भानुवयं युगं वेदो लक्ष्मीकुलपतिस्तथेति ख०,ग०, ङ०च । भानुत्रययुगं वेदो वेदो लक्ष्मीपतिस्तथेति ज० ।

२ देवामरागारे इति ख०,ग०,घ०, ङ०, ङ० च ।

३ तथा कुण्डमिति ख०, ङ० च । तथा चण्डमिति ज० ।

४ पताकामर्चयेदिति ग० । पताकासु यजेदिति ङ० ।

५ ऊं फट् नमः, ओं ऊं फट् द्वाः स्थशक्तये ऊं फट् नम इति ख० । ओं क्रूं फट् नमः । ओं क्रूं फट् द्वाःस्थशक्तये क्रूं फट् नम इति ङ० । ओं ऊं फट् यक्षाय ऊं फट् नम इति ग० । ओं ऊं फट् वज्राय ऊं फट् नम इति ङ० ।

६ प्रमुख इति ज० ।

७ ध्वजाद्य देवता इति ग० ।

८ पूजादौ इति ङ०, ज० च० ।

९ बुद्धाख्यमिति ग० । बुद्धाख्य मिति ज० ।

१० यजजिह्वकमिति ज० ।

बलिभिः कुसुमैर्धूपैः सन्तुष्टान् परिभावयेत्(१) ॥ १२ ॥
कम्बलास्तृतेषु वर्णेषु वंशस्थूणास्वनुक्रमात्(२) ।
पञ्च च्छित्यादितत्त्वानि सद्योजातादिभिर्यजेत् ॥ १३ ॥
सदाशिवपदव्यापि मण्डपं(३) धाम शाङ्करं ।
पताकाशक्तिसंयुक्तं(४) तत्त्वदृष्ट्यावलोकयेत्(५) ॥ १४ ॥
दिव्यान्तरिक्षभूमिष्ठविघ्नानुत्सार्य्य पूर्ववत् ।
प्रविशेत् पश्चिमद्वारा शेषद्वाराणि दर्शयेत्(६) ॥ १५ ॥
प्रदक्षिणक्रमाद्गत्वा निविष्टोवेदिदक्षिणे ।
उत्तराभिमुखः कुर्य्याद् भूतशुद्धिं यथा पुरा ॥ १६ ॥
अन्तर्य्यागं विशेषार्घ्यं मन्त्रद्रव्यादिशोधनं ।
कुर्व्वीत आत्मनः(७) पूजां पञ्चगव्यादि पूर्ववत् ॥ १७ ॥
साधारङ्कलसन्तस्मिन् विन्यसेत्तदनन्तरं ।
विशेषाच्छिवतत्त्वाय तत्त्वत्रयमनुक्रमात् ॥ १८ ॥
ललाटस्कन्धपादान्तं शिवविद्यात्मकं परं ।
रुद्रनारायणब्रह्मदैवतं निजसञ्चरैः(८) ॥ १९ ॥

---

१ प्रविभावयेदिति ख०, ङ० च ।

२ काचीतृणेषु वर्गेषु वंशे स्थूलानतुक्रमात् इति ख० । काष्ठातृणेषु वर्णेषु वंशे स्थूलानतुक्रमात् इति ङ० । काचीतृणेषु वंशेषु स्थूणास्वन्येष्वनुक्रमात् इति घ० । कचां दृशेश्वरांशे च तृणानन्येष्वनुक्रमादिति ज० । कन्यातृणेषु रत्नेषु वंशेस्थूणामनुक्रमादिति ङ० ।

३ मण्डलमिति ङ० ।

४ पिनाकशक्तिसंयुक्तामिति घ० ।

५ तनु दृष्ट्यावलोकयेदिति ख०, ङ० च ।

६ शेषद्वाराणि चङ्क्रमेदिति ख०, ङ० च । शेषद्वाराणि पूजयेदिति ङ० ।

७ स्वात्मन इति ख०, घ०, ङ०, ज० च ।

८ निजसंवरैरिति ग०, ङ० च । निजसञ्चयैरिति घ० ।

ओं हं हां(१)। मूर्त्तीस्तदीश्वरांस्तत्र पूर्ववद्विनिवेशयेत्।
तद्व्यापकं शिवं साङ्गं शिवहस्तञ्च मूर्द्धनि ॥ २० ॥
ब्रह्मरन्ध्रप्रविष्टेन तेजसा वाह्यसान्तरं(२)।
तमःपटलमाधूय प्रद्योतितदिगन्तरं(३) ॥२१ ॥
आत्मानं मूर्त्तिपैः सार्द्धं स्रग्वस्त्रकुसुमादिभिः(४)।
भूषयित्वा शिवोऽस्मीति ध्यात्वा बोधासिमुद्धरेत् ॥ २२ ॥
चतुष्पदान्तसंस्कारैः(५) संस्कुर्य्यान्मखमण्डपं।
विक्षिप्य विकिरादीनि कुशकूर्चोपसंहरेत्(६) ॥ २३ ॥
आसनीकृत्य वर्द्धन्यां वास्त्वादीन् पूर्ववद्यजेत्।
शिवकुम्भास्त्रवर्द्धन्यौ पूजयेच्च स्थिरासने(७) ॥ २४ ॥
स्वदिक्षु कलशारूढांल्लोकपालाननुक्रमात्।
वाहायुधादिसंयुक्तान् पूजयेद्विधिना यथा ॥ २५ ॥
ऐरावतगजारूढं स्वर्णवर्णं(८) किरीटिनं।
सहस्रनयनं शक्रं वज्रपाणिं विभावयेत् ॥ २६ ॥
सप्तार्च्चिषं च बिभ्राणमक्षमालां कमण्डलुं।
ज्वालामालाकुलं रक्तं(९) शक्तिहस्तमजासनं ॥ २७ ॥

१ उँ हां हां इति ख०, ग० घ०, ङ०, ह० च। ओं ईं आं इति घ०, ञ० च।

२ तेजसा वाह्यमन्तरमिति ख०। तेजसा वाह्याभ्यन्तरमिति ह०। तेजसा वाह्यमान्तरमिति ग०, घ०, ङ० च।

३ प्रविष्टोनुद्दिगन्तरमिति घ०, ञ० च।

४ स्रग्वस्त्रमुकुटादिभिरिति घ०, ञ० च।

५ चतुष्पथाणंसस्कारैरिति ह०।

६ कुशदूर्वोपसंहरेदिति ग०।

७ शिवकुम्भास्त्रवर्द्धन्यां पूजयेदस्थिरासने इति घ०, ञ० च।

८ वर्णवस्त्रमिति ग०। स्वर्णवस्त्रमिति ख०, ञ० च।

९ कालं मालाकुलं रक्तमिति ख० ग०, ङ०, ह० च। कालं मालाकुलं, व्यक्तमिति ग०। ज्वालामालाकुल मक्तमिति घ०।

महिषस्थं दण्डहस्तं यमं कालानलं स्मरेत् ।
रक्तनेत्रं खराक्रूढं(१) खड्गहस्तञ्च नैर्ऋतं ॥ २८ ॥
वरुणं मकरे श्वेतं नागपाशधरं स्मरेत् ।
वायुं च हरिणे नीलं कुवेरं मेषसंस्थितं(२) ॥ २९ ॥
त्रिशूलिनं वृषे चेशं कूर्म्मेऽनन्तन्तु चक्रिणं ।
ब्रह्माणं हंसगं ध्यायेच्चतुर्वक्त्रं चतुर्भुजं ॥ ३० ॥
स्तम्भमूलेषु कुम्भेषु वेद्यां धर्म्मादिकान्(३) यजेत् ।
दिक्षु कुम्भेष्वनन्तादीन् पूजयन्त्यपि केचन ॥ ३१ ॥
शिवाज्ञां श्रावयेत् कुम्भं भ्रामयेदात्मपृष्ठगं(४) ।
पूर्ववत् स्थापयेदादौ कुम्भं तदनु वर्द्धनीं ॥ ३२ ॥
शिवं स्थिरासनं(५) कुम्भे शस्त्रार्थञ्च(६) ध्रुवासनं ।
पूजयित्वा यथापूर्वं स्पृशेदुद्भवमुद्रया ॥ ३३ ॥
निजयागं(७) जगन्नाथ रक्ष भक्तानुकम्पया ।
एभिः संश्राव्य रक्षार्थं कुम्भे खड्गं निवेशयेत्(८) ॥ ३४ ॥
दीक्षास्थापनयोः कुम्भे स्थण्डिले मण्डलेऽथवा ।
मण्डलेऽभ्यर्च्य देवेशं व्रजेद्वै कुण्डसन्निधौ ॥ ३५ ॥
कुण्डनाभिं पुरस्कृत्य निविष्टा मूर्त्तिधारिणः ।
गुरोरादेशतः कुर्य्युर्निजकुण्डेषु(९) संस्कृतिं ॥ ३६ ॥

---

१ शवारूढमिति ग०, घ०, ङ०, ञ० च । ६ शस्त्राणुञ्चेति ख०, ग०, ङ० च ।
२ मानुषस्थितमिति घ० । ७ इमं यागमिति ङ० ।
३ कर्म्मादिकानिति ञ० । ८ शस्त्रन्निवेदयेदिति ग० । खड्गन्निवेदयेदिति घ०, ङ० च ।
४ भ्रामयेदनुपृष्ठतमिति ञ० । भ्रामयेदनुपृष्ठगमिति घ० । ९ कुर्य्युर्निजकुम्भेष्विति ख०, घ०, ङ०, ञ० च ।
५ स्थिरासने इति ख०, घ० च ।

जपेयुर्जापिनः सङ्ख्यं(१) मन्त्रमन्ये तु संहितां(२)।
पठेयुर्ब्राह्मणाः शान्तिं स्वशाखावेदपारगाः॥ ३७॥
श्रीसूक्तं पावमानीश्च(३) मैत्रकञ्च वृषाकपिं।
ऋग्वेदी पूर्वदिग्भागे सर्वमेतत् समुच्चरेत्(४)॥ ३८॥
देवव्रतन्तु भारुण्डं(५) ज्येष्ठसाम रथन्तरं।
पुरुषं गीतिमेतानि सामवेदी तु दक्षिणे॥ ३९॥
रुद्रं पुरुषसूक्तञ्च श्लोकाध्यायं विशेषतः।
ब्राह्मणञ्च यजुर्वेदी पश्चिमायां समुच्चरेत्(६)॥ ४०॥
नीलरुद्रं तथाथर्वी सूक्ष्मासूक्ष्मन्तथैव च।
उत्तरेऽथर्वशीर्षञ्च(७) तत्परस्तु समुद्धरेत्॥ ४१॥
आचार्य्यश्चाग्निमुत्पाद्य प्रतिकुण्डं प्रदापयेत्(८)।
वह्नेः पूर्वादिकान् भागान्(९) पूर्वकुण्डादितः(१०) क्रमात्॥ ४२॥
धूपदीपचरूंश्चैव दद्दीताग्निं समुद्धरेत्(११)।
पूर्ववच्छिवमभ्यर्च्य शिवाग्नौ मन्त्रतर्पणं॥ ४३॥
देशकालादिसम्पत्तौ(१२) दुर्निमित्तप्रशान्तये।

---

१ जापिनोसङ्ख्यमिति क०,ङ०,छ० च। ज० च।
२ स्वस्मन्ये तु संस्थितिमिति ग०। ख-
ान्ये तु सच्चितामिति छ०।
३ पावमानीन्तु इति ज०।
४ सर्वमेतत् समुद्धरेदिति ख०, ग०,
, छ०, ज०, च। सर्वमस्तं समुद्धरेदिति
।
५ भावन्नमिति छ०। श्रीकुण्डमिति
।
६ समुद्धरेदिति ख०, घ०, ङ०, छ०,
७ उत्तरेऽथर्वसूक्तञ्चेति ग०।
८ प्रदीपयेदिति घ०।
९ पूर्वादिदिग्भागादिति ज०। पूर्वादिकाद्भागादिति घ०।
१० सर्वकुण्डादित इति ख०,छ० च।
११ आचार्य्यश्चाग्निमुत्पाद्येत्यादिः, द-
दीताग्निं समुद्धरेदित्यन्तः पाठो ग० पुस्तके नास्ति।
१२ देशकालादिसङ्ख्याप्तौ इति घ०।

होमं कृत्वा तु मन्त्रज्ञः पूर्णां दत्त्वा शुभावहां ॥ ४४ ॥
पूर्ववच्चरुकं कृत्वा प्रतिकुण्डं निवेदयेत्(१)।
यजमानालङ्कृतास्तु व्रजेयुः स्नानमण्डपं ॥ ४५ ॥
भद्रपीठे निधायेशं(२) ताडयित्वावगुण्ठयेत्।
स्नापयेत्(३) पूजयित्वा तु मृदा काषायवारिणा ॥ ४६ ॥
गोमूत्रगोमयेनापि वारिणा चान्तरान्तरा।
भस्मना गन्धतोयेन फडन्तास्त्रेण वारिणा ॥ ४७ ॥
देशिको मूर्त्तिपैः सार्द्धं कृत्वा कारणशोधनं(४)।
धर्मजप्तेन सञ्ज्ञाप्य(५) पीतवर्णेन वाससा ॥ ४८ ॥
सम्पूज्य सितपुष्पैश्च(६) नयेदुत्तरवेदिकां।
तत्र दत्तासनायाञ्च शय्यायां सन्निवेश्य च(७) ॥ ४९ ॥
कुङ्कुमालिप्तसूत्रेण विभज्य गुरुरालिखेत्।
शलाकया सुवर्णस्य अक्षिणी शास्त्रकर्मणा(८) ॥ ५० ॥
अञ्जयेल्लक्ष्मकृत् पश्चाच्छास्त्रदृष्टेन कर्मणा।
कृतकर्मा च शस्त्रेण लक्ष्मी शिल्पी समुत्क्षिपेत्(९) ॥ ५१ ॥
चंशमादर्द्धांय(१०) पादार्द्धादर्द्धया अर्द्धतोथवा(११)।

---

१ निवेशयेदिति ख०, घ० च।
२ भद्रपीठ निधायैनमिति ख०, ङ० च। तत्र पीठे विधायेशमिति ङ०। भद्रपीठे विधायेशमिति घ०।
३ स्नपयेदिति ख०, ग०, ङ० च।
४ कृत्वा चाकारशोधनामिति घ०, ज० च।
५ धर्मजलेन संस्थाप्येति ग०। धर्मजलेन सञ्ज्ञाप्येति ङ०।
६ सम्पूज्य सितवस्त्रैश्चेति ग०। सम्पूज्य सितपुष्पैस्तु इति घ०।
७ सन्निवेशयेदिति ङ०।
८ शास्त्रकर्म्मणेति ख०, ग०, ङ०, ज० च। शास्त्रवर्त्मणेति घ०। शास्त्रकर्म्मणि इति ङ०।
९ समुत्किरेत् इति घ०, ज० च।
१० चंशमादप्यथेति घ०। चंशमादधोथेति ज०।
११ अर्द्धतोपिवेति ग०। अर्द्धतो वरमिति ज०।

सर्वकामप्रसिद्ध्यर्थं शुभं लक्ष्मावतारणं(१) ॥ ५२ ॥
लिङ्गदैर्घ्यविकारांश्च विभक्ते भागवर्ण्णनात्(२)।
विस्तारो लक्ष्म देहस्य भवेल्लिङ्गस्य(३) सर्वतः ॥ ५३ ॥
यवस्य नवभक्तस्य भागैरष्टाभिरावृता(४)।
द्वात्रिंके(५) लक्ष्मरेखा च गाम्भीर्य्याद् विस्तरादपि(६) ॥५४॥
एवमष्टांशवृद्ध्या तु लिङ्गे सार्द्धकरादिके(७)।
भवेदष्टयवा(८) पृथ्वी गम्भीरात्र च हास्तिके ॥ ५५ ॥
एवमष्टांश वृद्ध्यातु लिङ्गे सार्द्धकरादिके।
भवेदष्टयवा पृथ्वी गम्भीरान्नवहास्तिके(९) ॥ ५६ ॥
शाम्भवेषु(१०) च लिङ्गेषु पादवृद्धेषु सर्वतः(११)।
लक्ष्म देहस्य विष्कम्भो भवेद्वै यववर्द्धनात् ॥ ५७ ॥
गम्भीरत्वपृथुत्वाभ्यां रेखापि त्र्यंशवृद्धितः(१२)।
सर्वेषु च भवेत् सूक्ष्मं लिङ्गमस्तकमस्तकं ॥ ५८ ॥

१ लक्ष्मावतारकमिति घ०।

२ विभुक्ते भाववर्णनादिति क०। विभक्ते भागवर्जनादिति घ०। विभक्ते भागवर्जनादिति ज०। विभुक्ते भागवर्त्तनादिति ङ०। विभक्ते भाववर्णनादिति ञ०।

३ भवेल्लिङ्गेषु सर्वत इति ख०, ग०, ङ०, ञ० च।

४ नवभक्तस्य भागैरष्टाभिरावृतेति ख०, ञ० च। भवभक्तस्य भागैरष्टाभिरावृतेति ज०। नवभक्तस्य भागैरष्टाभिरावृतेति घ०।

५ द्वास्तिके इति ग०, घ० च।

६ गम्भीरा नवहास्तिके इति घ०।

७ लिङ्गे द्व्यद्धिकरादिके इति ख०। लिङ्गेषु द्विकरादिषु इति ग०। लिङ्गे द्व्यद्धिकरादिषु इति ख०, घ० च।

८ भवेदष्टकरेति घ०।

९ गम्भीरा नवहास्तिके इति ग०। गम्भीरा नवहस्तके इति ज०।

१० सोत्तरेषु इति ज०।

११ यवस्य नवभक्तस्येत्यादिः। पादवृद्धेषु सर्वत इत्यन्तः पाठो ङ० पुस्तके नास्ति।

१२ द्व्यंशवृद्धितेति ख०, घ०, ञ० च। च त्र्यंशवृद्धितेति ङ०। द्व्यंशवृद्धित इति ज०।

लक्ष्मदेवे द्विधाभक्ते मूर्द्धभागद्वये शुभे(१) ।
षड्भागपरिवर्त्तेन मुक्त्वा भागद्वयन्त्वधः(२) ॥ ५८ ॥
रेखात्रयेण सम्बद्धं(३) कारयेत् पृष्ठदेशगं ।
रत्नजे लक्षणोद्धारो यवौ हेमसमुद्भवे ॥ ६० ॥
स्फुटं लक्षणकेषां प्रभा रत्नेषु निर्मला ।
नयनोन्मीलनं वक्त्रे(४) सान्निध्याय च लक्ष्म तत् ॥ ६१ ॥
लक्ष्मणोद्धाररेखाश्च घृतेन मधुना तथा ।
मृत्युञ्जयेन(५) सम्पूज्य शिल्पिदोषनिवृत्तये ॥ ६२ ॥
अर्च्चयेच्च(६) ततो लिङ्गं स्नापयित्वा मृदादिभिः ।
शिल्पिनन्तोषयित्वा तु दद्याद्गां गुरवे ततः ॥ ६३ ॥
लिङ्गं धूपादिभिः प्रार्च्य गायेयुर्भर्तृगास्त्रियः ।
सव्येन चापसव्येन सूत्रेणाथ कुशेन वा ॥ ६४ ॥
स्पृष्ट्वा च रोचनं दत्वा कुर्यान्निर्मञ्जनादिकं(७) ।
गुडलवणधान्याकदानेन विसृजेच्च ताः ॥ ६५ ॥
गुरुमूर्त्तिधरैः(८) सार्द्धं हृदा वा प्रणवेन वा ।
मृत्स्नागोमयगोमूत्रभस्मभिः(९)सलिलान्तरं ॥ ६६ ॥
स्नापयेत् पञ्चगव्येन पञ्चामृतपुरःसरं(१०) ।

---

१ मूर्त्तिभागद्वये च्युते इति ज० । मूर्त्तिभागद्वये युते इति ज० ।

२ मुक्त्वा भागद्वयं बुध इति ख०, ग०, घ०, ङ०, छ० च ।

३ संसिद्धमिति ग०, ज० च ।

४ व्यक्ते इति ग०, घ०, ज० च ।

५ मृत्युञ्जयश्चेति ग० ।

६ अर्च्चयेत् इति ग०, ज० च ।

७ पुष्पावरोधनं दत्वा कुर्यान्निर्मन्थनादिकमिति ज० । स्पृष्ट्वा च रोचनां दत्वा कुर्यात् निर्मञ्जनादिकमिति ङ० ।

८ गुरुमूर्त्तिर्यवैरिति ख०, ङ०, ज० च ।

९ ततो स्वर्णमयगोमूत्रभस्मभिरिति ग० ।

१० स्नापयेदित्यर्द्धश्लोको ङ० पुस्तके नास्ति ।

विरूक्षणं कषायैश्च सर्वौषधिजलेन वा ॥ ६७ ॥
शुभ्रपुष्पफलस्वर्णरत्नशृङ्गयवोदकैः(१) ।
तथा धारासहस्रेण दिव्यौषधिजलेन च(२) ॥ ६८ ॥
तीर्थोदकेन गाङ्गेन चन्दनेन च वारिणा ।
क्षीरार्णवादिभिः(३) कुम्भैः शिवकुम्भजलेन च(४) ॥ ६९ ॥
विरूक्षणं विलेपञ्च(५) सुगन्धैश्चन्दनादिभिः ।
सम्पूज्य ब्रह्मभिः(६) पुष्पैर्वर्मणा रक्तचीवरैः(७) ॥ ७० ॥
रक्तरूपेण(८) नीराज्य रक्षातिलकपूर्वकं ।
घृतौघैर्जलदुग्धैश्च कुष्माद्यैरर्घ्यसूचितैः ॥ ७१ ॥
द्रव्यैः स्तुत्यादिभिस्तुष्टमर्चयेत्(९) पुरुषात्मना(१०) ।
समाचम्य(११) हृदा देवं ब्रूयादुत्थीयतां प्रभो ॥ ७२ ॥
देवं ब्रह्मरथेनैव क्षिप्रं द्रव्याणि तर्पयेत्(१२) ।
मण्डपे पश्चिमद्वारे शय्यायां विनिवेशयेत् ॥ ७३ ॥
शक्त्यादिशक्तिपर्य्यन्ते(१३) विन्यसेदासने शुभे ।

---

१ क्षोद्रपुष्पफलस्वर्णरत्नशृङ्गयवोदकैरिति ग० ।

२ दिव्यौषधिजलेन वा इति ग० ।

३ क्षारार्णवादिभिरिति ङ०, ञ०, ज० च ।

४ सरः कुम्भजलेन तु इति ज० ।

५ विकषणं विलेपञ्चेति घ०, ज० च ।

६ बहुभिरिति ज० ।

७ ब्रह्मणा रक्तचन्दनैरिति ग० । ब्रह्मणा रक्तजीवकैरिति ङ० ।

८ बहुरूपेण इति ग०, घ०, ज० च ।

९ स्तुत्यादिभिस्तुत्यमर्घयेदिति ख०, ञ० च ।

१० पुरुषात्मनेति ख०, ग०, घ०, ञ० च ।

११ समाचर्येति ग० ।

१२ तर्पयेदिति ख०, ञ० च ।

१३ शक्त्यादिमूर्त्तिपर्य्यन्ते इति ख०, घ०, ज० च ।

पश्चिमे पिण्डिकान्तस्य न्यसेद्ब्रह्मशिलान्तदा(१) ॥ ७४ ॥
शस्त्रमस्त्र(२) शतालञ्च निद्राकुम्भध्रुवासनं(३)।
प्रकल्प्य शिवकोणे च दत्वार्घ्यं हृदयेन तु ॥ ७५ ॥
उत्थाप्योत्क्षासने लिङ्गं शिरसा पूर्वमस्तकं।
समारोप्य न्यसेत्तस्मिन् (४) स्रष्ट्रा धर्मादिवन्दनं(५) ॥ ७६ ॥
दद्याद्धूपञ्च सम्पूज्य तथा वासांसि वर्मणा।
गन्धोपहृतिनैवेद्यं हृदा दद्यात् स्वशक्तितः(६) ॥ ७७ ॥
घृतक्षौद्रयुतं पात्रमभ्यङ्गाय पदान्तिके।
देशिकस्य स्थितस्तत्र षट्त्रिंशत्तत्त्वसञ्चयं(७)॥ ७८ ॥
शक्त्यादिभूमिपर्य्यन्तं स्वतत्त्वाधिपसंयुतं।
विन्यस्य पुष्पमालाभिस्त्रिखण्डं(८) परिकल्पयेत् ॥ ७९ ॥
मायापदेशशक्त्यन्तन्तुर्य्यांशाद्यांशवर्त्तु लं(९)।
तत्रात्मतत्त्वविद्याख्यं(१०) शिवं सृष्टिक्रमेण तु(११) ॥ ८० ॥
यकशः प्रतिभागेषु ब्रह्मविष्णुहराधिपान्।
विन्यस्य मूर्त्तिमूर्त्तीशान् पूर्वादिक्रमतो यथा ॥ ८१॥
क्ष्मावह्नियजमानार्क्कजलवायुनिशाकरान्।

---

१ ब्रह्मशिलान्तथेति ख०, ङ०, छ०, ज० नास्ति। घ

२ शस्त्रमन्त्रेति ख०, ग०, घ०, ङ०, छ० घ

३ निद्राकुम्भ ध्रुवासनमिति ज०।

४ न्यसेदस्मिन्निति ज०।

५ स्रष्ट्रा धर्मादिबन्धनमिति ख०। स्र-ष्ट्रादिरर्घ्यादिबन्धनमिति छ०।

६ गन्धोपहृतीत्यर्द्धश्लोको ग० पुस्तके

७ षडलिङ्गतनुसञ्चयमिति ज०। षड्-विंशतत्त्वसञ्चयमिति घ०।

८ त्रिपुटकमिति ग०।

९ मायाशादशशक्त्यन्तर्तूर्या याद्या प्रवर्त्तनमिति ज०। मायापदेशेति अर्द्धश्लो-को घ० पुस्तके नास्ति।

१० तत्रानुतत्त्वविध्याख्यमिति ज०।

११ सृष्टिक्रमेण चेति ग०।

आकाशमूर्त्तिरूपांस्तान् न्यसेत्तदधिनायकान् ॥ ८२ ॥
सर्वं पशुपतिं(१) चोग्रं रुद्रं भवमथेश्वरं(२) ।
महादेवञ्च भीमञ्च मन्त्रास्तद्वाचका इमे ॥ ८३ ॥
लवशषचयसाश्च हकारश्च त्रिमात्रिकः ।
प्रणवो हृदयाणुर्वा मूलमन्त्रोऽथवा क्वचित् ॥ ८४ ॥
पञ्चकुण्डात्मके यागे(३) मूर्त्तीः पञ्चाथवा न्यसेत् ।
पृथिवीजलतेजांसि वायुमाकाशमेव च ॥ ८५ ॥
क्रमात्तदधिपान् पञ्च(४) ब्रह्माणं धरणीधरं ।
रुद्रमीशं सदाख्यञ्च सृष्टिन्यायेन मन्त्रवित्(५) ॥ ८६ ॥
मुमुक्षोर्वा निवृत्ताद्याः(६) अजाताद्यास्तदीश्वराः(७) ।
त्रितत्त्वं वाथ(८) सर्वत्र न्यसेद्व्याप्यात्मकारणं(९) ॥ ८७ ॥
शुद्धे चात्मनि विद्येशा अशुद्धे लोकनायकाः ।
द्रष्टव्या मूर्त्तिपाश्चैव भोगिनो मन्त्रनायकाः ॥ ८८ ॥
पञ्चविंशत्तथैवाष्टपञ्चत्रीणि यथाक्रमं ।
यष्टान्तत्त्वं तदीशानामिन्द्रादीनां ततो(१०) यथा ॥ ८९ ॥

ओं हां शक्तितत्त्वाय नम इत्यादि(११)। ओं हां शक्तितत्त्वाधिपाय(१२) नम इत्यादि। ओं हां क्ष्मामूर्त्तये नमः। ओं हां क्ष्मामूर्त्त्यधीशाय(१३)

१ गर्भे पशुपतिमिति ज० ।
२ भवमथेश्वरमिति ग०, ङ०, ज० च ।
३ पञ्चदण्डात्मके मार्गे इति ज०, । पञ्चदण्डात्मके यागे इति ङ० ।
४ तदधिपांस्तथेति ख० ।
५ सृष्टिन्यासेन मन्त्रविदिति ख०, घ०, ङ० च । सृष्टिन्यासेन पूर्ववदिति ज० ।
६ मुमुक्षोर्निवृत्ताद्या इति ख० ।
७ अजाताद्यास्तदीश्वरा इति ख० ।
८ वितत्त्वं चाथेति घ०, ज० च० ।
९ व्याप्यात्मकारणमिति ख० । व्याप्यात्मकारणमिति घ०, ङ० च ।
१० इन्द्रादीशान्तत इति ख०, घ०, ङ०, ज० च ।
११ नम इतीति घ०, ज० च ।
१२ शक्तितत्त्वाधिपतये इति ख०, घ०, ङ०च० ।
१३ क्ष्मामूर्त्तये इति घ० ।

शिवाय नम इत्यादि । ओं ह्रां पृथिवीमूर्त्तये नमः । ओं ह्रां मूर्त्त्यधिपाय(१) ब्रह्मणे नम इत्यादि । ओं ह्रां शिवतत्त्वाधिपाय(२) रुद्राय नम इत्यादि ।

नाभिकन्दात्समुच्चार्य्य घण्टानादविसर्प्पणं(३) ।
ब्रह्मादिकारणत्यागाद् द्वादशान्तसमाश्रितं ॥ ९० ॥
मन्त्रञ्च मनसा भिन्नं प्राप्तानन्दरसोपमं ।
द्वादशान्तात्समानीय निष्कलं(४) व्यापकं शिवं ॥ ९१ ॥
अष्टत्रिंशत्कलोपेतं सहस्रकिरणोज्ज्वलं ।
सर्वशक्तिमयं साङ्गं ध्यात्वा लिङ्गे(५) निवेशयेत् ॥ ९२ ॥
जीवन्यासो भवेदेवं लिङ्गे सर्वार्थसाधकः ।
पिण्डिकादिषु तु न्यासः(६) प्रोच्यते साम्प्रतं यथा ॥ ९३ ॥
पिण्डिकाञ्च कृतस्नानां(७) विलिप्ताञ्चन्दनादिभिः ।
सद्वस्त्रैश्च समाच्छाद्य(८) रन्ध्रे च भगलक्षणे ॥ ९४ ॥
पञ्चरत्नादिसंयुक्तां(९) लिङ्गस्योत्तरतः स्थितां ।
लिङ्गवत्कृतविन्यासां(१०) विधिवत्सम्प्रपूजयेत् ॥ ९५ ॥
कृतस्नानादिकान्तत्र लिङ्गमूले शिलां(११) न्यसेत् ।
कृतस्नानादिसंस्कारं शक्त्यन्तं वृषभं तथा ॥ ९६ ॥

---

१ पृथिवीमूर्त्त्यधिपतये इति ख० । पृथिवीमूर्त्त्यधिपायेति ज०, घ० च ।

२ शिवतत्त्वायेति ज० ।

३ घण्टानादविसर्पिणमिति घ०, ज० च ।

४ निष्फलमिति ख०, घ०, ङ० च ।

५ लिङ्गमिति ग०, घ०, ज० च ।

६ विन्यास इति ग० ।

७ कृतस्नातामिति ख०, घ०, ज०च ।

८ सद्वस्त्रैः सादमासाद्येति ज० ।

९ यवरत्नादिसंयुक्तामिति घ० ज०च ।

१० लिङ्गवत्कृतविन्यासमिति ख० ङ० च ।

११ कृतस्नानादिकां तद्वल्लिङ्गमूले शिलामिति । ख०, घ०, ङ० च । कृतस्नानादिकं तद्वल्लिङ्गमूले शिवामिति ज०

प्रणवपूर्वं ह्रूं पूं क्षौं(१) मध्यादनयतमेन च ।
क्रियाशक्तियुतां पिण्डीं शिलामाधाररूपिणीं ॥ ९७ ॥
भस्मदर्भतिलैः कुर्य्यात् प्राकारत्रितयन्ततः ।
रक्षायै लोकपालांश्च सायुधान्याजयेद्बहिः(२) ॥ ९८ ॥

ओं ह्रूं क्षूं(३) क्रियाशक्तये नमः । ओं ह्रूं क्षां हः(४) महागौरी रुद्रदयिते स्वाहेति च(५) पिण्डिकायां । ओं ह्रां(६) आधारशक्तये नमः । ओं ह्रां वृषभाय नमः ।

धारिका दीप्तिमत्युग्रा ज्योत्स्ना चैता बलोत्कटाः ।
तथा धात्री विधात्री च न्यसेद्वा पञ्चनायिकाः ॥ ९९ ॥
वामा ज्येष्ठा क्रिया ज्ञाना(७) वेधा तिस्रोथवा न्यसेत् ।
क्रियाज्ञाना तथेच्छा च(८) पूर्ववच्छान्तिमूर्त्तिषु ॥ १०० ॥
तमी मोहा क्षमी निष्ठा मृत्युर्मायाभवज्वराः(९) ।
पञ्च चाथ महामोहा घोरा च त्रितयज्वरा ॥ १०१॥

---

१ प्रणवं पूर्वं ह्रूं प्रीं ह्रौं इति ख० । प्रणवपूर्वं ह्रूं सूं इति ग० । प्रणवपूर्वं क्रूं मूं क्षौं क्षौं इति क० । प्रणवं पूर्वंह्रूं खौं मूं ह्रौं इति घ० । प्रणवपूर्वं ह्रूं मुं ह्रूं इति ञ० ।

२ सायुधान् पूजयेत्तत इति ख०, क० च । सायुधान् पूजयेद्बहिरिति ग०, ङ० च । सायुधांश्च त्यजेद्बहिरिति घ० । सायुधान्याजयेद्बहिरिति ञ० ।

३ ओं ह्रूं ह्रौं इति ग०, ङ० च । ओं ह्रौं इति घ० । ओं ह्रौं ह्रौं म इति ग० ।

४ ओं ह्रूं ह्रौं म इति ख० । ओं क्षां ह्रौं म इति घ० । ओं ह्रीं ह्रौं म इति ग० । ओं ह्रौं म इति घ०, ङ० च ।

५ स्वाहेति ख०, ग०, ङ०, क० च ।

६ ओं ह्रौं इति ख०, ग०, ङ०, क० च ।

७ क्रिया मेधेति ङ० ।

८ तथैवेच्छेति ङ० ।

९ तमा मोहा क्षमा निष्ठा मृत्युर्माय भया ज्वरेति ख० । उमा मोहा क्षमा नित्या मृत्युर्मायाभयाज्वरा इति ञ० ।

तिस्रोऽथवा क्रियाज्ञाना(१) तथा बाधाधिनायिका ।
आत्मादिषिषु(२) तत्त्वेषु तीव्रमूर्त्तिषु विन्यसेत् ॥ १०२ ॥
अत्रापि पिण्डिका ब्रह्मशिलादिषु यथाविधि ।
गौर्य्यादिसंवरैरेव(३) पूर्ववत् सर्वमाचरेत्(४) ॥ १०३ ॥
एवं विधाय विन्यासं गत्वा कुण्डान्तिकं ततः ।
कुण्डमध्ये महेशानं मेखलासु महेश्वरं ॥ १०४ ॥
क्रियाशक्तिं तथान्यासु नादमोष्ठे च(५) विन्यसेत् ।
घटं स्थण्डिलवह्नीशैः(६) नाडीसन्धानकन्ततः(७) ॥ १०५ ॥
पद्मतन्तुसमां शक्तिमुद्घातेन समुद्यतां(८) ।
विशन्ती सूर्य्यमार्गेण निःसरन्तीं समुद्भूतां(९) ॥ १०६ ॥
पुनश्च शून्यमार्गेण(१०) विशतीं स्वस्य चिन्तयेत् ।
एवं सर्वत्र सन्धेयं मूर्त्तिपैश्च परस्परं ॥ १०७ ॥
सम्पूज्य धारिकां शक्तिं कुण्डे सन्तर्प्य च क्रमात् ।
तत्त्वतत्त्वेश्वरा मूर्त्तीर्मूर्त्तीशांश्च(११) घृतादिभिः(१२) ॥ १०८ ॥
सम्पूज्य तर्पयित्वा तु सन्निधौ संहितागुभिः(१३) ।

---

१ क्रियाज्ञानीति ग०, घ० च ।

२ आज्ञादिविषु इति घ० ।

३ गौर्य्यादिसम्बरैरेवेति घ०, ज० च ।

४ पूर्ववत् सर्वमर्चयेदिति ख०, ङ० च । पूर्व-वच-समाचरेदिति ज० । न्यासं पूर्ववदाचरे स दिति ङ० ।

५ नादमध्ये चेति ज० ।

६ घटं स्थण्डिलवर्गीशैरिति ख०, ङ० च ।

७ नाडीसन्धारकं तत इति ज० ।

८ सत्तत्त्वेश्वरा मूर्त्तिः स्वर्गा तेन समुद्यतामिति ख०, ङ० च । पद्म-तन्तुसमां शक्तिं स्वधा तेन समुद्यतामिति ङ० ।

९ समुद्गमानिति ज० ।

१० सूर्य्यमार्गेणेति ङ० ।

११ मूर्त्तिमूर्त्तीशांसेति ज० ।

१२ घटस्थण्डिलेत्यादिः, घृताभिरित्यन्तः पाठो घ० पुस्तके नास्ति ।

१३ संहितात्मभिरिति ख० । सहितात्मभिरिति ति ङ० । संघटाणुभिरिति ज० ।

शतं सहस्रमर्द्धं वा पूर्णया सह होमयेत्(१) ॥ १०९ ॥
तत्त्वतत्त्वेश्वरा मूर्त्तिमूर्त्तीशांश्च करेणुकान्(२)।
तथा सन्तर्प्य सान्निध्ये जुहुयुर्मूर्त्तिपा अपि ॥ ११० ॥
ततो ब्रह्मभिरङ्गैश्च(३) द्रव्यकालानुरोधतः।
सन्तर्प्य शक्तिं कुम्भाम्भःप्रोक्षिते(४) कुशमूलतः ॥ १११ ॥
लिङ्गमूलं च संस्पृश्य(५) जपेयुर्होमसङ्ख्यया।
सन्निधानं हृदा कुर्य्युर्वर्म्मणा चावगुण्ठनं ॥ ११२ ॥
एवं संशोध्य ब्रह्मादि(६) विष्ण्वन्तादि विशुद्धये।
विधाय पूर्ववत्सर्वं होमसङ्ख्याजपादिकम् ॥ ११३ ॥
कुशमध्याग्रयोगेन लिङ्गमध्याग्रकं स्पृशेत्।
यथा यथा च सन्धानं तदिदानीमिहोच्यते ॥ ११४ ॥
ओँ हाँ हँ ओँ ओँ ओँ एँ ओँ भूँ भूँ वाह्यमूर्त्तये नमः (७)।

---

१ एवं विधायेत्यादिः, पूर्णया सह होमयेदित्यन्तः सप्तश्लोकात्मकः पाठो ग० पुस्तके नास्ति।

२ मूर्त्तिपांश्च करेणुकान् इति घ०, ङ० च।

३ ब्रह्मभिरंशैश्चेति ख०, घ० च। ब्रह्मभिरङ्गैश्चेति ङ०, ञ० च।

४ सन्तर्प्य शक्तिकुम्भाम्भःप्रोक्षिते इति क०। सन्तर्प्य शान्तिकुम्भस्थैः प्रोक्षिते इति ञ०। सन्तर्प्य शान्तिकुम्भाम्भः प्रोक्षिते इति घ०।

५ समूज्येति ख०, ङ० च।

६ ब्रह्मादीनिति ख०, ग०, घ०, ङ० च।

७ ओँ हाँ हाँ ओं ओं ओँ वाँ ओं भूं भूं वास्तुमूर्त्तये नम इति ख०, ङ० च। ओं हां ओं हां ओं ओं वा ओं भुं हां वां व्याममूर्त्तये नम इति ञ०। घ० पुस्तके भूं भूं वां, इति विशेषः। ओं हां हां ओं ओं वां ओं ओं ह्रूं ह्रूं वाह्यमूर्त्तये नम इति ङ०।

ओं हाँ वाँ आँ ओँ आँ घाँ ओँ भूँ भूं वाँ(१) वह्निमूर्त्तये नमः।
एवञ्च यजमानादिमूर्त्तिभिरभिसन्धयं(२)।
पञ्चमूर्त्त्यात्मकेऽप्येवं सन्धानं हृदयादिभिः॥ ११५ ॥
मूलेन स्वयवेजैवा ज्ञेयन्तत्त्वत्रयात्मके(३)।
शिलापिण्डो ह्वषेष्वेवं पूर्णाच्छिन्नं सुसंवरैः(४)॥ ११६ ॥
भागाभागविशुद्धार्थं होमं कुर्य्याच्छतादिकं(५)।
न्यूनादिदोषमोषाय शिवेनाष्टाधिकं शतं॥ ११७ ॥
ऊत्वाथ(६) यत् कृतं कर्म्म शिवश्रोत्रे(७) निवेदयेत्।
एतत्समन्वितं(८) कर्म त्वच्छक्तौ च मया प्रभो॥ ११८॥
ओं नमो भगवते रुद्राय रुद्र नमोऽस्तुते(९)।
विधिपूर्णमपूर्णं वा स्वशक्त्यापूर्य्य(१०) गृह्यतां॥ ११९॥
ओं क्रों(११) शाङ्करि पूरय(१२) स्वाहा इति पिण्डिकायां।
अथ लिङ्गे न्यसेज् ज्ञानी क्रियाख्यं पीठविग्रहे॥ १२०॥
आधाररूपिणीं शक्तिं न्यसेद् ब्रह्मशिलोपरि।
निबध्य(१३) सप्तरात्रं वा पञ्चरात्रं त्रिरात्रकं॥ १२१॥

---

१ ओं चां चां वां ओं ओं वां ओं भूं भूं वां इति ख०, ग०, छ० च। ओं हां हां वां ओं ओं वां ओं ओं ओं वां हूं हूं वां इति ज०। ओं ओं हां वां ओं ओं ओं वां ओं हूं हूं इति ङ०।

२ मूर्त्तिभिरपि सन्धेयमिति घ०, ज० च।

३ ज्ञेयं तत्तु त्रयात्मकमिति ख०, छ० च। ह्येयं तत्र त्रयात्मके इति ङ०।

४ पूर्णाच्छिन्नात्मसंवरैरिति ख०, छ० च। पूर्णाच्छिन्नं स्वसंवरैरिति ङ०।

५ शताधिकमिति ग०, घ० च।

६ स्तुत्वाथेति ङ०।

७ शिवाग्रे तदिति ङ०।

८ समर्पितमिति ख०, घ०, ज० च।

९ रुद्राय रुद्रो रुद्र नमोऽस्तु ते इति ङ०, ज० च।

१० स्वशक्त्यापूर्य्येति ख०, छ० च।

११ ओं हूं इति घ०।

१२ पूजयेति ख०, छ०, ङ० च।

१३ निरुध्येति ख०, ज०, ङ० च।

एकरात्रमथो वापि यद्वा सद्योधिवासनं(१)।
विनाधिवासनं यागः कृतोऽपि न फलप्रदः॥ १२२॥
स्वमन्त्रैः प्रत्यहं देयमाहुतीनां शतं शतं।
शिवकुम्भादिपूजाश्च दिग्बलिश्च निवेदयेत्॥ १२३॥
गुर्वादिसहितो वासो(२) रात्रौ नियमपूर्वकम्।
अधिवासः स वसतेवधेर्भावः समीरितः॥ १२४॥

इत्याग्नेये महापुराणे अधिवासनविधिर्नाम
षण्णवतितमोऽध्यायः।

---

## अथ सप्तनवतितमोऽध्यायः।

### शिवप्रतिष्ठाकथनं।

ईश्वर उवाच। (३)प्रातर्नित्यविधिं कृत्वा द्वारपालप्रपूजनं।
प्रविश्य प्राग्विधानेन देहशुद्ध्यादिमाचरेत्॥ १॥
दिक्पतींश्च समभ्यर्च्य शिवकुम्भञ्च वर्द्धनीं।

---

१ सत्याधिवासनमिति ज०।
२ दीक्षान्तञ्च समभ्यर्च्येति ज०।
३ वासुदेव दयाशील लीलया मां समुद्धर। धरोद्धारे समर्थोऽसि ममोद्धारे कियाक्रमः॥ इति श्लोकौ ख०, ङ०, पुस्तकेऽधिकोऽस्ति।

अष्टमुष्टिकया(१) लिङ्गं वन्हिं सन्तर्प्य च क्रमात् ॥ २ ॥
शिवाज्ञातस्ततो गच्छेत् प्रासादं शस्त्रमुच्चरन्(२)।
तद्गतान् प्रक्षिपेद्विघ्नान् ऊम्फडन्तशराणुना(३) ॥ ३ ॥
न मध्ये स्थापयेल्लिङ्गं वेधदोषविशङ्कया।
तस्मान्मध्यं परित्यज्य यवार्द्धेन यवेन वा ॥ ४ ॥
किञ्चिदीशानमाश्रित्य शिलां मध्ये निवेशयेत्।
मूलेन तामनन्ताख्यां सर्वाधारस्वरूपिणीं(४) ॥ ५ ॥
सर्वगां सृष्टियोगेन विन्यसेदचलां शिलां।
अथवानेन मन्त्रेण शिवस्यासनरूपिणीं ॥ ६ ॥
ओंनमो व्यापिनि भगवति स्थिरेऽचले ध्रुवे।
ह्रं लं ह्रीं स्वाहा(५)। त्वया शिवाज्ञया शक्ते स्थातव्यमिह सन्ततं॥७॥
इत्युक्त्वा च समभ्यर्च्य(६) निरुध्याद्रोधमुद्रया(७)।
वज्रादीनि च रत्नानि तथोशीरादिकौषधीः ॥ ८ ॥
लोहान् हेमादिकांस्यान्तान् हरितालादिकांस्तथा।
धान्यप्रभृतिशस्यांश्च पूर्वमुक्ताननुक्रमात् ॥ ९ ॥
प्रभारागत्वदेहत्ववीर्य्यशक्तिमयानिमान्(८)।
भावयन् कचित्तस्तु लोकपालेशसंवरैः(९) ॥ १० ॥
पूर्वादिषु च गर्त्तेषु(१०) न्यसेदेकैकशः क्रमात्(११)।

---

१ अष्टपुष्पियेति ख०, घ०, ङ० च। अष्टपुष्पिकयेति ग०, ङ० च। अष्टपुष्टिकया इति ज०।

२ प्रासादमस्त्रमुच्चरन् इति ख०, ङ० च। प्रासादं शास्त्रमुच्चरन्निति ग०, ज० च।

३ ऊं फडन्तशिवात्मनेति ख०, ग० ङ०, च। ऊं फडन्तशिवाणुनेति ज०।

४ सर्वाधारस्वरूपिणीमिति ज०।

५ ह्रं लं ह्रं स्वाहेति ख०, ङ० च। ओं ह्रां लं हां स्वाहेति ज०।

६ इत्युक्त्वा तं समभ्यर्च्येति ख०, ङ० च। इत्युत्सृष्टं समभ्यर्च्येति ग०। इत्युक्त्वाद्यं समभ्यर्च्येति ङ०।

७ विरुध्याद्रोधमुद्रयेति ख, ग०, ङ० च।

८ वीर्यशक्तिमनुक्रमादिति घ०।

९ लोकपालेशसम्बरैरिति घ०।

१० पूर्वादिवत् स्वगर्त्तेषु इति ङ०।

११ प्रभारागेत्यादि; न्यसेदेकैकशः क्रमादिति पाठः, ङ पुस्तके नास्ति।

हेमजं तारजं कूर्म्मं वृषं वा द्वारसम्मुखं(१) ॥ ११ ॥
सरित्तटमृदा युक्तं पर्व्वताग्रमृदाथवा(२)।
प्रक्षिपेन्मध्यगर्त्तादौ(३) यद्वा मेरुं सुवर्णजं ॥ १२ ॥
मधूकाक्षतसंयुक्तमञ्जनेन समन्वितं।
पृथिवीं राजतीं यद्वा यद्वा हेमसमुद्भवां ॥ १३ ॥
सर्व्वबीजसुवर्णाभ्यां समायुक्तां विनिक्षिपेत्(४)।
स्वर्णजं राजतं वापि सर्व्वलोहसमुद्भवं(५) ॥ १४ ॥
सुवर्णं क्षुरयुक्तं पद्मनालं(६) ततो न्यसेत्।
देवदेवस्य शक्त्यादिमूर्त्तिपर्य्यन्तमासनं ॥ १५ ॥
प्रकल्प्य पायसेनाथ लिप्त्वा(७) गुग्गुलुनाथवा।
श्वभ्रमाच्छाद्य वस्त्रेण तनुत्रेणास्त्ररक्षितं(८) ॥ १६ ॥
दिक्पतिभ्यो बलिं(९) दत्वा समाचान्तोऽथ देशिकः।
शिवेन वा शिलाश्वभ्रसङ्गदोषनिवृत्तये(१०) ॥ १७ ॥
शास्त्रेण वा घृतं सम्यग् जुहुयात् पूर्णया सह।

१ द्वारसम्पुटमिति ग०।
२ मृदा पुन इति ग०।
३ मध्यगर्त्तायामिति ख०, घ०, ङ० च।
४ मधूकाक्षतेत्यादिः, विनिक्षिपेदित्यन्तः पाठो ग० पुस्तके नास्ति।
५ सर्व्वलोहसमन्वितमिति ग०।
६ पद्मधान्यमिति ख०, ग० च।
७ लिप्ते ति घ०, ङ० च।
८ श्वभ्रमाच्छाद्य वस्त्रेण तन्मात्रेण स्वरक्षितमिति ख०, ङ० च। यन्त्रमाच्छाद्य शस्त्रेण तनुत्रेण स्वरक्षितमिति ज०। श्वभ्रेत्यादिपाठो ग० पुस्तके नास्ति।
९ दिक्पालादिभ्यो बलिमिति ङ०।
१० शिलाक्षत सङ्गदोषनिवृत्तये इति घ०, ज० च। शिलाश्वभ्रसङ्गदोषनिवृत्तये इति ख०, ङ० च।

एकैकाहुतिदानेन सन्तर्प्य वास्तुदेवताः ॥ १८ ॥
समुत्थाप्य हृदादेवमासनं मङ्गलादिभिः ।
गुरुर्द्वाग्रतो गच्छेन्मूर्त्तिपैश्च दिशि स्थितैः(१) ॥ १९ ॥
चतुर्भिः सह कर्त्तव्या देवयानस्य(२) पृष्ठतः ।
प्रासादादि(३) परिभ्रम्य भद्राख्यद्वारसम्मुखं ॥ २० ॥
लिङ्गं संस्थाप्य दत्वार्घ्यं प्रासादं सन्निवेशयेत्(४) ।
द्वारेण द्वारबन्धेन द्वारदेशेन तच्छिला ॥ २१ ॥
द्वारबन्धे शिखाशून्ये तदर्द्धेनाथ तद्गते(५) ।
वर्जयन्(६) द्वारसंस्पर्शं द्वारेणैव महेश्वरं ॥ २२ ॥
देवगृहसमारम्भे कोणेनापि प्रवेशयेत् ।
अयमेव विधिर्ज्ञेयो व्यक्तलिङ्गेऽपि सर्वतः ॥ २३ ॥
गृहे प्रवेशनं द्वारे लोकैरपि समीरितं ।
अपद्वारप्रवेशेन विदुर्गोत्रक्षयं गृहं(७) ॥ २४ ॥
अथ पीठे(८) च संस्थाप्य लिङ्गं द्वारस्य सम्मुखं ।
तूर्य्यमङ्गलनिर्घोषैर्दूर्व्वाक्षतसमन्वितं ॥ २५ ॥
समुत्तिष्ठ हरेत्युक्ता महापाशुपतं पठेत् ।

---

१ मूर्त्तिपैः स्वदिशि स्थितैरिति ज०। तदर्द्धेनाथ नतसुते इति ग०। तदर्द्धे-
२ बन्धुभिः सह कर्तव्या देवयानस्येति नाथ तद्यतिमिति घ०। तदर्द्धे नाथ नत्-
ख०। बन्धुभिः सहकारे च देवालयस्य सुतमिति ज०। तदर्द्धे नाथ तद्युते इति ङ०।
इति ग०, ज० च।
३ प्रासादार्द्धमिति ज०।
४ सम्प्रवेशयेदिति घ०।
५ तदर्द्धेनाथ घातयेत् इति झ०।

६ बन्धने इति ख०। बन्धयन् इति घ०। रचयन् इति झ०। वर्जयेदिति ङ०।
७ विनगोत्रक्षयं गृहमिति ग०।
८ अथ चैवं इति ज०, झ०, घ० च।

अपनीय घटं श्वभ्राद्(१) देशिको मूर्त्तिपैः सह । २६ ॥
मन्त्रं सन्धारयित्वा तु(२) विलिप्तं(३) कुङ्कुमादिभिः ।
शक्तिशक्तिमतोरैक्यं ध्यात्वा चैव तु रच्चितं(४) ॥ २७॥
लयान्तं(५) मूलमुच्चार्य्य स्पृष्ट्वा श्वभ्रे निवेशयेत्(६) ।
अंशेन ब्रह्मभागस्य यद्वा अंशद्वयेन च ॥ २८ ॥
अर्द्धेन वाष्टमांशेन सर्वस्याथ प्रवेशनं(७) ।
पिधाय सीसकं नाभिदीर्घाभिः(८) सुसमाश्रितः । २९ ॥
श्वभ्रं(९) वालुकयापूर्य्य ब्रूयात् स्थिरीभवेति च(१०) ।
ततो लिङ्गे स्थिरीभूते ध्यात्वा(११) सकलरूपिणं । ३० ॥
मूलमुच्चार्य्य शक्त्यन्तं सृष्ट्या च निष्कलं(१२) न्यसेत् ।
स्थाप्यमानं यदा लिङ्गं याम्यां दिशमथाश्रयेत्(१३) ॥ ३१ ॥
तत्तद्दिगीशमन्त्रेण पूर्णान्तं दक्षिणान्वितं ।

---

१ घटं तत्र इति भ० ।

२ मन्त्रं सन्धारयित्वाथ इति ख० ।
पत्रस्थं धारयित्वा तु, इति घ० ।

३ सुलिप्तमिति ग० ।

४ लक्षितमिति घ० ज०, भ०, च ।

५ नमोन्तमिति ङ० ।

६ शक्तिमुद्रे निवेशयेदिति ज० ।

७ अर्द्धेन चाष्टमांशेन सर्वस्याधः प्रवेशनम् इति ज० ।

८ सीसकं वाग्भिर्दीर्घाभिरिति छ० । सीसकं चापि दीर्घारिति ज० ।

९ अथेति क०, ङ०, छ० च ।

१० लयान्तमित्यादिः, स्थिरीभवेति च इत्यन्तः सार्द्धश्लोकद्वयात्मकः पाठो भ० पुस्तके नास्ति ।

११ ध्यायेदिति घ० ।

१२ सृष्ट्यादिविकलमिति भ० । सृष्ट्यादिनिष्फलमिति ख०, घ०, च । सृष्ट्याच निष्फलमिति ग०, ङ० च ।

१३ ततो लिङ्गे इत्यादिः, दिशमथाश्रयेदित्यन्तः पाठो ज० पुस्तके नास्ति ।

सव्ये स्थाने च वक्रे च(१) चलिते स्फुटितेऽपि वा ॥ ३२ ॥
जुहुयान् मूलमन्त्रेण बहुरूपेण(२) वा शतं ।
किञ्चान्येष्वपि दोषेषु शिवशान्तिं समाश्रयेत्(३) ॥ ३३ ॥
युक्तं न्यासादिभिर्लिङ्ग(४) कुर्वन्नेवं न दोषभाक् ।
पीठबन्धमतः कृत्वा लक्षणस्यांशलक्षणां(५) ॥ ३४ ॥
गौरीमन्त्रं लयं नीत्वा सृष्ट्या पिण्डीञ्च विन्यसेत् ।
सम्पूर्य्य पार्श्वसंसिद्धिं वालुकावज्रलेपनं(६) ॥ ३५ ॥
ततो मूर्त्तिधरैः सार्द्धं गुरुः शान्तिं घटोद्भवैः ।
संस्थाप्य कलसैरन्यैःस्नपयेत्(७) पञ्चामृतादिभिः ॥ ३६ ॥
विलिप्य चन्दनाद्यैश्च(८) सम्पूज्य जगदीश्वरं ।
उमामहेशमन्त्राभ्यां तौ स्पृशेल्लिङ्गमुद्रया ॥ ३७ ॥
ततस्त्रितत्त्वविन्यासं षडर्चादिपुरःसरं(९) ॥
कृत्वा मूर्त्तिं तदीशानामङ्गानां ब्रह्मणामथ ॥ ३८ ॥
ज्ञानी लिङ्गे(१०) क्रियापीठे विन्यस्य स्नापयेत्ततः ।
गन्धैर्व्विलिप्य सन्धूप्य व्यापिलेन शिवे न्यसेत् ॥ ३९ ॥
स्रग्धूपदीपनैवेद्यैर्हृदयेन फलानि च ।

---

१ वक्रेणेति ख० ।

२ चतूरूपेण इति झ० ।

३ स्थाप्यमानमित्यादिः, शान्तिं समाश्रयेत् इत्यन्तः पाठो ग०, ङ०, पुस्तके नास्ति ।

४ उक्तन्यासविधिं लिङ्गे इति ख० । उक्तन्यासविधौ लिङ्गे इति ग० ।

५ पीठ बन्धमधःकृत्वा कुर्व्वन्नेव न दोषभाक् इति ख०, ग० च । पीठ बन्धमतः कृत्वा लक्षणस्याङ्गलक्षणमिति घ० ।

६ पार्श्वसिद्धिं च वालुकाव्रजलेपत इति ञ० ।

७ सप्तारन्यकलशैरन्यैः स्नुत्वा इति झ० ।

८ चतुराद्यैश्च इति झ० ।

९ षडर्घादिपुरःसरमिति झ० । षड्ग्रादिपुरःसर मिति ख० ।

ज्ञानलिङ्गे इति झ० ।

विनिवेद्य यथाशक्ति समाचम्य महेश्वरं ॥ ४० ॥
दत्वार्घं च जपं हृत्वा(१) निवेद्य वरदे करे (२)।
चन्द्रार्कतारकं यावन् मन्त्रेण शैवमूर्त्तिपैः(३) ॥ ४१ ॥
रक्षेच्छयैव त्वया नाथ स्थातव्यमिह मन्दिरे।
प्रणम्यैवं वहिर्गत्वा(४) हृदा वा प्रणवेन वा ॥ ४२ ॥
संस्थाप्य वृषभं पश्चात् पूर्व्ववद्बलिमाचरेत्।
नूनादिदोषमोषाय(५) ततो मृत्युजिता शतं ॥ ४३ ॥
शिवेन सशिवो हुत्वा शान्त्यर्थं पायसेन च।
ज्ञानाज्ञानकृतं यच्च तत् पूरय महाविभो(६) ॥ ४४ ॥
हिरण्यपशुभूम्यादि(७) गीतवाद्यादिहेतवे।
अम्बिकेशाय तद् भक्त्या शक्त्या सर्वं निवेदयेत् ॥ ४५ ॥
दानं महोत्सवं पश्चात् कुर्य्याद्दिनचतुष्टयं।
त्रिसन्ध्यं त्रिदिनं मन्त्री होमयेन् मूर्त्तिपैः सह ॥ ४६ ॥
चतुर्थेऽहनि पूर्णाञ्च चरुकं बहुरूपिणा।
निवेद्य सर्व्वकुण्डेषु सम्पाताहुतिसोधितम्(८) ॥ ४७ ॥
दिनचतुष्टयं यावत्तन्निर्म्माल्यन्तदूद्धृतः।
निर्म्माल्यापनयं कृत्वा स्नापयित्वा तु(९) पूजयेत् ॥ ४८ ॥
पूजा सामान्यलिङ्गेषु कार्य्या साधारणाणुभिः(१०)।

---

१ अलं हुत्वा इति ग०।
२ निवेद्य वरदेवके इति ज०।
३ मन्त्रैः शैवमूर्त्तिपैः सह इति झ०। मन्त्रैः शैवमूर्त्तिजैः सह इति घ०।
४ वहिष्कृत्वा इति झ०। वहिर्हुत्वा इति घ०।
५ न्यूनादिदोषमोक्षायेति ज०। न्यूनादिदोष माशार्थेति ङ०।
६ महाप्रभो इति झ०।
७ हिरण्यवस्त्रधूपादि इति झ०।
८ पायसाहुतिसोधितमिति झ०। सम्पाताहुतिशोधनमिति ग०।
९ स्नापयित्वा च इति ग०।
१० साधारणांशुभिरिति ख०। साधारणादिकमिति ग०।

विध्याय लिङ्गचैतन्यं कुर्य्यात् स्थाणुविसर्ज्जनं ॥ ४९ ॥
असाधारणलिङ्गेषु क्षमस्वेति विसर्ज्जनं ।
आवाहनमभिव्यक्तिर्विसर्गः शक्तिरूपता ॥ ५० ॥
प्रतिष्ठान्ते क्वचित् प्रोक्तं स्थिराद्याकृतिसप्तकं ।
स्थिरस्तथाप्रमेयश्चानादिबोधस्तथैव च ॥ ५१ ॥
नित्योथ सर्व्वगश्चैवाविनाशी दृष्ट एव च(१) ।
एते गुणा महेशस्य सन्निधानाय कीर्त्तिताः(२) ॥ ५२ ॥
ओं नमः शिवाय स्थिरो भवेत्याकृतीनां क्रमः ।
एवमेतच्च सम्पाद्य विधाय शिवकुम्भवत्(३) ॥ ५३ ॥
कुम्भद्वयञ्च तन्मध्यादेककुम्भाम्भसा भवं ।
संस्नाप्य तद् द्वितीयन्तु कर्त्तुंस्नानाय धारयेत् ॥ ५४ ॥
दत्वा बलिं समाचाम्य वहिर्गच्छेत् शिवाज्ञया(४) ।
जगतीवाह्यतश्चण्डमैशानमान्दिशि मन्दिरे ॥ ५५ ॥
धामगर्भप्रमाणे च(५) सुपीठे(६) कल्पितासने ।
पूर्ववन् न्यासहोमादि विधाय ध्यानपूर्वकं ॥ ५६ ॥
संस्थाप्य विधिवत्तत्र ब्रह्माङ्गैः(७) पूजयेत्ततः ।
अङ्गानि पूर्व्वयुक्तानि(८) ब्रह्माणी त्वर्चना यथा(९) ॥ ५७ ॥

---

१ विनाशी तृप्त एव च इति ख०, ङ०, छ०, ज० च । अविनाशी तृप्त एव च इति ङ० ।

२ सन्निधाय प्रकीर्त्तिता इति ख०, छ० च ।

३ ओं नम इत्यादि, शिवकुम्भवत् इत्यन्तः पाठो भ० पुस्तके नास्ति । शिवाय शिवकुम्भवत् इति ग० ।

४ वहिः कुम्भे शिवाज्ञया इति भ० ।

५ वामगर्भप्रमाणेन इति भ० ।

६ स्वपीठे इति ग० ।

७ ब्रह्माद्यैरिति ग०, भ० च ।

८ पूर्वमुक्तानि इति ख०, ग०, ङ०, छ० च । पूर्वभुक्तानीति ज० ।

९ लघुना यथा इति ख० ।

एवं सद्योजाताय ओं क्रूं फट्(१) नमः। ओं विं वामदेवाय क्रूं फट् नमः। ओं वुँ(२) अघोराय क्रूँ फट् नमः। ओं(३) तत्पुरुषाय वौमीशानाय च क्रूं फट्॥

जपं निवेद्य(४) सन्तर्प्य विज्ञाप्य नतिपूर्वकं।
देवः सन्निहितो यावत्तावत्त्वं सन्निधो भव॥ ५८॥
न्यूनाधिकञ्च यत्किञ्चित् कृतमज्ञानतो मया(५)।
त्वत्प्रसादेन चण्डेश तत् सर्वं परिपूरय॥ ५९॥
वाणलिङ्गे वाणरोहे(६) सिद्धलिङ्गे स्वयम्भुवि।
प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत्॥ ६०॥
अद्वैतभावनायुक्ते स्थण्डिलेशविधावपि(७)।
अभ्यर्च्य चण्डं ससुतं यजमानं हि भार्य्यया॥ ६१॥
पूर्वस्थापितकुम्भेन स्नापयेत् स्नापकः(८) स्वयं।
स्थापकं यजमानोपि सम्पूज्य च(९) महेशवत्(१०)॥ ६२॥
वित्तशाठ्यं विना दद्याद् भूहिरण्यादि(११) दक्षिणां।

---

१ ओं सद्योजाताय क्रूं फट् इति भ०। एवं सद्योजाताय ओं क्रूं फट् नम इति ख०, ङ० च। ओं एवं सद्योजाताय क्रूं फट् नम इति ग०, ज० च।

२ ओं वँ इति भ०।

३ ओं एवं चेति ङ०। ओं एवं चेदिति ङ०। ओं वै इति ज०।

४ धूपं निवेद्य इति घ०।

५ कृतमज्ञानतोपि वा इति ग०।

६ वाणलिङ्गे चले लोहे इति ज०।

७ स्थण्डिले सन्निधावपि इति ज०, भ० च।

८ स्नापक इति ज०।

९ प्रपूज्य च इति ज०।

१० महेश्वरमिति ख०, ङ० च।

११ गोहिरण्यादि इति ज०, भ० च।

मूर्त्तिपान् विधिवत् पश्चात् जापकान् ब्राह्मणांस्तथा ॥ ६३ ॥
देवज्ञं शिल्पिनं प्रार्च्य दीनानाथादि(१) भोजयेत् ।
यदत्र सम्मुखीभावे खेदितो भगवन्मया ॥ ६४ ॥
क्षमस्व नाथ तत् सर्वं कारुण्याम्बुनिधे मम(२) ।
इति विज्ञप्तियुक्ताय यजमानाय सद्गुरुः ॥ ६५ ॥
प्रतिष्ठापुण्यसद्भावं(३)स्फुरत्तारकसप्रभं(४) ।
कुशपुष्पाक्षतोपेतं स्वकरेण समर्पयेत् ॥ ६ ॥
ततः पाशुपतोपेतं(५) प्रणम्य परमेश्वरं ।
ततोऽपि बलिभिर्भूतान् सन्निधाय निबोधयेत् । ६७ ॥
स्थातव्यं भवता तावद् यावत् सन्निहितो हरः(६) ।
गुरुर्वस्त्रादिसंयुक्तं यज्ञोपाद्यागमण्डपं ॥ ६ ॥
सर्वोपकरणं शिल्पी तथा स्नापनमण्डपं(७) ।
अन्ये देवादयः स्थाप्या मन्त्रैरागमसम्भवैः ॥ ६९ ॥
आदिवर्णस्य भेदाद्वा(८) सुतत्त्वव्याप्तिभाविताः(९) ।
साध्य(१०) प्रमुखदेवाश्च सरिदोषधयस्तथा ॥ ७० ॥
क्षेत्रपाः किन्नराद्याश्च पृथिवीतत्त्वमाश्रिताः ।

---

१ दीनानाथांश्चेति ज० ।
२ देव त्वं नाथतत् सर्वं कारुण्यान मनवे नम इति भ० ।
३ प्रतिष्ठायज्ञसम्भारमिति ग० ।
४ स्फुरत्तारकसन्निभमिति ।
५ ततः पशुपतिं जप्त्वा इति ख० ग० च ।
६ भव इति ख०, घ० च ।
७ गुरुर्वस्त्राणीत्यादिः, स्नानमण्डपमित्यन्तः पाठो भ० पुस्तके नास्ति ।
८ आदिवर्णस्य भेदाद्वा इति भ० ।
९ स्वातन्त्र्या व्याप्तिरीरिता इति ग० । स्वतत्त्वव्याप्तिभाविता इति छ० । स्वतन्त्रव्याप्ति भेदत इति ज० ।
१० जाप्य इति भ० ।

स्नानं सरस्वतीलक्ष्मीनदीनामम्भसि क्वचित् ॥ ७१ ॥
भुवनाधिपतीनाञ्च स्थानं यत्र व्यवस्थितिः ।
अण्डवृद्धिप्रधानान्तं त्रितत्त्वं ब्रह्मणः पदं ॥ ७२ ॥
तन्मात्रादिप्रधानान्तं(१) पदमेतत् त्रिकं हरेः(२) ।
नाट्येशगणमातॄणां यक्षेशशरजन्मनां ॥ ७३ ॥
अण्डजाः शुद्धविद्यान्तं पदं गणपतेस्तथा ।
मायांशदेशशक्त्यन्तं शिवाशिवोमरीचिषां(३) ॥ ७४ ॥
पदमीश्वरपर्य्यन्तं व्यक्तार्च्चासु च कीर्त्तितं ।
कूर्म्माद्यं कीर्त्तितं यच्च यच्च रत्नादिपञ्चकं(४) ॥ ७५ ॥
प्रक्षिपेत् पीठगर्त्ते च पञ्चब्रह्मशिलां विना ।
षड्भिर्विभाजिते गर्त्ते(५) त्यक्त्वा भागञ्च पृष्ठतः ॥ ७६ ॥
स्थापनं पञ्चमांशे च यदि वा वसुभाजिते ।
स्थापनं सप्तमे भागे प्रतिमासु सुखावहं ॥ ७७ ॥
धारणाभिर्विशुद्धिः स्यात् स्थापने लेपचित्रयोः ।
स्नानादि मानसन्तत्र शिलारत्नादिवेशनं(६) ॥ ७८ ॥
नेत्रोद्घाटनमन्त्रेण मासनादिप्रकल्पनं ।
पूजा निरम्बुभिः पुष्पैर्यथा चित्रं न दुष्यति ॥ ७९ ॥
विधिस्तु चललिङ्गेषु सम्प्रत्येव निगद्यते ।

१ तन्मात्रादिप्रयाणान्तमिति ख० ।
२ तत्त्वमेकं त्रिकं हरेरिति घ० ।
३ स्नानं सरस्वतीत्यादिः, रोचिषामित्यन्तः पाठो भ० पुस्तके नास्ति ।
४ यद्रत्नादिकपञ्चकमिति ज० ।
५ षड्भिर्विभाजिते गर्भे इति ङ० ।
६ शिलावास्त्वादिवेशनं इति भ० । शिलारत्ननिवेशनमिति ख० ।

पञ्चभिर्वा त्रिभिर्वापि पृथक् कुर्य्याद्(१) विभाजिते(२) ॥ ८० ॥
भागत्रयेण भागांशो भवेद्भागद्वयेन वा ।
स्वपीठेष्वपि (३)तद्वत् स्याल्लिङ्गेषु तत्प्रभेदतः ॥ ८१ ॥
सृष्टिमन्त्रेण संस्कारो विधिवत् स्फाटिकादिषु ।
किन्तु बाणशिलारत्नप्रभूतेस्थानिवेदनं(४) ॥ ८२ ॥
योजनं पिण्डिकायाश्च मनसा परिकल्पयेत् ।
स्वयम्भूवाणलिङ्गादौ(५) संस्कृतौ नियमो न हि ॥ ८३ ॥
स्नापनं संहितामन्त्रैर्न्यासं होमञ्च कारयेत् ।
नदीसमुद्ररोहाणां स्थापनं पूर्ववन् मतं ॥ ८४ ॥
ऐहिकं मृण्मयं लिङ्गं पिष्टकादि च तत्क्षणात्(६) ।
कृत्वा सम्पूजयेच्छुद्धं दीक्षणादिविधानतः(७) ॥ ८५ ॥
समादाय ततो मन्त्रानात्मानं सन्निधाय च ।
तज्जले प्रक्षिपेल्लिङ्गं वत्सरात् कामदं भवेत् ॥ ८६ ॥
विष्ण्वादिस्थापनं चैव पृथङ् मन्त्रैः समाचरेत् ।

इत्याग्नेये महापुराणे शिवप्रतिष्ठा(८) नाम सप्तनवति-
तमोऽध्यायः ॥

---

१ पृथक् पीठे इति ख०, ग०, घ० च ।

२.स्थापनमित्यादिः, कुर्य्याद् विभाजिते इत्यन्तः पाठो ङ० पुस्तके नास्ति ।

३ स्वपीठे स्वपिते इति ख० ।

४ प्रभूतेष्वधिवेशनम् इति घ० ।

५ वाणलिङ्गानामिति ञ० ।

६ पिष्टकादि च तत्क्रमादिति ख०, ञ० च ।

७ सृष्टिमन्त्रेणेत्यादिः दीक्षणादि-विधानत इत्यन्तः पाठो ग० पुस्तके नास्ति ।

८ शिवपूजा इति क० ।

# अथाष्टनवतितमोऽध्यायः ॥



## गौरीप्रतिष्ठाकथनं ।

ईश्वर उवाच । वक्ष्ये गौरीप्रतिष्ठाञ्च पूजया सहितां शृणु ।
मण्डपाद्यं पुरो यच्च(१) संस्थाप्य चाधिरोपयेत् ॥ १ ॥
शय्यायान्तांश्च विन्यस्य मन्त्रान्मूर्त्त्यादिकान् गुह ।
आत्मविद्याशिवान्तञ्च(२) कुर्य्याद्गौरीशनिवेशनं ॥ २ ॥
शक्तिं परां ततो(३)न्यस्य हुत्वा(४) जप्त्वा च पूर्ववत् ।
सन्धाय च तथा पिण्डीं(५) क्रियाशक्तिस्वरूपिणीं ॥ ३ ॥
सद्देशव्यापिकां ध्यात्वा न्यस्तरत्नादिकां तथा ।
एवं संस्थाप्य तां पश्चाद्देवीन्तस्यान्नियोजयेत् ॥ ४ ॥
परशक्तिस्वरूपान्तां स्वाणुना(६) शक्तियोगतः ।
ततो न्यसेत् क्रियाशक्तिं पीठे ज्ञानञ्च विग्रहे ॥ ५ ॥
ततोपि व्यापिनीं शक्तिं समावाह्य नियोजयेत् ।
अम्बिकां शिवनाम्नीञ्च समालभ्य(७) प्रपूजयेत् ॥ ६ ॥

ओँ आधारशक्तये नमः । ओँ कूर्म्माय नमः । ओँ स्कन्दाय च तथा नमः । ओँ ह्रीँ नारायणाय नमः । ओँ ऐश्वर्य्याय नमः ।

---

१ मण्डपाद्यं प्रविशेच्च इति ग० ।
२ शिवाख्यं च इति घ० ।
३ तथा शक्तिं परामिति ख० ।
४ स्नुत्वेति ज० ।
५ चण्डीमिति ख० ।
६ आत्मनेति ख० ।
७ च, स्वकेशीतिनाम्नीच समारभ्येति ञ० ।

ओं ग्रं अधश्छदनाय नमः । ओं पद्मासनाय नमः । ओं ऊर्द्ध्वच्छदनाय नमः । ओं पद्मासनाय नमः । अथ सम्पूज्याः केशवाख्यया । ओँ ह्रीं कर्णिकायै नमः । ओं हं पुष्कराद्येभ्य(१) इत्यर्चयेत् । ओं ह्रां पुष्टैर ऋीं च ज्ञानायै ऋूं क्रियायै ततो नमः । ओं नालाय नमः । रं धर्माय नमः(२) । रँ ज्ञानाय वै नमः(३) । ओं वैराग्याय नमः । ओं वै अधर्माय नमः(४) । ओं रं अज्ञानाय वै नमः । ओं अवैराग्याय वै नमः । अं अनैश्वर्याय नमः । ऊं वाचे ऊं च रागिण्यै ऋैं ज्वालिन्यै ततो नमः । ओं ऋीं शमायै(५)च नमः । ऋूं ज्येष्ठायै ततो नमः । ओं ऋीं रीं ऋैं नवशक्त्यै गौं च गौर्यासनाय च । गौं गौरीमूर्त्तये नमः । गौर्य्या मूलमथोच्यते । ओँ ह्रीं सः(६) महागौरि रुद्रदयिते स्वाहा । गौर्य्यै नमः । गां ऋूं ह्रीं शिवो गूं स्यात् शिखायै कवचाय च । गौं नेत्राय च गौं अस्त्राय ओं गौं विज्ञानशक्तये, ओँ गूं क्रियाशक्तये नमः(७) । पूर्वादौ शक्रादिकान् । ओं सुं सुभगायै नमः । ह्रीं वीजललिता ततः । ओं ह्रीं कामिन्यै च नमः । ओं ह्रूँ स्यात् कामशालिनी-मन्त्रैर्गौरीं प्रतिष्ठाप्य प्रार्च्चेत् जप्ताय सर्वभाक्(८) ॥

इत्याग्नेये महापुराणे गौरीप्रतिष्ठा नामाष्टनवति-तमोऽध्यायः ॥

---

१ ओं ह्रं पुष्करेभ्य इति ख० ।
२ धं धर्माय नम इति ख० ।
३ यं ज्ञानाय नम इति ख० ।
४ रं अधर्माय वै नम इति ङ० ।
५ वामायै इति ख०, ग०, घ०, ङ० च ।
६ ओँ ह्रूं स इति घ० ।
७ ह्रीं क्रियाशक्त्यै नम इति ङ० ।
ओं क्रियाशक्तये नम इति घ० ।
८ जप्त्वा तु रूपतः इति ग०, ङ० च ।

# अथैकोनशततमोऽध्यायः ।

सूर्य्यप्रतिष्ठाकथनं ।

ईश्वर उवाच । वक्ष्ये सूर्य्यप्रतिष्ठाञ्च पूर्ववन्मण्डपादिकं ।
स्नानादिकञ्च सम्पाद्य(१) पूर्वोक्तविधिना ततः ॥ १ ॥
विद्यामासनशय्यायां साङ्गं विन्यस्य भास्करं ।
त्रितत्त्वं विन्यसेत्तत्र सस्वरं खादिपञ्चकं ॥ २ ॥
शुद्धरादि पूर्ववत् कृत्वा पिण्डीं संशोध्य पूर्ववत् ।
सदेशपदपर्य्यन्तं विन्यस्य तत्त्वपञ्चकं(२) ॥ ३ ॥
शक्त्या च सर्वतोमुख्या संस्थाप्य विधिवत्ततः ।
स्वाणुना(३) विधिवत् सूर्य्यं शक्त्यन्तं(४) स्थापयेद्गुरुः ॥ ४ ॥
खाम्यन्तमथवादित्यं पादान्तन्नाम धारयेत् ।
सूर्य्यमन्त्रास्तु(५) पूर्वोक्ता द्रष्टव्याः स्थापनेपि च(६) ॥ ५ ॥

इत्याग्नेये महापुराणे सूर्य्यप्रतिष्ठा नामैकोनशततमोऽध्यायः ॥

---

१ स्नानादिकं च सम्पूज्य इति ख०, छ० च ।

२ विन्यस्य पदपञ्चकमिति छ० । विन्यस्य रत्नपञ्चकमिति ज० ।

३ स्वात्मनेति छ० ।

४ शक्त्यार्थमिति छ० ।

५ सूर्य्यमन्त्राश्चेति छ० ।

६ स्थापनेपि वेति ज० ।

## अथ शततमोऽध्यायः ।



### द्वारप्रतिष्ठाकथनं ।

ईश्वर उवाच । द्वाराश्रितप्रतिष्ठाया वक्ष्यामि विधिमप्यथ ।
द्वाराङ्गानि कषायाद्यैः संस्कृत्य शयने न्यसेत् ॥ १ ॥
मूलमध्याग्रभागेषु न्यसमात्मादिसेश्वरं ।
विन्यस्य सन्निवेशाय(१) कृत्वा जप्वात्र रूपतः(२) ॥ २ ॥
द्वाराद्यधो यजेद्वास्तुन्तश्चैवानन्तमन्त्रतः ।
रत्नादिपञ्चकं न्यस्य शान्तिहोमं विधाय च ॥ ३ ॥
यवसिद्धार्थकाक्रान्ता ऋद्धिवृद्धिमहातिलाः ।
गोमृत्सर्षपरागेन्द्रमोहनीलक्ष्मणामृताः ॥ ४ ॥
रोचना त्वग् वचो दूर्वा प्रासादाधश्च पोटलीं ।
प्रकृत्योदुम्बरे बद्धा रक्षार्थं प्रणवेन तु ॥ ५ ॥
द्वारमुत्तरतः किञ्चिदाश्रितं सन्निवेशयेत् ।
आत्मतत्त्वमधो न्यस्य विद्यातत्त्वञ्च शाखयोः ॥ ६ ॥
शिवमाकाशदेशे च व्यापकं सर्वमङ्गलं(३) ।
ततो महेशनाथं च विन्यसेन्मूलमन्त्रतः ॥ ७ ॥

---

१ विन्यस्य च निवेशाय इति ख० । विन्यस्य सन्निवेशायेति ज० ।

२ जप्त्वानुरूपत इति ग० ।

३ सर्वपुष्कलमिति ख०, घ० च

द्वाराश्रितांश्च नन्द्यादीन्(१) शतयुक्तैः(२) स्वनामभिः ।
जुहुयाच्छतमर्द्धं वा द्विगुणं शक्तितोऽथवा(३) ॥ ८ ॥
न्यूनादिदोषमोषार्थं हेतितो जुहुयाच्छतं(४) ।
दिग्बलिम्पूर्ववद्दत्त्वा(५) प्रदद्याद्दक्षिणादिकं ॥ ९ ॥

इत्याग्नेये महापुराणे द्वारप्रतिष्ठा नाम शततमोऽध्यायः ॥

## अथैकाधिकशततमोऽध्यायः ॥



### प्रासादप्रतिष्ठा ।

ईश्वर उवाच । प्रासादस्थापनं वक्ष्ये तच्चैतन्यं स्वयोगतः(६) ।
शुकनाशासमाप्तौ तु पूर्ववेद्याश्च मध्यतः ॥ १ ॥
आधारशक्तितः पद्मे विन्यस्ते प्रणवेन च(७) ।
स्वर्णाद्ये कलशे न्यस्ते पञ्चगव्येन संयुतं ॥ २ ॥
मधुक्षीरयुतं कुम्भं न्यस्तरत्नादिपञ्चकं(८) ।
स्रग्वस्त्रं गन्धलिप्तञ्च गन्धवत्पुष्पभावितं(९) ॥ ३ ॥
चूतादिपल्लवानाञ्च शती शत्यञ्च विन्यसेत्(१०) ।

---

१ नन्द्यादीन इति ख० ।
२ शत्ययुक्तैरिति ज० ।
३ शक्तितो यथा इति ग० ।
४ भागत्रयेणेत्यादिः, जुहुयाच्छतमित्यन्तः पाठो भ० पुस्तके नास्ति । अत्र कतिपयश्लोकाधिकोऽध्यायत्रयात्मकः पाठः पतितोऽस्ति ।
५ पूर्ववद्दत्त्वा इति ग०, घ० च ।
६ तच्चैतन्यञ्च योगत इति ग० । तच्चैतन्यस्वयोगत इति ङ० ।
७ विन्यस्ते प्रणवेन तु इति ख०, ङ०, ज०, भ० च । विन्यसेत् प्रणवेन तु इति ग० ।
८ मधुक्षीरगुतं न्यस्तरत्नादिपञ्चकं तत इति ग० ।
९ गन्धवत्पुष्पधूपितमिति ग०, ज०, ङ० च ।
१० वल्मिकात पद्मं विन्यसेदिति ख० । वल्मिकूपं यथं न्यसेदिति ग० । वल्मिकूपेषु च न्यसेदिति ज० ।

पूरकेण समादाय सकलीकृतविग्रहः॥ ४॥
सर्वात्मभिन्नमात्मानं स्वाणुना(१) स्वान्तमारुतः।
आज्ञया बोधयेच्छम्भौ(२) रेचकेन ततो गुरुः॥ ५॥
द्वादशान्तात्(३) समादाय स्फुरद्वह्निकणोपमं।
निक्षिपेत् कुम्भगर्भे च न्यस्ततन्त्रातिवाहिकं(४)॥ ६॥
विग्रहन्तद्‌गुणानाञ्च बोधकञ्च कलादिकं।
शान्तं वागीश्वरं(५) तत्तु श्रातं तत्र निवेशयेत्॥ ७॥
दश नाडीर्दश प्राणानिन्द्रियाणि त्रयोदश।
तदधिपांश्च संयोज्य प्रणवाद्यैः स्वनामभिः॥ ८॥
स्वकार्य्यकारणत्वेन(६) मायाकाशनियामिकाः(७)।
विद्येशान् प्रेरकान् शम्भुं व्यापिनञ्च सुसम्बरैः(८)॥ ९॥
अङ्गानि च(९)विनिक्षिप्य निरुन्ध्याद्रोधमुद्रया(१०)।
सुवर्णाद्युद्भवं यद्वा पुरुषं पुरुषानुगं॥ १०॥
पञ्चगव्यकषायाद्यैः पूर्ववत् संस्कृतन्ततः।
शय्यायां कुम्भमारोप्य ध्यात्वा रुद्रमुमापतिं॥ ११॥

---

१ सर्वात्मभिन्नमात्मानं स्वात्मना इति ख०। सर्वात्माभिन्नमात्मा च स्वाणुनेति ज०।

२ बोधयेच्छम्भौ इति ख०, घ० च।

३ द्वादशान्तमिति ग०, ज० च।

४ न्यस्य तत्र यथाक्रममिति ग०। न्यस्य तत्राभिवाहिकमिति ङ०। न्यस्य तत्राभिवाहकमिति ज०

५ वामेश्वरमिति ख०। वाणेश्वरमिति ङ०।

६ स्वकार्य्यकारणत्वेनेति ख०, ङ०च०।

७ प्रयामिका इति ख०, ङ० च।

८ व्यापिनञ्च स्वशक्तित इति भ०। व्यापिनश्चास्य संवरैरिति ङ०।

९ अङ्गाने चेति घ०, भ० च। अङ्गादि चेति ङ०।

१० निर्मंस्का श्रोणमुद्रया इति ग०। निरुन्ध्याद् दृवमुद्रया इति भ०।

तस्मिंश्च शिवमन्त्रेण व्यापकत्वेन विन्यसेत्।
सन्निधानाय होमश्च प्रोक्षणं स्पर्शनं जपं ॥ १२ ॥
सान्निध्याबोधनं(१) सर्वं भागत्रयविभागतः।
विधायैवं(२)प्रकृत्यन्ते(३) कुम्भे तं विनिवेशयेत् ॥ १३ ॥

इत्याग्नेये महापुराणे प्रासादकृत्यप्रतिष्ठा नामैकाधिकशततमोऽध्यायः।

## अथ द्व्यधिकशततमोऽध्यायः।



### ध्वजारोपणं।

ईश्वर उवाच। चूलके ध्वजदण्डे च(४) ध्वजे देवकुले तथा।
प्रतिष्ठा च यथोद्दिष्टा(५) तथा स्कन्द वदामि ते(६) ॥ १ ॥
तडागार्द्धप्रवेशाद्वा यद्वा सवार्द्धवेशनात्।
ऐष्टके दारुजः(७) शूलः शैलजे धाम्नि शैलजः(८) ॥ २ ॥
वैष्णवादौ च चक्राढ्यः कुम्भः स्यान्मूर्त्तिमानतः।
स च त्रिशूलयुक्तस्तु अग्रचूलाभिधो मतः(९) ॥ ३ ॥

---

१ सन्निध्याबोधनमिति ख०, छ०, ज० च।
२ विधायैवेति ज०।
३ प्रकृत्या तु इति ख०।
४ चूडके ध्वजदण्डे वा इति ज०।
५ यथोद्दिष्टा इति भ०।
६ तथा स्कन्द वदामि ते इति ङ०।
७ ऐष्टे दारुभव इति घ०, ज० च।
८ तडागाद्धे त्यादिः, शैलज इत्यन्तः पाठो भ० पुस्तके नास्ति।
९ अग्रं चूडाभिधो मत इति घ०। अग्रचूलादिदोषत इति छ०। गर्भचूडाभिधामत इति ङ०। अग्रं चूडादिदोषत इति ख०।

ईशमूलः(१)समाख्यातो मूर्द्धि लिङ्गसमन्वितः।
वीजपूरकयुक्तो वा शिवशास्त्रेषु तद्विधः॥ ४॥
चित्रो ध्वजस्य जङ्घातो यथा जङ्घार्द्धतो भवेत्(२)।
भवेद्वा दण्डमानस्तु यदि वा तद्यदृच्छया(३)॥ ५॥
महाध्वजः समाख्यातो यस्तु पीठस्य वेष्टकः(४)।
शक्रैर्यद्वै रसैर्वापि हस्तैर्दण्डस्तु सम्मितः॥ ६॥
उत्तमादिक्रमेणैव विज्ञेयः शूरिभिस्ततः।
वंशजः शालजादिर्वा स दण्डः सर्वकामदः॥ ७॥
अयमारोप्यमाणस्तु भङ्गमायाति वै यदि।
राज्ञोनिष्टं(५) विजानीयाद्यजमानस्य वा तथा(६)॥ ८॥
मन्त्रेण बहुरूपेण पूर्ववच्छान्तिमाचरेत्।
द्वारपालादिपूजाञ्च मन्त्राणान्तर्पणान्तथा॥ ९॥
विधाय चूलकं(७) दण्डं स्नापयेदस्त्रमन्त्रतः।
अनेनैव तु मन्त्रेण ध्वजं सम्प्रोक्ष्य देशिकः॥ १०॥
मृद्भ कषायादिभिः(८) स्नानं प्रासादङ्कारयेत्ततः।
विलिप्य रसमाच्छाद्य(९) शयनायां न्यस्य पूर्ववत्॥ ११॥
चूडके(१०) लिङ्गवन्न्यासो न च ज्ञानं न च क्रिया।

---

१ ईशमृत इति इति ग०। ईश मूल इति ङ०। ईषमूल इति ख०। शशः शूल इति ज०।

२ जङ्घातो यदा जङ्घार्द्धतो भवेदिति ख०। सङ्घातो यथा जङ्घार्द्धतो यजेदिति घ०।

३ यदि वा तद्वदिच्छया इति ख०।

४ यस्तु स्यात् पीठवेष्टक इति ङ०।

५ राज्ञोरिष्टमिति ज०।

६ वै तथा इति ज०।

७ चूडकमिति ज०।

८ मृत्काषायादिभिरिति ख०, ङ० च।

९ विलिप्य रसमादायेति ज०।

१० चूलके इति घ०, ङ० च।

विशेषार्था(१)श्चतुर्थी च न च कुण्डद्वय(२)कल्पना ॥ १२ ॥
दण्डे तयार्थतत्त्वञ्च(३) विद्यातत्त्वं द्वितीयकं।
सद्योजातानि वक्त्राणि(४)शिवतत्त्वं पुनर्ध्वजे ॥ १३ ॥
निष्कलञ्च शिवन्तमन्यस्याङ्गानि प्रपूजयेत्।
चूडके च(५) ततो मन्त्री सान्निध्ये संहिताणुभिः(६) ॥ १४ ॥
होमयेत् प्रतिभागञ्च ध्वजे तैस्तु फडन्तकैः(७)।
अन्यथापि कृतं यच्च ध्वजसंस्कारं(८) क्वचित् ॥ १५ ॥
अस्त्रयागविधावेवं(९) तत्सर्वमुपदर्शितं।
प्रासादे कारिते स्थाने(१०) स्रग्वस्त्रादिविभूषिते ॥ १६ ॥
जङ्घा वेदी तदूर्द्धं तु त्रितत्त्वादि निवेश्य च।
होमादिकं विधायाथ शिवं सम्पूज्य पूर्ववत् ॥ १७ ॥
सर्वं तत्त्वमयं ध्यात्वा शिवञ्च व्यापकं न्यसेत्।
अनन्तं कालरुद्रञ्च विभाव्य च पदाम्बुजे ॥ १८ ॥
कुष्माण्डहाटकौ पीठे पातालनरकैः(११) सह।
भुवनैर्लोकपालैश्च शतरुद्रादिभिर्वृतं ॥ १९ ॥
ब्रह्माण्डकमिदं ध्यात्वा जङ्घायाञ्च विभावयेत्।
वारितेजोनिलव्योमपञ्चाष्टकसमन्वितं(१२) ॥ २० ॥

---

१ विशेषाद्या इति घ०।
२ नवदण्डस्येति भ०।
३ तथात्मतत्त्वञ्चेति ग०, घ० च।
४ सद्योजातादि वक्त्राणीति भ०।
५ चूलके च इति ख०, ञ० च।
६ संहितात्मभिरिति ख०, ग० च।
७ चूलके इति श्लोको भ० पुस्तके नास्ति।
८ तत्र ध्वजे संहरणमिति ख०, छ० च। यत्र ध्वजसंस्करणमिति घ०।
९ अस्त्रयागे विधाने चेति ञ०।
१० प्रासादकारितस्थाने इति ख०, भ० च। प्रासादे कारितस्थाने इति ञ०।
११ पातालनवकैरिति ङ०, ञ० च०।
१२ पञ्चाङ्गकसमन्वितमिति ग०।

सर्वावरणसञ्ज्ञञ्च हृदयोन्यहृकान्वितं(१) ।
योगाष्टकसमायुक्तं(२) नानाविधि गुणत्रयं ॥ २१ ॥
पटस्थं पुरुषं लिङ्गं वामञ्च(३) परिभावयेत् ।
मञ्जरीवेदिकायाञ्च विद्यादिकचतुष्टयं ॥ २२ ॥
कण्ठे मायां स्वरुद्राञ्च(४) विद्यास्थामलसारके(५) ।
कलसे चेश्वरं विन्दुं विद्येश्वरसमन्वितं(६) ॥ २३ ॥
जटाजूटञ्च तं विद्याच्छूलं चन्द्रार्द्धरूपकं ।
शक्तित्रयं च तत्रैव दण्डे नादं विभाव्य च ॥ २४ ॥
ध्वजे च कुण्डलीं शक्तिमिति धाम्नि विभावयेत् ।
जगत्या वाथ सन्धाय लिङ्गं पिण्डिकयाथवा(७) ॥ २५ ॥
समुत्थाप्य सुमन्त्रैश्च(८) विन्यस्ते शक्तिपङ्कजे ।
न्यस्तरत्नादिके तत्र स्वाधारे विनिवेशयेत् ॥ २६ ॥
यजमानो ध्वजे लग्ने बन्धुमित्रादिभिः सह ।
धाम प्रदक्षिणीकृत्य लभते फलमीहितं(९) ॥ २७ ॥
गुरुः पाशुपतं ध्यायन्(१०) स्थिरमन्त्राधिपैर्युतं(११) ।
अधिपान् शस्त्रयुक्तांश्च रक्षणाय निबोधयेत्(१२) ॥ २८ ॥

---

१ बुहयोन्यन्तकान्वितमिति ग० । सर्वावरणसञ्ज्ञञ्चेत्यादिः, विद्येश्वरसमन्वित मित्यन्तः पाठो ङ० पुस्तके नास्ति ।

२ यागष्टकसमायुक्तमिति भ० ।

३ रागञ्चेति ख०, ज० च ।

४ कण्ठे मायाञ्चवक्त्रञ्चेति भ० ।

५ विद्याखामनसारके इति ख०, ग० घ० । विद्याद्या मनसारके इति ज० ।

६ छिन्नेश्वरसमन्वितमिति ख०, घ०, ङ० च । विद्येश्वरसमन्वितमिति ग० ।

७ लिङ्गपिण्डिकयाथवेति घ०, ङ०, ज० च ।

८ स्वमन्त्रैश्चेति ग०, ङ० च० ।

९ लभते फलमीप्सितमिति ङ० ।

१० पाशुपतं ध्यायेदिति ख०, घ० च ।

११ शिवमन्त्राधिपैर्युतमिति घ०, ङ० च ।

१२ रक्षणाय निवेदयेदिति ख०, ङ० च ।

न्यूनादिदोषशान्त्यर्थं कृत्वा(१) दत्वा च दिग्बलिं।
गुरवे दक्षिणां दद्यात् यजमानो दिवं व्रजेत् ॥ २९ ॥
प्रतिमालिङ्गवेदीनां यावन्तः परमाणवः।
तावद्युगसहस्राणि कर्त्तुर्भोगभुजः(२) फलं ॥ ३० ॥

इत्याग्नेये महापुराणे ध्वजारोहणादिविधिर्नाम
द्व्यधिकशततमोऽध्यायः।

## अथ त्र्यधिकशततमोऽध्यायः।

### जीर्णोद्धारः।

ईश्वर उवाच। जीर्णादीनाञ्च लिङ्गानामुद्धारं विधिना वदे।
लक्ष्मोज्झितञ्च भग्नञ्च स्थूलं वज्रहतं तथा ॥ १ ॥
सम्पुटं स्फुटितं व्यङ्गं लिङ्गमित्येवमादिकं।
इत्यादिदुष्टलिङ्गानां योज्या पिण्डी(३) तथा वृषः ॥ २ ॥
चालितश्चलितं लिङ्गमत्यर्थं(४) विषमस्थितं।
दिङ्मूढं पातितं लिङ्गं मध्यस्थं पतितं तथा ॥ ३ ॥
एवंविधञ्च संस्थाप्य(५) निर्व्रणञ्च भवेद्यदि।
नद्यादिकप्रवाहेन तद्यथाक्रियते यदि ॥ ४ ॥
ततोऽन्यत्रापि संस्थाप्य विधिदृष्टेन कर्म्मणा।

---

१ न्यूनादिदोषनाशार्थं कृत्वेति ञ०। न्यूनादिदोषनाशाय कृत्वेति घ०, ञ० च।
२ कर्त्तुर्भोगवत इति ख०, ङ० च।
३ त्याज्या पिण्डीति घ०।
४ निम्नमत्यर्थमिति ञ०।
५ सन्त्याज्यमिति ञ०।

सुस्थितं दुस्थितं वापि(१) शिवलिङ्गं न चालयेत्॥ ५ ॥
शतेन स्थापनं कुर्य्यात् सहस्रेण तु चालनं(२)।
पूजादिभिश्च संयुक्तं जीर्णाद्यमपि सुस्थितं(३)॥ ६ ॥
याम्ये मण्डपसमीपे वा प्रत्यग्द्वारैकतोरणं।
विधाय द्वारपूजादि स्थण्डिले मन्त्रपूजनं(४)॥ ७ ॥
मन्त्रान् सन्तर्प्य सम्पूज्य वास्तुदेवांस्तु पूर्ववत्।
दिग्बलिं च वहिर्दत्वा समाचम्य स्वयं गुरुः॥ ८ ॥
ब्राह्मणान् भोजयित्वा तु शम्भुं(५) विज्ञापयेत्ततः।
दुष्टलिङ्गमिदं शम्भोः शान्तिरुद्धरणस्य चेत्(६)॥ ९ ॥
रुचिस्तवादिविधिना(७) अधितिष्ठस्व मां शिव।
एवं विज्ञाप्य देवेशं शान्तिहोमं समाचरेत्॥ १० ॥
मध्वाज्यक्षीरदूर्वाभिर्मूलेनाष्टाधिकं शतं।
ततो लिङ्गं च संस्थाप्य पूजयेत् स्थण्डिले(८) तथा॥ ११ ॥
ओं व्यापकेश्वरायेति नात्मन्तं शिववादिना(९)।

---

१ दुस्थितं चापीति ग०।

२ सहस्रेण च चालयेदिति ग०।

३ जीर्णाद्यमपि संस्थितमिति ख०, ङ० च। पूजया रहितं यत्तद्भग्नमपि दुःस्थितमिति ख०, घ०, पुस्तकेऽधिकः पाठः।

४ स्थण्डिलेशम्भुपूजनमिति ख०, ग०, ङ०, छ०, झ० च। स्थण्डिले सम्प्रपूजनमिति घ०, ञ० च।

५ सर्वमिति क०।

६ शान्तिरुद्धरणे न्यसेदिति ख०, ग०, घ०, छ० च।

७ रुचिस्तवास्ति विधिनेति ख०, ङ०, छ०, ञ० च।

८ स्थण्डिलमिति ख०, घ०, छ०, ञ० च।

९ ओं व्यापकेश्वरायेति तत्त्वेनात्मन्त-रादिने इति ख०। ओं व्यापकेश्वरायेति नात्यन्तशिववाचिनेति घ०। ओं व्याप केश्वरायेति तत्त्वेनात्यन्तवादिने इति छ०।

ओं व्यापकं हृदयेश्वराय नमः(१)।
ओ व्यापकेश्वराय शिरसे नमः(२)। इत्याद्यङ्गमन्त्राः(३)।
ततस्तत्राश्रितं तत्त्वं श्रावयेदस्त्रमन्त्रतः(४) ॥ १२ ॥
सत्वः कोपीह(५) यः कोपिलिङ्गमाश्रित्य तिष्ठति।
लिङ्गन्त्यक्त्वा शिवाज्ञाभिर्यत्रेष्टं तत्र गच्छतु ॥ १३ ॥
विद्याविद्येश्वरैर्युक्तः स भवोत्र(६)भविष्यति।
सहस्रं प्रतिभागे च ततः पाशुपतात्मना(७) ॥ १४ ॥
ज्ञात्वा शान्त्यम्बुना प्रोक्ष्य स्पृष्ट्वा कुशैर्जपेत्ततः(८)।
दत्वार्घं च विलोमेन तत्त्वतत्त्वाधिपांस्तथा ॥ १५ ॥
अष्टमूर्त्तीश्वरान् लिङ्ग(९) पिण्डिकासंस्थितान् गुरुः
विसृज्य स्वर्णपाशेन वृषस्कन्धस्थया तथा ॥ १६ ॥
रज्ज्वा बध्वा तया नीत्वा शिवमन्त्रं गृणन् जनैः।
तज्जले निक्षिपेन् मन्त्री पुष्ट्यर्थं जुहुयाच्छतं ॥ १७ ॥
तृप्तये दिक्पतीनाञ्च वास्तुशुद्धौ(१०) शतं शतं।
रक्षां विधाय तद्धाम्नि महापाशुपता ततः ॥ १८ ॥
लिङ्गमन्यत्ततस्तत्र विधिवत् स्थापयेद् गुरुः।
असुरैर्मुनिभिर्गोत्रैस्तन्त्र-विद्भिः(११) प्रतिष्ठितं ॥ १९ ॥

---

१ ओं व्यापकेश्वराय हृदयाय नम इति ख०, ग० च। ओं व्यापकेश्वर हृदया नम इति झ०, घ० च।

२ शिरसे स्वाहेति ज०।

३ इत्यङ्गमन्त्रा इति ख०, ङ० च। इत्यादिमन्त्रा इति ङ०।

४ स्थापयेदस्त्रमन्त्रत इति ङ०। धारयेदस्त्रमन्त्रत इति ज०।

५ सिद्धः कोपीहेति घ०।

६ भस्मुरत्रेति घ०, ज० च। प्रभुरत्रेति ख०, ङ० च।

७ पाशुपतात्मनेति ख०, ग०, ङ० च।

८ दर्भैर्जपेत्तत इति ङ०।

९ मूर्त्तिमूर्त्तीश्वरान् लिङ्गे इति ख० घ०, ङ०, ङ० च।

१० वास्तुमध्ये घ०।

११ तत्त्वविद्भिरिति ख०, घ०, ङ०, ज० च।

जीर्णं वाप्यथवा भग्नं(१) विधिनापि नचालयेत्।
एष एव विधिः कार्यो जीर्णधामसमुद्धृतौ ॥ २० ॥
खड्गे मन्त्रगणं न्यस्य कारयेत् मन्दिरान्तरं।
सङ्कोचे मरणं प्रोक्तं विस्तारे तु धनक्षयः ॥ २१ ॥
तद्रव्यं श्रेष्ठद्रव्यं वा तत् सकार्यं तत्प्रमाणकं।

इत्याग्नेये महापुराणे जीर्णोद्धारो नाम त्र्यधिकशत-
तमोऽध्यायः ॥

## अथ चतुरधिकशततमोध्यायः।



### प्रासादलक्षणं।

ईश्वर उवाच। वक्ष्ये प्रासादसामान्यलक्षणं ते शिखिध्वज।
चतुर्भागीकृते क्षेत्रे भित्तेर्भागेन विस्तरात् ॥ १ ॥
अद्रिभागेन(३)गर्भः स्यात् पिण्डिका पादविस्तरात्।
पञ्चभागीकृते क्षेत्रेऽन्तर्भागे(४) तु पिण्डिका ॥ २ ॥
सुषिरं भागविस्तीर्णं भित्तयो भागविस्तरात्।
भागौ द्वौ मध्यमे गर्भे ज्येष्ठभागद्वयेनतु(५) ॥ ३ ॥

---

१ जीर्णं प्राप्य यथा भग्नमिति ख०।
२ तत्प्रमाणत इति घ०।
३ अर्द्धभागेनेति ख०, घ०, ङ०, ञ० च।
४ पञ्चभागीकृते वापि मध्यभागे इति घ०, ङ०, ञ० च।
५ भागौ द्वौ मध्यमो गर्भो ज्येष्ठो भागद्वयेन तु इति ख०, ङ०, ञ० च०।

त्रिभिस्तु कलसा गर्भः(१) शेषो भित्तिरिति क्वचित् ।
षोढाभक्तेऽथवा क्षेत्रे भित्तिर्भागैकविस्तरात् ॥ ४ ॥
गर्भो भागेन विस्तीर्णो भागद्वयेन पिण्डिका ।
विस्ताराद् द्विगुणो वापि सपादद्विगुणोऽपि वा ॥ ५ ॥
अर्द्धार्द्धद्विगुणो वापि(२) त्रिगुणः क्वचिदुच्छ्रयः ।
जगती विस्तरार्द्धेन त्रिभागेन क्वचिद्भवेत् ॥ ६ ॥
नेमिः पादोनविस्तीर्णा(३) प्रासादस्य समन्ततः ।
परिधिस्त्र्यंशको मध्ये रथकांस्तत्र कारयेत् ॥ ७ ॥
चामुण्डं भैरवं तेषु नाट्येशं च निवेशयेत् ।
प्रासादार्द्धेन देवानामष्टौ वा चतुरोऽपिवा ॥ ८ ॥
प्रदक्षिणां वहिः कुर्यात् प्रासादादिषु(४) वा नवा ।
आदित्याः पूर्वतः स्थाप्याः स्कन्दोऽग्निर्वायुगोचरे(५)॥ ९ ॥
एवं यमादयो न्यस्याः स्वस्यां स्वस्यां दिशि स्थिताः ।
चतुर्द्धा शिखरं कृत्वा शुकनासा द्विभागिका ॥ १० ॥
तृतीये वेदिका त्वग्रे सकण्ठो मलसारकः(६) ।
वैराजः पुष्पकश्चान्यः कैलासो(७) मणिकस्तथा ॥ ११ ॥
त्रिविष्टपञ्च पञ्चैव मेरुमूर्द्धनि संस्थिताः(८) ।
चतुरस्रस्तु तत्राद्यो द्वितीयोपि वदाम्यतः ॥ १२ ॥

---

१ त्रिभिस्तु कलसो गर्भ इति ख०, ङ० च ।
२ अर्द्धद्विगुणो वापीति घ०, ञ० च ।
३ पादेन विस्तीर्णा इति घ०, ञ० च ।
४ प्रासादादिषु इति ख०, घ०, ङ०, ञ० च । प्रासादे दिक्षु इति ङ० ।
५ स्कन्दोऽग्निर्यमगोचरे इति क० ।
६ सकण्ठोमलसारक इति ङ० । सकण्ठोमलमालक इति ख० ।
७ कैलास्य इति ङ०, ख० च ।
८ चतुर्द्धेत्यादिः, मेरुमूर्द्धनि संस्थिता इत्यन्तः पाठो ग० पुस्तके नास्ति ।

वृत्तो वृत्तायतश्चान्यो(१) ह्यष्टास्रश्चापि पञ्चमः ।
एकैको नवधाभेदैश्चत्वारिंशश्च पञ्च च ॥ १३ ॥
प्रासादः प्रथमो मेरुर्द्वितीयो मन्दरस्तथा ।
विमानश्च तथा भद्रः सर्वतोभद्र एव च ॥ १४ ॥
चरुको(२)नन्दिको नन्दिवर्द्धमानस्तथापरः ।
श्रीवत्सश्चेति वैराजान्वये च समुत्थिताः ॥ १५ ॥
वलभी गृहराजश्च शालागृहश्च मन्दिरं ।
विशालश्च समो ब्रह्म(३) मन्दिरं भुवनन्तथा ॥ १६ ॥
प्रभवः शिविका वेश्म नवैते पुष्पकोद्भवाः(४) ।
वलयो(५) दुन्दुभिः पद्मो महापद्मक(६) एव च ॥ १७ ॥
वर्द्धनी वानर उष्णीषः(७) शङ्खश्च कलसस्तथा ।
स्वस्तश्च तथाप्येते वृत्ताः कैलाससम्भवाः(८) ॥ १८ ॥
गजोथ वृषभो हंसो गरुत्मानृक्षनायकः ।
भूषणो(९) भूधरश्चान्ये श्रीजयः पृथवीधरः(१०) ॥ १९ ॥
वृत्तायतात् समुद्भूता नवैते मणिकाह्वयात्(११) ।
वज्रं चक्रन्तथा चान्यत् स्वस्तिकं वज्रस्वस्तिकं(१२) ॥ २० ॥

१ चतुर्थ्तायतश्चान्य इति घ० ।
२ रुचका इति क० ।
३ विशालश्च समो ब्रह्मेति ख०, घ० च । विशालश्च तथा ब्रह्मेति ग० ।
४ नवैते पुष्करोद्भवा इति ङ० ।
५ पलाव इति ञ० ।
६ महापद्मश्च इति क० ।
७ शङ्कनी चास्य उष्णीष इति ञ० ।
८ वर्द्धनीत्यादिः, कैलाससम्भवा इत्यन्तः पाठो ङ० पुस्तके नास्ति ।
९ भूषण इति ङ० ।
१० स्वष्टस्येत्यादिः, पृथिवीधर इत्यन्तः पाठो ञ० पुस्तके नास्ति ।
११ मणिकाश्रयात् इति ञ० ।
१२ वज्रस्वस्तिकमिति ख०, ग०, ङ० च । वज्रमुष्टिकमिति ञ० ।

चित्रं स्वस्तिकखड्गश्च गदा श्रीकण्ठ एव च ।
विजयो नामतश्चैते(१) त्रिविष्टपसमुद्भवाः ॥ २१ ॥
नगराणामिमाः सञ्ज्ञा लाटादीनामिमास्तथा(२) ।
ग्रीवार्द्धेनोन्नतश्चूलः पृथुत्वञ्च विभागतः(३) ॥ २२ ॥
दशधा वेदिकाङ्कृत्वा पञ्चभिः स्कन्धविस्तरः ।
त्रिभिः कण्ठं तु कर्तव्यं चतुर्भिस्तु प्रचण्डकं(४) ॥ २३ ॥
दिक्षु द्वाराणि कार्याणि न विदिक्षु कदाचन ।
पिण्डिका कोणविस्तीर्णा मध्यमान्ता शुभावहा ॥ २४ ॥
क्वचित् पञ्चमभागेन महताङ्गर्भपादतः ।
उच्छ्राया द्विगुणास्तेषामन्यथा वा निगद्यते ॥ २५ ॥
षष्ट्याधिकात् समारभ्य अङ्गुलानां शतादिह(५) ।
उत्तमान्यपि चत्वारि द्वाराणि दशहानितः(६) ॥ २६ ॥
त्रीण्येव मध्यमानि स्युस्त्रीण्येव कन्यसान्यतः ।
उच्छ्रायार्द्धेन विस्तारो ह्युच्छ्रायोऽभ्यधिकस्त्रिधा ॥ २७ ॥
चतुर्भिरष्टभिर्वापि दशभिरङ्गुलैस्ततः(७) ।
उच्छ्रायात् पादविस्तीर्णा विशाखास्तदुदुंबरे(८) ॥ २८ ॥
विस्तरार्द्धेन बाहल्यं(९) सर्वेषामेव कीर्तितम् ।

---

१ विजया नायकश्चैते इति ग० ।

२ नटादीनामिमास्तथेति ख०, ङ० च। नाट्यादीनामिमास्तथेति ग०, घ०, च। नादादीनामिमास्तथेति ज० ।

३ पृथुत्वं सविभागत इति ख०, घ०, छ० च। पृथुसमुद्रभागत इति ङ० ।

४ चतुर्भिस्तु तदण्डकमिति ख०, ग० च। चतुर्भिः क्षतदण्डकमिति ज० ।

५ षष्ट्याधिकांशमारभ्य अङ्गुलानां शताधिकमिति ज० ।

६ उत्तमान्यपि चत्वारि चत्वारि दशहानित इति ज० ।

७ दशभिर्वा गुणैः शुभ इति छ० ।

८ विशाखास्य त्वडुम्बरे इति छ० च ।

९ विस्तार्द्धेन तु बाहल्यमिति ख० ।

द्विपञ्चसप्तनवभिः शाखाभिर्द्वारमिष्टदं ॥ २९ ॥
अधःशाखाचतुर्थांशे प्रतीहारौ निवेशयेत् ।
मिथुनैः पादवर्गाभिः(१) शाखाशेषं विभूषयेत् ॥ ३० ॥
स्तम्भविद्धे भृत्यता स्यात् वृक्षविद्धे त्वभूतिता ।
कूपविद्धे भयं द्वारे क्षेत्रविद्धे(२) धनक्षयः ॥ ३१ ॥
प्रासादगृहशालादिमार्गविद्धेषु(३) बन्धनं ।
सभाविद्धेन दारिद्र्यं वर्णविद्धे(४) निराकृतिः ॥ ३२ ॥
उलूखलेन दारिद्र्यं शिलाविद्धेन शत्रुता(५) ।
छायाविद्धेन दारिद्र्यं वेधदोषो न जायते ॥ ३३ ॥
छेदादुत्पाटनाद्वापि तथा प्राकारलङ्घनात् ।
सीमाया द्विगुणत्यागाद् वेधदोषो न जायते ॥ ३४ ॥

इत्याग्नेये महापुराणे सामान्यप्रासादलक्षणं नाम चतुरधिक-शततमोऽध्यायः ।

---

## अथ पञ्चाधिकशततमोऽध्यायः ।



### नगरादिवास्तुकथनं ।

ईश्वर उवाच । नगरग्रामदुर्गाद्या(६) गृहप्रासादवृद्धये ।

---

विस्तारार्द्धेन वा चन्यादिति भ० । विस्तारार्द्धेन वाञ्छ्यमिति ञ० ।
१ मिथुनैरथ वल्लीभिरिति ख०,छ० च । घ० ।
२ द्वारे स्वभूविद्धे इति ख०,घ०,ङ० च ।
३ मार्गवेधेषु इति ख० ।
४ वृक्षोविद्धे इति ख०, ङ० च ।
५ शिलाविद्धेन मूकता इति ग०, ञ०
६ नगरग्रामदुर्गाद्यौ इति ख०,छ०, ञ० च । नगरग्रामदुर्गाख्यमिति घ० ।

एकाशीतिपदैर्वास्तुं पूजयेत् सिद्धये ध्रुवं ॥ १ ॥
प्राकारस्था दशधा नाड्यस्तासां नामानि च ब्रुवे।
शान्ता यशोवती कान्ता विशाला प्राणवाहिनी ॥ २ ॥
सती वसुमती नन्दा सुभद्राथ(१) मनोरमा(२)।
उत्तरा द्वादशान्याश्च(३) एकाशीत्यङ्घ्रिकारिका ॥ ३ ॥
हरिणी सुप्रभा लक्ष्मीर्विभूतिर्विमला प्रिया।
जया ज्वाला विशोका च सूत्रास्तत्रपादतः(४) ॥ ४ ॥
ईशाद्यष्टाष्टकं दिक्षु यजेदीशं धनञ्जयं।
शक्रमर्कं तथा सत्यं(५) भृशं व्योम च पूर्वतः ॥ ५ ॥
हव्यवाहञ्च पूषाणं वितथं भौममेव च।
कृतान्तमथ गन्धर्वं भृङ्गं मृगञ्च दक्षिणे ॥ ६ ॥
पितरं द्वारपालञ्च सुग्रीवं पुष्पदन्तकं।
वरुणं दैत्यशेषौ च यक्ष्माणं पश्चिमे सदा ॥ ७ ॥
रोगाहिमुख्यौ(६) भल्लाटः सौभाग्यमदितिर्दितिः(७)।
नवान्तः पदगो ब्रह्मा पूज्योऽर्द्धे च षडङ्घ्रिगाः(८) ॥ ८ ॥
ब्रह्मेशान्तरकोष्ठस्थ(९) मायाख्यान्तु पदद्वये।
तदधश्चापवत्साख्यं केशान्तरेषु षट्पदे ॥ ९ ॥

---

१ सुभद्रा चेति ञ०।
२ मनोजवा इतिं ञ०।
३ उत्तराख्या दशान्याश्चेति ख०, ग०, घ०, ङ०, ञ० च।
४ सूत्रपादत इति ग०। सूत्रपातत इति ङ०।
५ शक्रमेकं तथापत्यमिति ञ०।
६ रोगाहिमोक्षेति ख०, ङ० च।
७ सोमकश्यदितौ दितिमिति ङ०।
८ षडङ्घ्रिका इति ग०।
९ गोष्ठस्थ इति ङ०।

मरीचिकाग्निमध्ये तु सविता द्विपदस्थितः ।
सावित्री तदधो दंशे विवस्वान् षट्पदे त्वधः ॥ १० ॥
पितृब्रह्मान्तरे विष्णुमिन्द्रमिन्द्रं त्वधो जयं ।
वरुणब्रह्मणोर्मध्ये मित्राख्यं षट्पदे यजेत् ॥ ११ ॥
रोगब्रह्मान्तरे नित्यं द्विपद(१) रुद्रदासकम् ।
तदधो दग्ड(?)भृगं यक्ष षट्सौम्येषु धराधरं(२) ॥ १२ ॥
चरकीं स्कन्दविकटं विदारीं पूतनां क्रमात् ।
जम्भं पापं(३) पिलिपिच्छं(४) यजेदीशादिवाह्यतः(५) ॥ १३ ॥
एकाशीतिपदं वेश्म मण्डपस्य शताङ्घ्रिकः(६) ।
पूर्ववद्देवताः पूज्या ब्रह्मा तु षोडशांशके(७) ॥ १४ ॥
मरीचिश्च विवस्वांश्च मित्रं पृथ्वीधरस्तथा(८) ।
दशकोष्ठस्थिता दिक्षु त्वन्ये वंशादिकोणगाः(९) ॥ १५ ॥
दैत्यमाता तथेशाग्नी(१०) मृगाख्यौ पितरौ तथा ।
पापयक्ष्मानिलौ देवाः सर्वे सार्द्धांशके स्थिताः ॥ १६ ॥
यत्नाद्योकः(११) प्रवक्ष्यामि सङ्क्षेपेण क्रमाद् गुह ।

---

१ द्विपदश्चेति ख०, ग०, ज० च ।
२ षट्सौम्येषु चराचरमिति झ०, घ० च ।
३ कुम्भपालमिति ख० ।
४ पिञ्जिपिञ्जमिति ख० । पिञ्जिपिञ्जकमिति छ० ।
५ चरकीमित्यादिः, वाह्यत इत्यन्तः पाठो झ० पुस्तके नास्ति ।
६ शताङ्कमिति झ० ।
७ ब्रह्मान्तैः षोडशांशकैरिति ख०, छ० च० ब्रह्मान्ताः षोडशांशके इति ग०, ज० च ।
८ पृथ्वीधरस्तथेति ख० ।
९ त्वन्ये वंशादिके गणा इति ख०,छ०च ।
१० दैत्यमाता भवेशाग्नी इति ख० । दैत्यमाता तथेशाग्नी इति घ०,ज० च।
११ यत्नाद्योक इति छ०, ।

सदिग्विंशत्करैर्दैर्घ्यादष्टाविंशति(१) विस्तरात् ॥ १७ ॥
शिविराश्रयः शिवाख्यश्च(२) भद्रहीनः सदोभयोः।
भद्रद्विगुणिता नाह्याः पृथुशोभिर्विना त्रिभिः ॥ १८ ॥
स्याद्भद्रद्विगुणं दैर्घ्यात्तिथिभिश्चैव(३) विस्तरात्(४)।
सावित्रः सालयः कुड्या(५) अन्येषां पृथक् त्रिंशांशतः ॥ १९ ॥
कुड्यपृथुपञ्चांशात् कुड्यन्तु त्रिगुणोच्छ्रयं।
कुड्यसूत्रसमा पृथ्वी वीथी भेदादनेकधा ॥ २० ॥
भद्रतुल्यश्च वीथीभिर्द्वारवीथी विनायतः।
श्रीजयं पृष्ठतो हीनं भद्रीयं पार्श्वयोर्द्विना ॥ २१ ॥
गर्भपृथुसमा(६) वीथी तदर्द्धार्द्धेन वा क्वचित्।
वीथ्यर्द्धेनोपवीथ्याद्यमेकद्वित्रिपुरान्वितम् ॥ २२ ॥
सामान्यानाथ गृहं वक्ष्ये सर्वेषां सर्वकामदं।
एकद्वित्रिचतुःशालमष्टशालं यथाक्रमात् ॥ २३ ॥
एकं याम्ये च सौम्यास्यं द्वे चेत् पश्चात् पुरोमुखम्(७)।
चतुःशालन्तु साम्मुख्यात्तयोरिन्द्रेन्द्रमुक्तयोः ॥ २४ ॥
शिवास्यमम्बुपास्यैष इन्द्रास्ये यमसूर्य्यकं(८)।

---

१ साष्टाविंशति इति ख०, ङ० च।

२ शिवाश्रमः शिवाख्यश्चेति ख०, घ०, झ० च। शिवाश्रकशिवाख्यश्चेति ग०। शिवाश्रगः शिवाख्यश्चेति ङ०, ज०, च। शिवाश्रयः शिवाख्यश्चेति छ०।

३ दैर्घ्यादृषिभिश्चैवेति घ०।

४ दैर्घ्यात् षाष्टाविंशतिविस्तरादिति छ०।

५ सावित्रश्चालयः कुड्या इति ख०। सावित्र इत्यादिः, त्रिगुणोच्छ्रयमित्यन्तः पाठो झ० पुस्तके नास्ति।

६ गर्भपीठसमा इति ख०, घ०, झ० च।

७ सौम्यास्यं द्वे द्वे पश्चात्पुरोमुखमिति ख०। सौम्याख्यं द्वे च पश्चादधोमुखमिति झ०।

८ सावित्रः सालयः कोटीनां नपचा

प्राक्सौम्यस्थे च दण्डाख्यं प्राग्याम्ये वातसञ्ज्ञकं ॥ २५ ॥
आग्नेन्द्रौ गृहवल्याख्यं(१) त्रिशूलं तद्विनिर्द्दिशेत् ।
पूर्वशालाविहीनं(२) स्यात् सुक्षेत्रं वृद्धिदायकं ॥ २६ ॥
याम्ये हीने भवेच्छूली त्रिशालं वृद्धिकृत् परं(३) ।
धनघ्नं जलहीनौकः सुतघ्नं वक्षयन् कृत् ॥ २७ ॥

---

सत्यलोकतः । अपुनर्मारका यत्र ब्रह्मलोको हि स स्मृतः । पादाद्यधस्तु भूर्लोको भुवः सूर्य्याद्ध्रुवः स्मृतः । स्वर्लोको भुवाद्यास्तु नियुतानि चतुर्द्दश । एकदण्डं कटाहेन हतो ब्रह्माण्डविस्तरः । वारिवन्ह्यानलाग्रैस्ततो भूतादिनावधि । हतं दशगुणैरण्डं भूतादिर्महता तथा । दशोत्तराण्यशेषाणि एक कस्यास्महामुने । महान्तश्च समाहत्य प्रधानं समवस्थितं । अनन्तस्य न तस्यान्तः संख्यानं न च विद्यते । हेतुभूतमशेषस्य प्रकृतिः सा परा मुने । असङ्ख्यातानि चाण्डानि तत्र जातानि चेदृशां । दारुण्यग्निर्यथा तैलं तेल मद्वत् पुमानिति । प्रधानेवस्थितो व्यापी चेतनात्मात्मवेदनः । प्रधानञ्च पुमांश्चैव सर्वभूतात्मभूतया । विष्णुशक्त्या महत्-प्राज्ञहृतौ संश्रयधर्म्मिणौ । तयोः सैव पृथग्भावे कारणं संश्रयस्य च । महाख्यं स्वतलञ्चाख्यं पातालं चापि सप्तम । कृष्णपीतारुणाः शुक्लशर्कराशैलकाञ्चनाः । भूम-यस्तेषु चान्येषु सन्ति दैत्यादयः सुखं । पातालानामधश्चान्ते शेषो विष्णोश्च तामसः । गुणानन्त्यान् स चानन्तः शिरसा धारयन्महीं । भुवोधो नरका लोकं नयते स्ववैष्णवः । वारिणा भाविता पृथ्वी यावत्तावन्नभो मतं । सिद्धान्तमस्तु याम्यैव, इन्द्रास्यं यमसूर्य्यकं ।

सप्तस्वेषु क०, ख०, ग०, घ०, ङ०, च०, झ०, चिह्नितपुस्तकेषु साविचः सालयः इत्यतः परं नैष पाठो वर्त्तते । तेषु तु मुद्रितपाठ एव वर्त्तते । पुनः ज०चिह्नित-पुस्तके साविचः सालय इत्यतः परं इन्द्रास्येयमसूर्य्यकमित्यन्तः पाठो नास्ति । ज० चिह्नितपुस्तके य उक्तपाठो दृश्यते तत्र पर्वापरसङ्गतिर्नास्ति । प्रकरणान्तरीय-पाठोयमत्र लेखकभ्रमात् समागत इति भाति ।

१ गृहशल्याख्यमिति ख०, ।

२ पूर्वशालाविहीनमिति ङ० ।

३ याम्ये हीने भवेच्छूली त्रिशालं दितितत्परमिति झ० । याम्येहीने भवेच्छ्ली त्रिशालं वित्तकृत्परमिति ग० ।

इन्द्रादिक्रमतो वच्मि(१) ध्वजाद्यष्टौ गृहाण्यहं ।
प्रक्षालानुखगावासमग्नौ(२) तस्य महानसं ॥ २८ ॥
याम्ये रसक्रिया शय्या धनुःशस्त्राणि रक्षसि ।
धनभुक्त्यम्बुपे शाख्ये(३) सम्यगन्धौ च (४) मारुते ॥ २९ ॥
सौम्ये(५) धनपशू कुर्यादीशे दीक्षावरालयं(६) ।
स्वामिहस्तमितं वेश्म विस्तारायामपिण्डिकं ॥ ३० ॥
त्रिगुणं हस्तसंयुक्तं कलाष्टांशैर्हृतं तथा(७) ।
तच्छेषोयं स्थितस्तेन वायसान्तं ध्वजादिकं ॥ ३१ ॥
अयः पञ्चाग्निवेदेषु रसर्षिवसुतो भवेत् ।
सर्वनाशकरं वेश्म मध्ये चान्ते च संस्थितं ॥ ३२ ॥
तस्माच्च(८) नवमे भागे शुभक्षेत्रिलयो मतः ।
तन्मध्ये मण्डपः शस्तः समो वा द्विगुणायतः ॥ ३३ ॥
प्रत्यगाप्ये चेन्दुयमे(९) हट्ट एव गृहावली ।
एकैकभवनाख्यानि दिक्स्वष्टाष्टकसङ्ख्यया(१०) ॥ ३४ ॥
ईशाद्यदितिकान्तानि फलान्येषां यथाक्रमं(११) ।
भयं नारी चलत्वं च जयो वृद्धिः प्रतापकः ॥ ३५ ॥

---

१ इन्द्रादिक्रमतो वक्ष्येति ख०, छ० च ।
२ प्रक्षालनात्मभागारः समग्नौ इति छ० ।
प्रक्षाल्यानुप्रहावासमग्नौ इति ञ० ।
३ धनभक्त्याम्बुपशाख्ये इति ख०, छ० च ।
(४) शस्यमग्नौ चेति भ० ।
(५) याम्ये इति भ० ।
६ दीक्षासुरालयमिति ख०, ञ०, भ० च ।
७ कलाष्टांशैर्हृतं तथेति ग० ।. कलाष्टांश-
र्हृतं तथेति घ०, ञ० च । कलाष्टां-
शहृतस्तथेति भ० ।
८ तस्मात्तु इति भ० ।
९ प्रागीशे चेन्दुयाम्ये वेति ख० ।
प्रागाप्ये चेन्दुयाम्ये इति छ०, भ० च
१० विस्पष्टाष्टकसङ्ख्ययेति क० ।
११ सर्वनाशकरमित्यादिः, यथाक्र-
मित्यन्तः पाठो ञ० पुस्तके नास्ति ।

धर्मः कलिश्च नैखश्च प्राग्द्वारेष्वष्टसु ध्रुवं।
दाहोऽसुखं सुहृन्नाशो धननाशो मृतिर्द्धनं(१) ॥ ३६ ॥
शिल्पित्वं तनयः स्याच्च याम्यद्वारफलाष्टकं।
आयुःप्राव्राज्यशस्यानि(२) धनशान्त्यर्थसङ्क्षयाः ॥ ३७ ॥
शोषं भोगं चापत्यञ्च(३) जलद्वारफलानि च।
रोगो मदार्त्तिमुख्यत्वं चार्थायुः कृशता मतिः ॥ ३८ ॥
मानश्च द्वारतः पूर्वं(४) उत्तरस्यान्दिशि क्रमात्।

इत्याग्नेये महापुराणे गृहादिवास्तुर्नाम पञ्चाधिकशततमोऽध्यायः ॥

## अथ षड़धिकशततमोध्यायः।



### नगरादिवास्तुः।

ईश्वर उवाच। नगरादिकवास्तुञ्च वक्ष्ये राज्यादिवृद्धये।
योजनं योजनार्द्धं वा(५) तदर्थं स्थानमाश्रयेत् ॥ १ ॥

---

१ धनवाशो मृतिर्धनमिति घ०। धर्म्मः कलिश्चेत्यादिः, मृतिर्धनमित्यन्तः पाठो भ० पुस्तके नास्ति।

२ आयुः प्राव्राज्यशस्यानीति ख०,

ङ० च।

३ भोगं च पत्यं चेति ख०,ङ० च।

४ द्वारतः प्रोक्त इति घ०।

५ योजनार्द्धार्द्धमिति च इति घ०,ङ० च।

अभ्यर्च्य वास्तु नगरं प्राकाराद्यन्तु कारयेत्।
ईशादित्रिंशत्पदके पूर्वद्वारं च सूर्यके ॥ २ ॥
गन्धर्वाभ्यां(१) दक्षिणे स्याद्वारुणे पश्चिमे तथा।
सौम्यद्वारं सौम्यपदे कार्या हट्टास्तु विस्तराः ॥ ३ ॥
येनेभादि सुखं गच्छेत् कुर्याद् द्वारं तु षट्करं।
छिन्नकर्णं विभिन्नञ्च चन्द्रार्द्धाभं पुरं न हि ॥ ४ ॥
वज्रसूचीमुखं नेष्टं(२) सकृद् द्वित्रिसमागमं।
चापाभं वज्रनागाभं(३) पुरारम्भे हि शान्तिकृत् ॥ ५ ॥
प्रार्च्य विष्णुहराकांदीन्नत्वा दद्याद् बलिं बली(४)।
आग्नेये स्वर्णकर्मारान्(५) पुरस्य विनिवेशयेत् ॥ ६ ॥
दक्षिणे नृत्यवृत्तीनां(६) वेश्यास्त्रीणां गृहाणि च।
नटानाञ्चक्रिकादीनां(७) कैवर्त्तादेश्च नैर्ऋते ॥ ७ ॥
रथानामायुधानाञ्च कृपाणानाञ्च वारुणे।
शौण्डिकाः कर्माधिकृता वायव्ये परिकर्म्मिणः(८) ॥ ८ ॥
ब्राह्मणा यतयः सिद्धाः पुण्यवन्तश्च चोत्तरे।
फलाद्यादिविक्रयिण ईशाने च वणिग्जनाः ॥ ९ ॥
पूर्वतश्च बलाध्यक्षा आग्नेये विविधं बलम्।
स्त्रीणामादेशिनो दक्षे काण्डारान्नैर्ऋते न्यसेत् ॥ १० ॥
पश्चिमे च महामात्यान् कोषपालांश्च कारुकान्।

---

१ गन्धर्वाद्या इति ग०, ज० च।
२ सूचीमुखं नष्टमिति भ०, ङ० च।
३ आयतं वज्रनासाभमिति घ०।
चापाभं चक्रनाभाभमिति ङ०।
४ नुत्वा बलात् बलिं बली इति ङ०।
५ आग्नेये तु कर्मकारानिति ख०।
६ दक्षिणे भृत्यधूर्त्तानामिति ज०।
७ नटानां वाह्लिकादीनामिति ख०, ज० च।
८ परिकर्मण इति ङ०, ज० च।

उत्तरे दण्डनाथांश्च नायकद्विजसङ्कुलान् ॥ ११ ॥
पूर्वतः क्षत्रियान् दक्षे वैश्यान्छूद्रांश्च पश्चिमे ।
दिक्षु वैद्यान् वाजिनश्च बलानि च चतुर्द्दिशं ॥ १२ ॥
पूर्वेण चरलिङ्गादीञ्छ्मशानादीनि दक्षिणे ।
पश्चिमे गोधनाद्यञ्च कृषिकर्त्तॄंस्तथोत्तरे ॥ १३ ॥
न्यसेन्म्लेच्छांश्च कोणेषु ग्रामादिषु तथा स्थितिं(१) ।
श्रियं वैश्रवणं द्वारि(२) पूर्व्वे तौ(३) पश्यतां श्रियं ॥ १४ ॥
देवादीनां पश्चिमतः पूर्व्वास्यानि गृहाणि हि ।
पूर्व्वतः पश्चिमास्यानि दक्षिणे चोत्तराननान्(४) ॥ १५ ॥
नाकेशविष्ण्वादिधामानि रक्षार्थं नगरस्य च(५) ।
निर्द्दैवतन्तु नगरग्रामदुर्गगृहादिकं ॥ १६ ॥
भुज्यते तत् पिशाचाद्यै रोगाद्यैः परिभूयते(६) ।
नगरादि सदैवं हि जयदं भुक्तिमुक्तिदं ॥ १७ ॥
पूर्व्वायां श्रीगृहं प्रोक्तमाग्नेय्यां वै महानसं ।
शयनं दक्षिणस्यान्तु(७) नैर्ऋत्यामायुधाश्रयं ॥ १८ ॥
भोजनं पश्चिमायान्तु वायव्यां धान्यसङ्ग्रहः ।
उत्तरे द्रव्यसंस्थानमैशान्यां देवतागृहं(८) ॥ १९ ॥
चतुःशालं त्रिशालं वा द्विशालं चैकशालकं ।
चतुःशालगृहाणान्तु शालालिन्दकभेदतः(९) ॥ २० ॥

---

१ तथा स्थितमिति ख०, घ०, ङ०, छ० च । यथास्थितमिति ज० ।
२ वैश्रवणं वापि इति ग० ।
३ पूर्वत इति ख० ।
४ दक्षिणे चोत्तरेण चेति ख०, ग०, घ० च ।
५ नगरस्य श्रीति ख०, छ० च ।
६ रोगाद्यैरभिभूयते इति ज० ।
७ दक्षिणायां लिति ग०, घ०, ञ० च ।
८ देवतालयमिति ञ० ।
९ शालालिन्दप्रभेदत इति घ० ।

शतद्वयन्तु जायन्ते पञ्चाशत् पञ्च तेष्वपि।
त्रिशालानि तु चत्वारि द्विशालानि तु पञ्चधा॥ २१॥
एकशालानि चत्वारि एकालिन्दानि वच्मि च।
अष्टाविंशदलिन्दानि गृहाणि नगराणि च(१)॥ २२॥
चतुर्भिः सप्तभिश्चैव पञ्चपञ्चाशदेव तु।
षडलिन्दानि विंशैव अष्टाभिर्विंश एव हि(२)॥ २३॥
अष्टालिन्दं भवेदेवं(३) नगरादौ गृहाणि हि।

इत्याग्नेये महापुराणे नगरादिवास्तुर्नाम षडधिक-
शततमोऽध्यायः॥

## अथ सप्ताधिकशततमोऽध्यायः।



### स्वायम्भुवसर्गः।

अग्निरुवाच(४)। वक्ष्ये भुवनकोषञ्च पृथ्वीद्वीपादिलक्षणं।
अग्नीध्रश्चाग्निबाहुश्च वपुष्मान् द्युतिमांस्तथा॥ १॥
मेधा मेधातिथिर्भव्यः सवनः पुत्र एव च(५)।

---

१ गृहाणि नगरादिषु इति भ०। गृहाणि नगराणि तु इति ख०।
२ विंश एव चेति ख०, छ० च।
३ अष्टाभिर्विभजेदेयमिति छ०।
४ ईश्वर उवाचेति ख०, छ० च।
५ सवनः छत्र एव च इति क०।

ज्योतिष्मान् दशमस्तेषां सव्यनामा सुतोऽभवत् ॥ २ ॥
प्रियव्रतसुताः ख्याताः सप्तद्वीपान्ददौ पिता ।
जम्बुद्वीपमथाग्नीध्रे प्लक्षं मेधातिथेर्ददौ ॥ ३ ॥
वपुष्मते शाल्मलञ्च ज्योतिष्मते कुशाह्वयं ।
क्रौञ्चद्वीपं द्युतिमते शाकं भव्याय दत्तवान् ॥ ४ ॥
पुष्करं सवनायादादग्नीध्रेऽदात् सुते शतं(१) ।
जम्बूद्वीपं पिता लक्षं नाभेर्दत्तं हिमाह्वयं ॥ ५ ॥
हेमकूटं किम्पुरुषे हरिवर्षाय नैषधं ।
इलावृते मेरुमध्यं रम्ये नीलाचलाश्रितं(२) ॥ ६ ॥
हिरण्वते श्वेतवर्षं कुरूंस्तु कुरवे ददौ ।
भद्राश्वाय च भद्राश्वं केतुमालाय पश्चिमं ॥ ७ ॥
मेरोः प्रियव्रतः पुत्रानभिषिच्य ययौ वनं ।
शालग्रामे तपस्तप्त्वा ययौ विष्णोर्लयं नृपः ॥ ८ ॥
यानि किम्पुरुषाद्यानि ह्यष्टवर्षाणि सत्तम ।
तेषां स्वाभाविकी सिद्धिः सुखप्राया ह्ययत्नतः ॥ ९ ॥
जरामृत्युभयं नास्ति धर्म्माधर्म्मौ युगादिकं ।
नाधमं मध्यमन्तुल्या हिमाह्वयात्तु नाभितः(३) ॥ १० ॥
ऋषभो मेरुदेव्याञ्च ऋषभाद् भरतोऽभवत् ।
ऋषभो दत्तश्रीः पुत्रे शालग्रामे हरिङ्गतः ॥ ११ ॥
भरताद् भारतं वर्षं भरतात् सुमतिस्त्वभूत्(४) ॥
भरतो दत्तलक्ष्मीकः शालग्रामे हरिं गतः ॥ १२ ॥

---

१ सुतेभ्य उ इति ख०, ङ० च ।
२ रम्ये नीलाचलाश्रियमिति ख०, ङ०, छ० च । रम्यं नीलाचले स्थितमिति ग० ।
३ हिमाह्वयात्कनाभित इति ङ० ।
४ सुमतिस्तत इति ग० ।

स योगी योगप्रस्तावे(१) वक्ष्ये तच्चरितं पुनः।
सुमतेस्तेजसस्तस्मादिन्द्रद्युम्नो ध्यजायत(२)॥ १३ ॥
परमेष्ठी ततस्तस्मात् प्रतीहारस्तदन्वयः।
प्रतीहारात् प्रतीहर्त्ता प्रतिहर्त्तुर्भुवस्ततः॥ १४ ॥
उद्गीतोथ च प्रस्तारो विभुः प्रस्तारतः सुतः(३)।
पृथुश्चैव ततो नक्तो नक्तस्यापि गयः सुतः॥ १५ ॥
नरो गयस्य तनयः तत्पुत्रोऽभूद्विराट् ततः।
तस्य पुत्रो महावीर्यो धीमांस्तस्मादजायत॥ १६ ॥
महान्तस्तत्सुतश्चाभून्मनस्यस्तस्य चात्मजः।
त्वष्टा त्वष्टुश्च विरजा(४)रजस्तस्याप्यभूत् सुतः॥ १७ ॥
सत्यजिद्रजसस्तस्य जज्ञे पुत्रशतं मुने।
विश्वज्योतिःप्रधानास्ते भारतन्तैर्विवर्द्धितं॥ १८ ॥
कृतत्रेतादिसर्गेण सर्गः स्वायम्भुवः स्मृतः।

इत्याग्नेये महापुराणे स्वायम्भुवः सर्गो नाम सप्ताधिकशततमोऽध्यायः॥

## अथाष्टाधिकशततमोऽध्यायः।

### भुवनकोषः।

अग्निरुवाच। जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो महान्।
कुशः क्रौञ्चस्तथा शाकः पुष्करश्चेति सप्तमः॥ १ ॥

---

१ योगप्रस्तारे इति ग०, ज०, झ० च।
२ इन्द्रद्युम्नोभ्यजायतेति ख०, ङ० च।
३ प्रतीहारादित्यादिः, प्रस्तारतः सुत इत्यन्तः पाठो झ० पुस्तके नास्ति।
४ दुष्टादुष्टश्च विरजा इति ख०।

एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समं(१) ॥ २ ॥
जम्बूद्वीपो द्वीपमध्ये(२) तन्मध्ये मेरुरुच्छ्रितः(३)।
चतुरशीतिसाहस्रो भूमिष्ठः(४) षोडशाद्रिराट् ॥ ३ ॥
द्वात्रिंशन्मूर्द्ध्नि विस्तारात् षोडशाधः(५)सहस्रवान्।
भूयस्तस्यास्य(६) शैलोऽसौ कर्णिकाकारसंस्थितः ॥ ४ ॥
हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे।
नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्व्वताः ॥ ५ ॥
लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथापरे।
सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ॥ ६ ॥
भारतं प्रथमं वर्षन्ततः किम्पुरुषं स्मृतं।
हरिवर्षन्तथैवान्यन्मेरोर्द्दक्षिणतो द्विज ॥ ७ ॥
रम्यकं चोत्तरे वर्षं तथैवान्यद्धिरण्मयं(७)।
उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥ ८ ॥
नवसाहस्रमेकैकमेतेषां मुनिसत्तम।
इलावृतञ्च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः ॥ ९ ॥
मेरोश्चतुर्द्दिशन्तत्र नवसाहस्रविस्तृतं(८)।

---

१ दधिदुग्धजलात्मका इति ख, ङ० च।
२ जम्बुद्वीपस्तस्य मध्ये इति ज०।
३ मेरुरुत्थित इति झ०।
४ भूमिष्ठ इति घ०, ज० च। भुवि स्थ इति ङ०।
५ षोडशांश इति झ०।
६ भूपाशस्यास्य इति ख०,ग०,ङ० च।
७ तथैवाथ हिरण्मयमिति ग०।
तथैवाथ हिरण्मयमिति ज०।
८ इलावृतञ्चेत्यादिः, नवसाहस्रविस्तृतमित्यन्तः पाठो ङ० पुस्तके नास्ति।

इलावृतं महाभाग चत्वारश्चात्र पर्व्वताः ॥ १० ॥
विष्कम्भा रचिता मेरोर्योजनायुतविस्तृताः(१)।
पूर्व्वेण मन्दरो नाम दक्षिणे गन्धमादनः ॥ ११ ॥
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः(२)।
कदम्बस्तेषु जम्बुश्च पिप्पलो वट एव च ॥ १२ ॥
एकादशशतायामाः पादपा गिरिकेतवः।
जम्बूद्वीपेति सञ्ज्ञा स्यात् फलं जम्बा गजोपमं॥ १३ ॥
जम्बूनदीरसेनास्थास्त्विदं जाम्बूनदं(३) परं।
सुपार्श्वः पूर्वतो मेरोः केतुमालस्तु पश्चिमे ॥ १४ ॥
वनं चैत्ररथं पूर्व्वे दक्षिणे गन्धमादनः।
वैभ्राजं पश्चिमे सौम्ये नन्दनञ्च सरांस्यथ ॥ १५ ॥
अरुणोदं महाभद्रं संशितोदं(४) समानसं।
शिताभश्चक्रमुञ्जाद्याः पूर्वतः केशराचलाः(५) ॥ १६ ॥
दक्षिणेन्द्रेस्त्रिकूटाद्याः शिशिवासमुखा जले(६)।
शङ्खकूटादयः सौम्ये मेरौ च ब्रह्मणः पुरी ॥ १७ ॥
चतुर्द्दशसहस्राणि योजनानाञ्च दिक्षु च।
इन्द्रादिलोकपालानां समन्तात् ब्रह्मणः पुरः ॥ १८ ॥
विष्णुपादात् प्लावयित्वा चन्द्रं स्वर्गात् पतन्त्यपि।
पूर्वेण प्रीता भद्राश्वाच्छैलाच्छैलाद्गतार्णवं ॥ १९ ॥
तथैवालकनन्दापि दक्षिणेनैव भारतं(७)।

---

१ योजनायुतमुच्छ्रिता इति घ०।
२ सुपार्श्वश्चोत्तरे स्थित इति घ०।
३ रसेनास्याद्धेमजाम्बूनदमिति ख०, ग०, घ०, ङ०, छ० च।
४ असितोदमिति ञ०।
५ पूर्वतः शिशिराचला इति ख०, ग०, घ०, ञ० च।
६ शशिवासमुखा जले इति ख०, घ०, ङ०, छ० च।
७ दक्षिणेन च भारतमिति ख०। दक्षिणेनेति भारतमिति ग०।

प्रयाति सागरं छत्वा सप्तभेदाथ पश्चिमं ॥ २० ॥
अब्धिश्च पञ्चुःसौम्याब्धिं भद्रोत्तरकुरूनपि(१)।
आनीलनिषधायामौ(२) माल्यवद्गन्धमादनौ ॥ २१ ॥
तयोर्म्मध्यगतो मेरुः कर्णिकाकारसंस्थितः।
भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा ॥ २२ ॥
पत्राणि लोकपद्मस्य मर्य्यादाशैलवाह्यतः।
जठरो देवकूटश्च मर्य्यादापर्वतावुभौ(३) ॥ २३ ॥
तौ दक्षिणोत्तरायामावानीलनिषधायतौ।
गन्धमादनकैलासौ पूर्ववच्चायतावुभौ(४) ॥ २४ ॥
अशीतियोजनायामावर्णवान्तर्व्यवस्थितौ।
निषधः पारिपात्रश्च मर्य्यादापर्वतावुभौ ॥ २५ ॥
मेरोः पश्चिमदिग्भागे यथा पूर्वं तथा स्थितौ।
त्रिशृङ्गो रुधिरश्चैव उत्तरौ वर्षपर्व्वतौ ॥ २६ ॥
पूर्व्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ।
जाठराद्याश्च मर्य्यादाशैला मेरोश्चतुर्द्दिशं ॥ २७ ॥
केशरादिषु या द्रोण्यस्तासु सन्ति पुराणि हि।
लक्ष्मीविष्ण्वग्निसूर्य्यादिदेवानां मुनिसत्तम ॥ २८ ॥
भौमानां स्वर्गधर्म्माणां न पापास्तत्र यान्ति च(५)।

---

१ भद्रोद्भवकुरूनपि इति ख०।

२ आलीननिषधायामा इति ख०, ङ० च।

३ रम्यकमित्यादिः, मर्यादापर्वतावुभावित्यन्तः पाठो झ० पुस्तके नास्ति।

४ पूर्वपश्चायतावुभौ इति घ०, ङ०, ञ० च।

५ भौमाः स्वर्गा धर्म्मिणश्च न पापास्तत्र यान्ति च इति ख०, ङ० च। भौमानां स्वर्गधर्म्माणां तनया स्तत्र यान्ति चेति ग०, घ० च। भोमिनां स्वर्गधर्म्माणां तनयास्तत्र यान्ति चेति ञ०।

भद्राश्वेऽस्ति हयग्रीवो वराहः केतुमालके॥ २९॥
भारते कूर्म्मरूपी च मत्स्यरूपः कुरुष्वपि।
विश्वरूपेण सर्वत्र पूज्यते भगवान् हरिः॥ ३०॥
किम्पुरुषाद्यष्टसु क्षुद्भीतिशोकादिकं न च।
चतुर्विंशतिसाहस्रं प्रजा जीवन्त्यनामयाः॥ ३१॥
कृतादिकल्पना नास्ति भौमान्यम्भांसि नाम्बुदाः।
सर्व्वेष्वेतेषु वर्षेषु सप्त सप्त कुलाचलाः॥ ३२॥
नद्यश्च शतशस्तेभ्यस्तीर्थभूताः प्रजज्ञिरे।
भारते यानि तीर्थानि तानि तीर्थानि वच्मि ते॥ ३३॥

इत्याग्नेये महापुराणे भुवनकोषो नामाष्टाधिकशत-
तमोऽध्यायः।

## अथ नवाधिकशततमोऽध्यायः।



### तीर्थमाहात्म्यं।

अग्निरुवाच। माहात्म्यं सर्वतीर्थानां वक्ष्ये यद्भुक्तिमुक्तिदं।
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतं(१)॥ १॥
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते।

१ स्वसंयतमिति घ०।

प्रतिग्रहादुपावृत्तो लघ्वाहारो जितेन्द्रियः ॥ २ ॥
निष्पापस्तीर्थयात्री तु सर्वयज्ञफलं लभेत् ।
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ॥ ३ ॥
अदत्वा काञ्चनं गाश्च दरिद्रो नाम जायते ।
तीर्थाभिगमने(१) तत् स्याद्यद्यज्ञे नाप्यते फलं ॥ ४ ॥
पुष्करं परमं तीर्थं सान्निध्यं हि त्रिसन्ध्यकं ।
दशकोटिसहस्राणि तीर्थानां विप्र पुष्करे ॥ ५ ॥
ब्रह्मा सह सुरैरास्ते मुनयः सर्वमिच्छव: ।
देवाः प्राप्ताः सिद्धिमत्र स्नाताः पितृसुरार्च्चकाः(२) ॥ ६ ॥
अश्वमेधफलं प्राप्य(३) ब्रह्मलोकं प्रयान्ति ते ।
कार्त्तिक्यामन्नदानाच्च निर्म्मलो ब्रह्मलोकभाक्(४) ॥ ७ ॥
पुष्करे दुष्करं गन्तुं(५) पुष्करे दुष्करं तपः ।
दुष्करं पुष्करे दानं वस्तुं चैव सुदुष्करं(६) ॥ ८ ॥
तत्र वासाज्जपाच्छ्राद्धात् कुलानां शतमुद्धरेत् ।
जम्बुमार्गं च तत्रैव तीर्थन्तण्डुलिकाश्रमं ॥ ९ ॥
कण्वाश्रमं(७) कोटितीर्थं नर्म्मदाचार्बुदं परं ।
तीर्थञ्चर्म्मण्वती सिन्धुः सोमनाथः प्रभासकं ॥ १० ॥
सरस्वत्यब्धिसङ्गश्च(८) सागरस्तीर्थमुत्तमं ।

---

१ तीर्थादिगमने इति घ० ।
२ पितृसुरार्च्चिता इति ख० ।
३ अश्वमेधफलञ्चाप्नोति ख०, ग०, ङ० च । अश्वमेधफलं चाप्नोति घ० ।
४ ब्रह्मलोककमिति ख०, ग०, ङ०, छ० च ।
५ दुष्करं गन्तुमिति ख० ।
६ वस्तुं तत्र सुदुष्करमिति ज० ।
७ कण्वाश्रममिति घ० ।
८ सरस्वत्यब्धिसङ्गश्चेति ग०, घ०, ज० च ।

पिण्डारकं द्वारका च गोमती सर्वसिद्धिदा ॥ ११ ॥
भूमितीर्थं ब्रह्मतुङ्गं(१) तीर्थं पञ्चनदं परं।
भीमतीर्थं(२) गिरीन्द्रश्च देविका पापनाशिनी ॥ १२ ॥
तीर्थं विनशनं पुण्यं नागोद्भेदमघार्द्दनं।
तीर्थं कुमारकोटिश्च सर्वदानीरितानि च ॥ १३ ॥
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहं।
य एवं सततं ब्रूयात्सोऽमलः प्राप्नुयाद्दिवं ॥ १४ ॥
तत्र विष्ण्वादयो देवास्तत्र वासाद्धरिं व्रजेत्(३)।
सरस्वत्यां सन्निहित्यां स्नानकृद्ब्रह्मलोकभाक्(४) ॥ १५ ॥
पांशवोपि कुरुक्षेत्रे नयन्ति परमां गतिं।
धर्मतीर्थं सुवर्णाख्यं गङ्गाद्वारमनुत्तमं ॥ १६ ॥
तीर्थं कणखलं पुण्यं भद्रकर्णह्रदस्तथा(५)।
गङ्गासरस्वतीसङ्गं ब्रह्मावर्त्तमघार्द्दनं ॥ १७ ॥
भृगुतुङ्गञ्च कुब्जाम्रं गङ्गोद्भेदमघान्तकं(६)।
वाराणसी वरन्तीर्थमविमुक्तमनुत्तमं ॥ १८ ॥
कपालमोचनं तीर्थन्तीर्थराजं प्रयागकं।
गोमतीगङ्गयोः सङ्गं गङ्गा सर्वत्र नाकदा ॥ १९ ॥
तीर्थं राजगृहं पुण्यं शालग्राममघान्तकं।

---

१ ऋषितीर्थं ब्रह्मतुङ्गमिति घ०। भूमीतीर्थं ब्रह्मपञ्चममिति छ०।
२ भीमातीर्थमिति घ०।
३ वासाद्दिवं व्रजेदिति ज०।
४ ब्रह्मलोकग इति ख०, ग० घ०, ङ०, छ०, ज० च।
५ तत्र कर्णह्रदं तथेति ख०। भद्रकं तु ह्रदं तथेति ग०, ङ० च।
६ गङ्गोद्भेदमवन्तिकामिति ज०।

वटेशं वामनन्तीर्थं कालिकासङ्गमुत्तमं(१) ॥ २० ॥
लौहित्यं करतोयाख्यं शोणञ्चार्षभं परं ।
श्रीपर्वतं कोल्लगिरिं(२) सह्याद्रिर्मलयो गिरिः ॥ २१ ॥
गोदावरी तुङ्गभद्रा कावेरी वरदा नदी ।
तापी पयोष्णी रेवा च दण्डकारण्यमुत्तमं ॥ २२ ॥
कालञ्जरं मुञ्जवटन्तीर्थं सूर्पारकं परं ।
मन्दाकिनी चित्रकूटं शृङ्गवेरपुरं परं(३) ॥ २३ ॥
अवन्ती परमं तीर्थमयोध्या पापनाशनी ।
नैमिषं परमं तीर्थं भुक्तिमुक्तिप्रदायकं(४) ॥ २४ ॥

इत्याग्नेये महापुराणे तीर्थयात्रा माहात्म्यं नाम नवाधिक-
शततमोऽध्यायः ।

## अथ दशाधिकशततमोऽध्यायः ।



### गङ्गामाहात्म्यं ।

अग्निरुवाच । गङ्गामाहात्म्यमाख्यास्ये सेव्या सा भुक्तिमुक्तिदा ।
येषां मध्ये याति गङ्गा ते देशा पावना वराः ॥ १ ॥

---

१ तीर्थं कणखलमित्यादिः, कालिकासङ्गमुत्तममित्यन्तः पाठो ङ० पुस्तके नास्ति ।

२ श्रीपर्वतं कोम्बगिरिरिति ङ० । श्रीपर्वतं कोलगिरिमिति ज० ।

३ शृङ्गवेरपुरं वरमिति ख० ।

४ अग्निरुवाच । माहात्म्यं सर्वतीर्थानामित्यादिः, नैमिषं परमन्तीर्थं भुक्तिमुक्ति प्रदायकं । इत्याग्नेये महापुराणे तीर्थयात्रामाहात्म्यमित्यन्तः पाठो भ० पुस्तके नास्ति ।

गतिर्गङ्गा तु(१) भूतानां गतिमन्वेषतां(२) सदा।
गङ्गा तारयते(३) चोभौ वंशौ नित्यं हि सेविता ॥ २ ॥
चान्द्रायणसहस्राच्च गङ्गाम्भःपानमुत्तमं।
गङ्गां मासन्तु संसेव्य सर्वयज्ञफलं लभेत् ॥ ३ ॥
सकलाघहरी देवी स्वर्गलोकप्रदायिनी।
यावदस्थि च गङ्गायां तावत् स्वर्गे स तिष्ठति ॥ ४ ॥
अन्धादयस्तु(४) तां सेव्य देवैर्गच्छन्ति तुल्यतां(५)।
गङ्गातीर्थसमुद्भूतमृद्धारी सोऽघहार्कवत्(६) ॥ ५ ॥
दर्शनात् स्पर्शनात् पानात्तथा गङ्गेतिकीर्त्तनात्।
पुनाति पुण्यपुरुषान् शतशोथ सहस्रशः ॥ ६ ॥

इत्याग्नेये महापुराणे गङ्गामाहात्म्यं नाम दशाधिकशततमोऽध्यायः।

## अथ एकादशाधिकशततमोऽध्यायः।

### प्रयागमाहात्म्यं।

अग्निरुवाच। वक्ष्ये प्रयागमाहात्म्यं भुक्तिमुक्तिप्रदं परं(७)।
प्रयागे ब्रह्मविष्ण्वाद्या देवा मुनिवराः स्थिताः ॥ १ ॥

---

१ गतिर्गङ्गा ह्येति ग०, ज० च।
२ गतिर्गतिमतामिति झ०।
३ गङ्गा पावयते इति झ०।
४ पतितादयस्तु इति झ०।
५ गच्छन्ति साम्यतामिति घ०, झ० च।
६ गङ्गातीरसमुद्भूतमृद्धारी सोऽघहार्कवदिति ख०,ग०,झ० च। गङ्गातीरसमुद्भूतमृदं मूर्द्ध्ना विभर्त्ति यः। विभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवलमिति ङ०।
७ भुक्तिमुक्तिफलप्रदमिति ग०। भुक्तिमुक्तिप्रदायकमिति झ०।

सरितः सागराः सिद्धा गन्धर्वस्राप्सरस्तथा।
तत्र त्रीण्यग्निकुण्डानितेषां मध्ये तु जाह्नवी॥ २॥
वेगेन समतिक्रान्ता सर्वतीर्थपुरस्कृता।
तपनस्य सुता तत्र त्रिषु लोकेषु विश्रुता॥ ३॥
गङ्गायमुनयोर्मध्यं(१) पृथिव्या जघनं स्मृतं।
प्रयागं जघनस्यान्तरुपस्थमृषयो विदुः(२)॥ ४॥
प्रयागं सप्रतिष्ठानं कम्बलाश्वतरावुभौ।
तीर्थं भोगवती चैव वेदी प्रोक्ता प्रजापतेः॥ ५॥
तत्र वेदाश्च यज्ञाश्च मूर्त्तिमन्तः प्रयागके।
स्तवनादस्य(३) तीर्थस्य नामसङ्कीर्त्तनादपि॥ ६॥
मृत्तिकालम्भनाद्वापि सर्वपापैः प्रमुच्यते।
प्रयागे सङ्गमे दानं श्राद्धं जप्यादि चाक्षयं(४)॥ ७॥
न वेदवचनाद्विप्र न लोकवचनादपि।
मतिरुत्क्रमणीयान्ते प्रयागे मरणं प्रति॥ ८॥
दशतीर्थसहस्राणि षष्टिकोट्यस्तथापराः।
तेषां सान्निध्यमत्रैव प्रयागं परमन्ततः॥ ९॥
वासुकेर्भोगवत्यत्र हंसप्रपतनं परं।
गवां कोटिप्रदानाद्यत् त्र्यहं स्नानस्य(५) तत्फलं॥ १०॥
प्रयागे माघमासे तु एवमाहुर्म्मनीषिणः।

---

१ गङ्गायमुनयोर्मध्ये इति ख०।
२ सरितः सागरा इत्यादिः, उपस्थमृषयो विदुरित्यन्तः पाठो ग० पुस्तके नास्ति।
३ श्रवणादस्येति ख०,ग०,घ०,ङ०,अ०च।
४ श्राद्धद्यादि चाक्षयमिति घ०।
५ त्र्यह स्नातस्येति घ०।

सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा ॥ ११ ॥
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे।
तत्र दानाद्दिवं(१) याति राजेन्द्रो जायतेऽत्र च ॥ १२ ॥
वटमूले सङ्गमादौ मृतो विष्णुपुरीं व्रजेत्।
उर्वशीपुलिनं रम्यं तीर्थं सन्ध्यावटस्तथा ॥ १३ ॥
कोटीतीर्थञ्चाश्वमेधं गङ्गायमुनमुत्तमं।
मानसं रजसा हीनं तीर्थं वासरकं परं(२) ॥ १४ ॥

इत्याग्नेये महापुराणे प्रयागमाहात्म्यं नाम एकादशाधिकशततमोऽध्यायः ॥

## अथ द्वादशाधिकशततमोऽध्यायः।

### वाराणसीमाहात्म्यम्।

अग्निरुवाच। वाराणसी(३) परं तीर्थं गौर्य्यै प्राह महेश्वरः।
भुक्तिमुक्तिप्रदं पुण्यं वसतां गृणतां हरिं(४) ॥ १ ॥
रुद्र उवाच। गौरीक्षेत्रं न मुक्तं वै अविमुक्तं ततः स्मृतं।

१ अत्रदानाद्दिवमिति ख०, ग०, घ०, ङ०, छ०, ज० च।

२ तीर्थं वानरकं परमिति ख०, ग०, घ०, ङ० च।

३ वाराणसीमिति ख०, घ०, च।

४ वसतां शृण्वतां हरिमिति ग०, घ०, ङ० च।

जप्तं तप्तं कृतं दत्तमविमुक्ते किलाक्षयं ॥ २ ॥
अश्मना चरणौ हत्वा वसेत्काशीं न हि त्यजेत्(१) ।
हरिश्चन्द्रं परं गुह्यं गुह्यमाम्रातकेश्वरं(२) ॥ ३ ॥
जप्येश्वरं परं गुह्यं(३) गुह्यं श्रीपर्वतं तथा ।
महालयं(४) परं गुह्यं भृगुचण्डेश्वरं(५) तथा ॥ ४ ॥
केदारं परमं गुह्यमष्टौ सन्त्यविमुक्तके ।
गुह्यानां परमं गुह्यमविमुक्तं परं मम ॥ ५ ॥
द्वियोजनन्तु पूर्वं स्याद् योजनार्द्धं तदन्यथा(६) ।
वरणा च नदी चासीत् तयोर्मध्ये (७)वाराणसी ॥ ६ ॥
अत्र स्नानं जपो होमो मरणं देवपूजनं ॥
श्राद्धं दानं निवासश्च यद्यत् स्याद्भुक्तिमुक्तिदं(८) ॥ ७ ॥

इत्याग्नेये महापुराणे वाराणसीमाहात्म्यं नाम द्वादशाधिकशततमोऽध्यायः ॥

—०○—

१ काशीं तु न हि सन्त्यजेदिति ङ० ।
२ परं गुह्यमविमुक्तं परं ममेति ङ० ।
३ जप्येश्वरं परं गुह्यमिति ख० ।
४ महालयमिति ख० ।
५ भूमिचण्डेश्वरमिति ग० ।
६ तथान्यथेति ङ० ।
७ द्वयोर्मध्ये इति ख० ।
८ यद्यत् स्याद्भुक्तिमुक्तिदमिति ख० ।

## अथ त्रयोदशाधिकशततमोऽध्यायः ।



### नर्मदादिमाहात्म्यम् ।

अग्निरुवाच । नर्मदादिकमाहात्म्यं वक्ष्ये नर्मदा परा(१) ।
सद्यः पुनाति गाङ्गेयं दर्शनाद्वारि नार्म्मदं ॥ १ ॥
विस्ताराद्योजनशतं योजनद्वयमायता ।
षष्टिस्तीर्थसहस्राणि षष्टिकोटग्रस्तथापराः ॥ २ ॥
पर्वतस्य समन्तात्तु तिष्ठन्त्यमरकण्टके(२) ।
कावेरीसङ्गमं पुण्यं श्रीपर्वतमतः शृणु ॥ ३ ॥
गौरी श्रीरूपिणी तेपे तपस्तामब्रवीद्धरिः(३) ।
अवाप्स्यसि त्वमध्यात्म्यं नाम्ना श्रीपर्वतस्तव ॥ ४ ॥
समन्ताद्योजनशतं महापुण्यं भविष्यति ।
अत्र दानन्तपो जप्यं(४) श्राद्धं सर्वमथाक्षयं(५) ॥ ५ ॥

---

१ नर्मदापरमिति ख० ।
२ निर्थास्त्वमरकण्टके इति ख० ।
३ तपस्तामब्रवोद्धर इति ग० ।
४ अत्र दानं तथा जप्यमिति ख० ।
५ सर्वमथाक्षरमिति ख०, ङ० च ।

मरणं शिवलोकाय सर्व्वदं तीर्थमुत्तमं।
हरोऽत्र क्रीडते देव्या हिरण्यकशिपुस्तथा ॥ ६ ॥
तपस्तप्त्वा बली चाभून्मुनयः सिद्धिमाप्नुवन्(१)।

इत्याग्नेये महापुराणे नर्म्मदाश्रीपर्वतादिमाहात्म्यं नाम त्रयोदशाधिकशततमोऽध्यायः ॥

---

## अथ चतुर्दशाधिकशततमोऽध्यायः।

——000——

### गयामाहात्म्यम्।

अग्निरुवाच। गयामाहात्म्यमाख्यास्ये गयातीर्थोत्तमोत्तमं।
गयासुरस्तपस्तेपे तत्तपस्तापिभिः(२) सुरैः ॥ १ ॥
उक्तः क्षीराब्धिगो विष्णुः पालयास्मान् गयासुरात्।
तथेत्युक्त्वा हरिर्दैत्यं वरं ब्रूहीति चाब्रवीत् ॥ २ ॥
दैत्योऽब्रवीत्पवित्रोऽहं भवेयं सर्वतीर्थतः।
तथेत्युक्त्वा गतो विष्णुर्दैत्यं दृष्ट्वा न वा हरिं ॥ ३ ॥
गताः शून्या मही स्वर्गे देवा ब्रह्मादयः सुराः(३)।

---

१ सिद्धिमाप्नुयुरिति भ०।
२ तत्तपस्तापितैरिति ग०, ख०, भ० च।
३ ब्रह्मादयः पुन इति ख०, ग०, घ०, ङ०, ज०, भ० च।

गता जगुर्हरिं देवाः शून्यता भूस्त्रिदिवं हरे ॥ ४ ॥
दैत्यस्य दर्शनादेव ब्रह्माणञ्चाब्रवीद्धरिः ।
यागार्थं दैत्यदेहं त्वं प्रार्थय त्रिदशैः सह ॥ ५ ॥
तच्छ्रुत्वा ससुरो ब्रह्मा(१) गयासुरमथाब्रवीत् ।
अतिथिः प्रार्थयामि त्वान्देहं यागाय पावनं ॥ ६ ॥
गयासुरस्तथेत्युक्त्वापतत्तस्य शिरस्यथ(२) ।
यागं चकार चलिते देहे पूर्णाहुतिं(३) विभुः ॥ ७ ॥
पुनर्ब्रह्माब्रवीद्विष्णुं पूर्णाकालेऽसुरोऽचलत् ।
विष्णुर्धर्ममथाहूय प्राह देवमयीं शिलां ॥ ८ ॥
धारयध्वं सुराः सर्वे यस्यामुपरि सन्तु ते ।
गदाधरो मदीयाथ मूर्त्तिः स्थास्यति सामरैः ॥ ९ ॥
धर्मः शिलां देवमयीं(४) तच्छ्रुत्वाधारयत् परां ।
या धर्माद्धर्मवत्याञ्च जाता धर्मव्रता सुता ॥ १० ॥
मरीचिर्ब्रह्मणः पुत्रस्तामुवाह तपोन्वितां(५) ।
यथा हरिः श्रिया रेमे गौर्य्यां शम्भुस्तथा तया ॥ ११ ॥
कुशपुष्पाद्यरण्याच्च आनीयातिश्रमान्वितः(६) ।
भुक्त्वा धर्मव्रतां प्राह पादसंवाहनं कुरु ॥ १२ ॥
विश्रान्तस्य मुनेः पादौ तथेत्युक्त्वा प्रियाकरोत् ।
एतस्मिन्नन्तरे ब्रह्मा मुनौ सुप्ते तथागतः(७) ॥ १३ ॥
धर्मव्रताचिन्तयच्च किं ब्रह्माणं समर्चये ।
पादसंवाहनं कुर्वे ब्रह्मा पूज्यो गुरोर्गुरुः(८) ॥ १४ ॥

---

१ तच्छ्रुत्वा ससुरो ब्रह्मेति ङ० ।
२ शिरस्तथेति झ० ।
३ देहे पूर्णाहुतिमिति ख०, छ०, ञ० च ।
४ देवमयोमिति ग०, ङ०, छ० च ।
५ तपस्विनामिति झ० ।
६ समानीय श्रमान्वितः इति ञ० ।
७ सुप्ते समागत इति घ०, ङ०, ञ०, झ० च ।
८ धर्मव्रतेत्यादिः, गुरोर्गुरुरित्यन्तः पाठः छ० पुस्तके नास्ति ।

विचिन्त्य पूजयामास ब्रह्मार्घं चार्घ्यकादिभिः।
मरीचिस्तामपश्यत् स(१) शशापोक्तिर्व्यतिक्रमात् ॥ १५ ॥
शिला भविष्यसि क्रोधाद्धर्म्मव्रताऽब्रवीच्च तं(२)।
पादाभ्यङ्गं परित्यज्य त्वद्गुरुः पूजितो मया ॥ १६ ॥
अदोषाहं यतस्त्वं हि शापं प्राप्स्यसि शङ्करात्।
धर्म्मव्रता पृथक् शापं धारयित्वाग्निमध्यगात् ॥ १७ ॥
तपश्चचार वर्षाणां सहस्राण्ययुतानि च।
ततो विष्ण्वादयो देवा वरं ब्रूहीति चाब्रुवन् ॥ १८ ॥
धर्म्मव्रताऽब्रवीद्देवान् शापन्निर्वर्त्तयन्तु मे।
देवा ऊचुः। दत्तो मरीचिना शापो भविष्यति नचान्यथा ॥ १९॥
शिला पवित्रा देवाङ्घ्रिलक्षिता त्वं(३) भविष्यसि।
देवव्रता देवशिला सर्व्वदेवादिरूपिणी ॥ २० ॥
सर्व्वदेवमयी(४) पुण्या निश्चलायासुरस्य हि।
देवव्रतोवाच। यदि तुष्टास्थ मे सर्वे मयि तिष्ठन्तु सर्वदा ॥ २१ ॥
ब्रह्मा विष्णुश्च रुद्राद्या गौरीलक्ष्मीमुखाः सुराः।
अग्निरुवाच। देवव्रतावचः श्रुत्वा तथेत्युक्त्वा दिवङ्गताः ॥ २२ ॥
सा धर्म्मासुरस्यास्य धृता देवमयी शिला।
सशिलश्चलितो दैत्यः स्थिता रुद्रादयस्ततः ॥ २३ ॥
सदेवश्चलितो दैत्यस्ततो देवैः(५) प्रसादितः।
क्षीराब्धिगो हरिः प्रादात् स्वमूर्त्तिं श्रीगदाधरं ॥ २४ ॥
गच्छन्तु भोः स्वयं यास्ये (६) मूर्त्या वै देवगम्यया(७)।

१ मरीचिस्तामपश्यद्दै इति घ०।
२ धर्म्मव्रताऽब्रवीद्दच इति ज०।
३ पवित्रा देवानां वन्दिता त्वमिति घ०।
४ सर्वतीर्थमयी इति घ०, भ० च।
५ [illegible]
६ गच्छेत्युक्त्वा स्वयं गच्छेदिति भ०। गच्छन्तूक्त्वा स्वयं यास्ये इति ख०, ग० च।
७ मूर्त्या देवैकगम्ययेति घ०, ङ० च।

स्थितो गदाधरो देवो व्यक्ताव्यक्तोभयात्मकः॥ २५॥
निश्चलार्थं स्वयं देवः स्थित आदिगदाधरः।
गदो नामासुरो दैत्यः(१) स हतो विष्णुना पुरा॥ २६॥
तदस्थिनिर्मिता(२) चाद्या गदा या विश्वकर्मणा।
आद्यया गदया हेतिप्रमुखा राक्षसा हताः॥ २७॥
गदाधरेण विधिवत्(३) तस्मादादिगदाधरः(४)।
देवमय्यां शिलायां च(५) स्थिते चादिगदाधरे॥ २८॥
गयासुरे निश्चलेऽथ ब्रह्मा पूर्णाहुतिं ददौ।
गयासुरोऽब्रवीद्देवान् किमर्थं वञ्चितो ह्यहं(६)॥ २९॥
विष्णोर्वचनमात्रेण किमस्यान्निश्चलो ह्यहं।
आक्रान्तो यद्यहं देवा दातुमर्हत(७) मे वरं॥ ३०॥
देवा ऊचुः। तीर्थस्य करणे यत्(८) त्वमस्माभिर्निश्चलीकृतः।
विष्णोः शम्भोर्ब्रह्मणश्च क्षेत्रं तव भविष्यति॥ ३१॥
प्रसिद्धं सर्वतीर्थेभ्यः पित्रादेर्ब्रह्मलोकदं।
इत्युक्त्वा ते स्थिता देवा देव्यस्तीर्थादयः स्थिताः॥ ३२॥
यागं कृत्वा ददौ ब्रह्मा ऋत्विग्भ्यो दक्षिणां तदा।
पञ्चक्रोशं गयाक्षेत्रं पञ्चाशत् पञ्च चार्पयेत्॥ ३३॥
ग्रामान् स्वर्णगिरीन्(९) कृत्वा नदीर्दुग्धमधुस्रवाः।
सरोवराणि दध्याज्यैर्बहूनन्नादिपर्वतान्(१०)॥ ३४॥

---

१ नामासुरो रौद्र इति घ०, ञ० च।
२ तदस्थ्नानिर्मिता इति ञ०। तदस्था निर्मिता इति ख०।
३ गदाधरेण देवेनेति ञ०।
४ गदो नामासुर इत्यादिः, तस्मादादिगदाधर इत्यन्तः पाठो ञ० पुस्तके नास्ति।
५ शिलायाम् इति ञ०।
६ वाञ्छितो ह्यहमिति ख०, ङ० च।
७ दातुमर्हथेति ञ०।
८ तीर्थस्य कारणेनेति घ०, ञ० च।
९ ग्रामान् पुष्पगिरीनिति ङ०।
१० दध्याद्यैर्बहुमन्नादिपर्वतानिति ञ०।

कामधेनुं कल्पतरुं सर्वंरत्नगृहाणि च ।
न याचयन्तु विप्रेन्द्रा अल्पानुक्ता(१) ददौ प्रभुः ॥ ३५ ॥
धर्मयागे प्रलोभात्तु प्रतिगृह्य धनादिकं ।
स्थिता यदा गयायान्ते शप्तास्ते ब्रह्मणा तदा ॥ ३६ ॥
विद्याविवर्जिता(२) यूयं तृष्णायुक्ता भविष्यथ ।
दुग्धादिवर्जिता नद्यः शैलाः पाषाणरूपिणः ॥ ३७ ॥
ब्रह्माणं ब्राह्मणाश्चोचुर्भ्रष्टं शापेन चाखिलं ।
जीवनाय प्रसादन्नः कुरु विप्रांश्च सोऽब्रवीत् ॥ ३८ ॥
तीर्थोपजीविका यूयं यावच्चन्द्रार्कं(३) भविष्यथ ।
ये युष्मान् पूजयिष्यन्ति गयायामागता नराः ॥ ३९ ॥
हव्यकव्यैर्धनैः श्राद्धैस्तेषां कुलशतं व्रजेत्(४) ।
नरकात् स्वर्गलोकाय(५) स्वर्गलोकात् पराङ्गतिं ॥ ४० ॥
गयोऽपि चाकरोद्यागं बह्वन्नं(६) बहुदक्षिणं ।
गया पुरी तेन नाम्ना पाण्डवा ईजिरे हरिं ॥ ४१ ॥

इत्याग्नेये महापुराणे गयामाहात्म्यं नाम
चतुर्दशाधिकशततमोऽध्यायः ।

---

१ अल्पानयेति ख० । अपाहृत्य इति ङ० ।
२ मन्त्रादिवर्जिता इति ख० ।
३ तीर्थोपजीवका यूयमाचन्द्रार्कमिति ख० ग०, घ०, ङ० च ।
४ कुलशतं नयेदिति ख० ।
५ स्वर्गलोकं चेति ख०, ग०,घ० च ।
६ बह्वर्थमिति ख०, ङ० च । बहु-लमिति ङ० ।

